


# विद्या प्रसारक मंडळ, ठाणे

| | | |
|---|---|---|
| पुस्तकाचे नाव | : | अथर्ववेद : शौनकीय |
| संपादक | : | विश्वबंधु |
| प्रकाशक | : | होशियापुर : विश्वेश्वरानन्द वैदिक शोध संस्थानम् |
| प्रकाशन वर्ष | : | १९६२ |
| पृष्ठे | : | ४६८ पृष्ठे |


**गणपुस्तक**

**विद्या प्रसारक मंडळाच्या**

**“ग्रंथालय” प्रकल्पांतर्गत निर्मिती**

गणपुस्तक निर्मिती वर्ष : २०१४

गणपुस्तक क्रमांक : ६०

# अथर्ववेदः (शौनकीयः)

स च

पदपाठेन च **श्रीसायणाचार्यकृतभाष्येण** च पाठविमर्शौपयिकेन
पाठभेदादिटिप्पणेन च संयोज्य
भीमदेव-विद्यानिधि-मुनीश्वरदेव-सायुज्यभाजा

**विश्वबन्धुना**

**संपादितः**

तत्र चाऽयम् १९–२० काण्डात्मकः

**४थ–भागीयः १मः खण्डः**

होशिआरपुरम्
विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्
२०१९ वि.

# ATHARVAVEDA (S'AUNAKA)

*With*

**The Pada-pāṭha and SĀYAṆĀCĀRYA'S Commentary**

**EDITED**

**and annotated with text-comparative data from original manuscripts and other Vedic works**

*By*

**VISHVA BANDHU**

*In collaboration with*

BHĪMDEV, VIDYĀNIDHI AND MUNĪSHVARDEV

**PART IV, Fasc. I (Kāṇḍas XIX, XX)**

HOSHIARPUR
**Vishveshvaranand Vedic Research Institute**
1962

प्रथमं संस्करणम्, २०१९ वि.

प्रकाशकृत् —विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्,

(पत्रगृहम्) साधु-आश्रमः, होशिआरपुरम्, (पं., भारतम्)



FIRST EDITION, 1962

*Publishers:* Vishveshvaranand Vedic Research Institute,

(P. O.) Sadhu-Ashram, Hoshiarpur (Pb., India).




Perpared and published under the patronage of the Government of India in the Ministry of Scientific Research and Cultural Affairs, the Government of Panjab, the University Grants Commission, the University of Panjab, the Dayanand Anglo-Vedic College Management, New Delhi, and the Trusts and Charities of Shri Vishva Bandhu, Shri Moolchand Khairaitiram and other donors.

# शोधपत्रम्

## The Corrigenda

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७८८ | १६ | समृद्ध | समृद्धं |
| १७८९ | १ | 'हे होमाः' | हे होमाः |
| ,, | १५ | °पुत्रादिकं | °पुत्रादिकम् |
| १७९० | २८ | °स्यदाः | °स्यदाः |
| १७९१ | ३१ | मंपा. | मंपा.; वैनु. |
| १७९२ | ४ | भेप्रजीः | भेप्रजाः |
| ,, | २६ | आदत्त भे° | आदत भे° |
| १७९३ | ३१ | तर्त° | °तर्त° |
| १७९५ | १ | पा | पावा |
| १७९७ | २५ | प | पै |
| १७९९ | २२ | °वाहुः | °वाहुः |
| ,, | ३० | श्वि' | श्वि'° |
| १८०३ | २९ | अघ्रुधः | °अक्रुधः |
| १८०५ | ६ | °ग्निश्च | °ग्नश्च |
| १८०९ | २८ | जज्ञिरे | जज्ञिरे |
| १८१८ | २५ | पा | पावा |
| ,, | २८ | छवम् | छर्वम् |
| १८२० | १२ | °रूपाणि | °रूपाणि |
| १८२५ | १० | ब्रह्मा | ब्रह्मा |
| १८२६ | ६ | लोक | लोके |
| ,, | २७ | शोध्यः | शोध्यः; |
| १८३४ | १६ | ययम् | यूयम् |
| १८३७ | २८ | °घन | °घ्न |
| १८३८ | २६ | अनिमेषे | अनिमिषे |
| १८४१ | २६ | °मित्राँ | °मित्राँ |
| ,, | २८ | मित्रान् | मित्रान् |
| १८४३ | २९ | हिप्माः | हिप्माः |
| | | >हिप्माः | > हिप्माः |
| १८४६ | २८ | परोक्षात् | पुरोक्षात् |

| पृष्ठ | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८५२ | ४ | प्रतिच्या | प्रतीच्या |
| १८५३ | १० | प्रतिष्ठ्यां | प्रतिष्ठ्यां |
| १८५४ | २५ | दग्न्या° | °दग्न्या° |
| ,, | ,, | तत्रादिग° | तत्रद्रिग° |
| १८५५ | १८ | °च्याः | °च्या |
| १८५७ | २७ | उन्नयः° | उन्नेयः |
| ,, | २८ | क्तः | क्त्रः |
| ,, | २९ | °उन्नेयाः ऽ' | × |
| १८६३ | ६ | स्वाहा', 'पङ्क्तयै | स्वाहा', 'बृहत्यै स्वाहा,' 'पङ्क्त्यै |
| १८६७ | ९ | °तृष्णा° | 'तृष्णा' |
| १८७४ | २९ | बिभर्ति | बिभर्ति |
| १८७७ | २८ | पै २०,१,३ | °तात् p,j |
| १८९८ | २४ | रुक्थ्याया° | रुक्थ्याया |
| ,, | ,, | °रुत्थाऽया° | रुत्थाऽया |
| १९०२ | २५ | असन्ना | असन्नात् |
| ,, | ,, | असन्नौं | असन्नौत् |
| १९०३ | २९ | °स्वानौ | °स्वानौ° |
| ,, | ,, | °स्वनौ | °स्वनौ° |
| १९०४ | ३२ | ट्रंहो° | °ट्रंहो° |
| | | ट्रूंहो° | °ट्रूंहो° |
| | | ट्रूंह° | °ट्रूंह° |
| १९०५ | २९ | भरतस्त्वं | भरतस्त्वं |
| १९०६ | २७ | सू° | सू° |
| १९१० | १५ | उपु° | बुपु° |
| १९१५ | २५ | °शातं | °शातं |
| १९२० | ३० | °यूषः | °युषः |
| १९२३ | ३ | त्रि | त्रिः |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १९२६ | २४ | °स्तीम् | °स्वतीम् | २०१५ | २२ | °कारेणति | कारेणेति |
| १९२९ | २० | [12]तत्त्वं | [13]तत्त्वं | २०१६ | १० | इटो° | इति इटो° |
| १९३२ | २० | तंत्र | तत्र | २०६३ | १ | ग्रुघ् | ग्रुत् |
| १९३३ | २४ | तदांज्जन् | तदाऽज्जन् | २०६५ | ६ | पामा | पाम |
| १९३५ | ६ | देवांज्जन् | देवाऽज्जन् | २०९३ | २० | सं | स |
| १९४३ | २६ | पृतन्यतः | पृतन्यतः | २१०५ | १२ | ओकः | ओकः[1] |
| १९५७ | २४ | वर्षि° | वर्षि° | ,, | २८ | 'प्राहा° | [1]प्राहा° |
| १९६० | २६ | १,३०८३ | वैप १,३०८३ | २१०९ | ११ | ऊं | ऊं |
| १९६१ | २८ | युवर्तिं | युवर्तिं | २१४१ | ६ | असर्यऽः | असूर्यऽः |
| १९६२ | २९ | °वपायतः | °वपायतः | २१५१ | ९ | बाह्वोः | बाह्वोः |
| १९६६ | २७ | अनुऽप्रायसि | अनुऽप्रायसि | २१६५ | ४ | °कार | °कार् |
| ,, | २८ | P; वैतु. | वैतु. P, | २१८६ | ९ | ईमा | ईर्मा |
| १९६८ | २८ | सयोनी> | सयोनि> | २१८८ | २० | इह | इह |
| १९७० | २३ | परि° | प्रति° | २२१६ | १२ | °दिन्द्र | °दिन्द्र |
| १९८३ | २४ | °मित्ये | °मित्यें | २२१७ | ३ | इन्द्राणी° | इन्द्राणी° |
| | | >मित्ते | >°मित्तें | २२१८ | १३ | विष्वा° | विष्वा° |
| १९९६ | ३० | जंघयो° | जंघयो° | २२१९ | १४ | शतुर्दश° | चतुर्दश° |
| १९९९ | २९ | उग्रः | उग्र | २२२३ | ४ | अयभ्या | अयभ्या |
| | | >उग्रः | >उग्रः | २२३३ | १ | जरितर° | जरितर° |
| २००३ | १९ | उप | उप | २२३८ | ६ | कुमरिका | कुमारिका |



अथ

# अथर्ववेदे (शौनकीये)

श्रीसायणाचार्यकृतभाष्यसहिते

१९–२० काण्डात्मकः

४थ-भागीयः १मः खण्डः

अथ

# एकोनविंशं काण्डम्

श्रीगणाधिपतये नमः ।

वागीशाद्याः सुमनसः सर्वार्थानाम् उपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

एकोनविंशे काण्डे सप्ताऽनुवाकाः । तत्र प्रथमेऽनुवाके दश सूक्तानि । तत्र 'सं सं स्रवन्तु' इति प्रथमं सूक्तं सर्वपुष्टिकर्मणि संपाताभिमन्त्रितमैश्रधान्यचरुप्राशने दधिमधुमिश्रसक्तुमन्थप्राशने च विनियुक्तम् । सूत्रितं हि— " 'सं सं स्रवन्तु' इति[1] नाव्याभ्याम् उदकम् आहरतः सर्वतः उपासेचम् । तस्मिन् मैश्रधान्यं श्रृतम् अश्नाति" ( कौसू. १९,४;५ ) इत्यादि । व्रीहियवादीनि मिश्रधान्यानि । 'व्रीहियवगोधूमोपवाकतिलप्रियङ्गुश्यामाका इति मिश्रधान्यानि' ( कौसू. ८,२० ) इति परिभाषासूत्रात्[2] ।

लक्ष्मीकरणेपि एतत् सूक्तम् । सूत्रितं हि—'यस्य श्रियं कामयते ततो व्रीह्याज्यपय आहार्य क्षीरौदनम् अश्नाति' ( कौसू. १९,७ ) इत्यादि ।

तथा अमृतादिमहाशान्तिसाधारणभूतायां शान्तौ शान्त्युदकार्थं नदीह्रदादिभ्यः समाहृतं[3] जलम् अनेन सूक्तेन अभिमन्त्रयेत । तद् उक्तं शान्तिकल्पे—

"तन्त्रभूता[4] महाशान्तिं प्रवक्ष्यामो यथाविधि ।
अन्यासां सर्वशान्तीनाम्[5] अमृतां विश्वभेषजीम् ॥
नदीभ्यो वा ह्रदेभ्यो वा जलं पुण्यं समाहरेत् ।
'सं सं स्रवन्तु' तद् विद्वान् अभिमन्त्रयते[6] ततः ॥" ( शांक २०,१;२ ) इति ।

प्रथमकाण्डे[7] 'सं सं स्रवन्तु सिन्धवः' ( अ १,१५ ) इति समाम्नातं चतुर्ऋचं सूक्तम् 'इहैतु सर्वो यः पशुरस्मिन् तिष्ठतु या रयिः' इति 'तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ( अ १,१५,२;३ ) इति च धनरयिलिङ्गात् सर्वपुष्टिकर्मणि [8]लक्ष्मीकरणे च[8] विनियुक्तम् । अत्रापि 'यज्ञम् इमं वर्धयता गिरः', 'रूपंरूपं वयोवयः' (२,३) इति लिङ्गात् सर्वपुष्टि-

१. स्रवन्ति S'. २. °भाषसू° S'. ३. समाहितं S'. ४. °भूतं S'. ५. विश्वशा° Bol. ६. °मन्त्रयेत S'. ७. सप्तमकाण्डे S'. ८. °करणेति S'.

कर्मणि 'लक्ष्मीकरणे च'[1] विनियुज्यते । अत एव उभयसाधारणं सूक्तप्रतीकं[2] कौशिकः सूत्रितवान्— "'सं सं स्रवन्तु' इति नाव्याभ्याम् उदकम् आहरतः" (कौसू १९,४) इति, "'सं सं स्रवन्तु' तद् विद्वान्" (शांक २०,२) इति च । अतः सूक्तयोः समुच्चयेन विकल्पेन वानुष्ठानम् ।

सं [3]सं [†]स्रवन्तु[3] नद्य१ः[4] सं वाताः सं पतत्रिणः ।
यज्ञमिमं [5]वर्धयता गिरः[5] संस्राव्येण हविषा जुहोमि ॥ १ ॥

सम्ऽसम्[6] । स्रवन्तु । नद्यः । सम् । वाताः । सम् । पतत्रिणः ।
यज्ञम् । इमम् । वर्धयत । गिरः । सम्ऽस्राव्येण । हविषा । जुहोमि ॥ १ ॥

नद्यः नदनशीला निम्नगाः सं सं स्रवन्तु सम्यक् प्रवहन्तु । वाताः च सं स्रवन्तु आनुकूल्येन वान्तु । तथा पतत्रिणः पतत्राणि पक्षा येषां सन्ति ते तदुपलक्षिताः सर्वे प्राणिनः सं स्रवन्तु । सम्यग् अनुकूलस्वभावाश्चरन्तु[7] । यद्वा एते नदीप्रभृतयः सं स्रवन्तु । अन्तर्भावितण्यर्थः । सं स्रावयन्तु । अस्मदभिलषितं फलं प्रयच्छन्तु इत्यर्थः । हे गिरः गीर्यन्ते स्तूयन्त इति गिरः । कर्मणि क्विप् । हे देवाः स्तूयमाना यूयम् इमम् हविःप्रदं यज्ञम् यजमानम् । व्यत्ययेन कर्तरि नङ्प्रत्ययः । यस्य कृते पुण्यादिकर्मशान्तिरनुष्ठीयते तं फलस्वामिनं यजमानं वर्धयत पशुपुत्रादिभिः समृद्धं कुरुत । अपि वा गृणन्तीति गिरः । कर्तरि क्विप् । कर्मप्रयोक्तारः संबोध्यन्ते । अत्र हविषः सद्भावं दर्शयति संस्राव्येणेति । सम्यक् स्रवणं संस्रावः । स्रु[8] गतौ । भावे घञ् । संस्रावम् अर्हतीति संस्राव्यम् आज्यपयःप्रभृति । 'तद् अर्हति' (पा ५,१,६३) इति यत्प्रत्ययः । यद्वा संस्रावणीयेन । संपूर्वात् स्रवतेर्ण्यन्ताद् 'अचो यत्' (पा ३,१,९७) इति यत्प्रत्ययः । तादृशेन हविषा आज्यादिना जुहोमि आज्यादिकं हविः देवान् उद्दिश्य अग्नौ प्रक्षिपामीत्यर्थः । 'तृतीया च होश्छन्दसि' (पा २,३,३) इति हविषेति कर्मणि तृतीया ।

इमं[9] होमा[10] [11]यज्ञमवतेमं[11] संस्रावणा उत ।
यज्ञमिमं वर्धयता गिरः[12] संस्राव्येण हविषा जुहोमि ॥ २ ॥

इमम् । होमाः[13] । यज्ञम् । अवत । इमम् । सम्ऽस्रावणाः । उत ।
यज्ञम् । इमम् । वर्धयत । गिरः । सम्ऽस्राव्येण । हविषा । जुहोमि ॥ २ ॥

---

१. °करणेन S'. २. सूक्तं प्रतीकं S'. ३. पृ ९८ टि ७ द्र. † स्रवन्तिः पै १९,४३,३. ४. सिन्धवः अ १,१५,१ पै. ५. प्रदिवो मे जुषन्ताम् अ. ६. वैतु. शंपा. पपा. सम् । सम् । पृ ९८ पं २४ अपि अयमेव शोधः द्र. ७. °स्वभा नाम्नि S'. ८. स्रु शंपा. पृ. ९९ अपि अयं शोधः द्र. ९. इदं पै १,२४,४. १०. तु. मा. W,RW. वैतु. शंपा. सात. होमां; हव्या पै. ११. यज्ञं पचतेमं पै १९,४३,१५ उपेतनेदं पै १,२४,४. १२. गिरः R. १३. तु. मंपा. वैतु. शंपा. होमाः.

'हे होमाः'[1] आहुतयः यूयम् इमं प्रवर्त्यमानं यज्ञम् आहुतिसमुदायात्मकं कर्म अवत तर्पयत। कतिपयाहुतीनां परित्यागे विपर्यासे वा तत्समग्रिरूपस्य कर्मणो वैगुण्यं भवतीति व्यस्ता एव आहुतयः पृथक् प्रार्थ्यन्ते। यथा वनसभादिषु समूहिवृक्षाद्यभावात् समूहाभावः एवम् अत्रापि। उत अपि च हे संस्रावणाः। कर्मणि ल्युट्प्रत्ययः। संस्रावणीयाः आज्यपयःप्रभृतयः यूयम् इमं यज्ञम् अवत। साधनाभावे साध्यस्य अनिष्पादनात्। अथवा 'हे होमाः'[1] होतव्या देवताः इमं यज्ञम् यष्टारं फलकामं यजमानम् अवत। पशुपुत्रादिभिः सर्वैः फलैः समर्धयत। जुह्वतीति होमा इति प्रयोक्तारो वा संबोध्यन्ते। यज्ञम् इमम् इत्यादिरुत्तरार्धर्चो व्याख्यातः।

रू॒पंरू॑पं॒ वयो॑वयः सं॒रभ्यै॑नं॒ परि॑ ष्वजे।
य॒ज्ञमि॒मं चत॑स्रः प्र॒दिशो॑ वर्धयन्तु संस्रा॒व्ये॑ण ह॒विषा॑ जुहोमि ॥ ३ ॥

रू॒पम्ऽरू॑पम्। वय॑ःऽवयः। स॒म्ऽरभ्य॑। ए॒न॒म्। परि॑। स्व॒जे।
य॒ज्ञम्। इ॒मम्। चत॑स्रः। प्र॒ऽदिश॑ः। व॒र्धय॑न्तु। स॒म्ऽस्रा॒व्ये॑ण। ह॒विषा॑। जु॒हो॒मि॒ ॥३॥

रूपंरूपं वयोवयः। 'नित्यवीप्सयोः' (पा ८,१,४) इति द्विर्वचनम्। "नित्यं वा वयः[2]" 'सप्तदश वयांसि' इति च श्रुतेः। समस्तं पशुपुत्रादिकं अभिलषितं फलं संरभ्य गृहीत्वा एनं कर्मप्रयोजयितारं फलकामं यजमानं परि ष्वजे पशुपुत्रादिफलैः सर्वतः संबद्धं करोमि इति प्रयोक्ता ब्रूते। द्वितीयाटौ° (पा २,४,३४) इति एनादेशः। ष्वञ्ज परिष्वङ्गे। लटि उत्तमैकवचने 'दंशसञ्जस्वञ्जां शपि' (पा ६,४,२५) इति उपधानकारलोपः। कथम् एकेन प्रयोक्त्रा सर्वरूपवयसां स्वीकारः। तत्राह— चतस्रः प्रदिशः प्रकृष्टाः प्राच्यादयो महादिशः तत्रस्था जनाः इमं यज्ञम् यजमानं वर्धयन्तु अभिलषितैः सर्वैः समृद्धं कुर्वन्तु। संस्राव्येणेति पादः पूर्ववत्।

इति एकोनविंशे काण्डे प्रथमेऽनुवाके प्रथमं सूक्तम्।

'शं न आपः' इति सूक्तेन तन्त्रभूतमहाशान्तौ नद्यादिसमाहृतं जलम् अभिमन्त्रयेत। सूत्रितं हि शान्तिकल्पे—

"नदीभ्यो वा ह्रदेभ्यो वा जलं पुण्यं समाहरेत्।
'शं मे स्रवन्तु' तद् विद्वान् अभिमन्त्रयते ततः॥
'शं न आपो हैमवतीः'" (शांक २०,२;३) इति।

शं त॒ आपो॑ हैमव॒तीः 'शमु॑ ते'[3] सन्तू॒त्स्या॑ः।

१. हेम S'. २. नित्यवाङ्मयः S'. ३. शमु तु > शमु ते Dc; शं ते S'.

शं तेे सनिष्यदा[1] आपः [2]शमु ते सन्तु[2] वर्ष्याः ॥ १ ॥

शम् । ते । आपः । हैमऽवतीः । शम् । ऊं इति । ते । सन्तु । उत्स्याः ।

शम् । ते । सनिस्यदाः[3] । आपः । शम् । ऊं इति । ते । सन्तु । वर्ष्याः ॥ १ ॥

शान्तिकर्मकर्ता ऋत्विक् प्रयोजयितारं फलकामं यजमानं संबोध्य आह— हे यजमान ते तव हैमवतीः हिमवतः पर्वताद् आगताः । 'तत आगतः' (पा ४,३,७४) इति अण् । हिमवति भवा वा । 'तत्र भवः' (पा ४,३,५३) इति अण् । 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः । ता आपः शम् सुखकारिण्यो भवन्तु । तथा उत्स्याः उत्सः प्रस्रवणम् तत्र भवाः । 'भवे छन्दसि' (पा ४,४,११०) इति यत् । ता आपः ते तव शं सन्तु सुखकारिण्यो भवन्तु तथा सनिष्यदाः सर्वदा स्यन्दमानाः । स्यन्दतेर्यङ्लुकि[4] अभ्यासस्य छान्दसो निगागमः । सततं स्रवन्त्य[5] आपः ते तव शं[6] भवन्तु । उ अपि च वर्ष्याः वर्षासु भवा आपः ते तव शं[7] सन्तु सुखकारिण्यो भवन्तु ।

शं त आपो धन्वन्याः शं ते सन्त्वनूप्याः ।
शं ते खनित्रिमा आपः शं याः कुम्भेभिराभृताः ॥ २ ॥

शम् । ते । आपः । धन्वन्याः । शम् । ते । सन्तु । अनूप्याः ।

शम् । ते । खनित्रिमाः । आपः । शम् । याः । कुम्भेभिः । आऽभृताः ॥ २ ॥

धन्वन्याः धन्वनि मरुदेशे भवाः । 'भवे छन्दसि' (पा ४,४,११०) इति यत् । 'ये चाभावकर्मणोः' (पा ६,४,१६८) इति प्रकृतिभावात् 'नस्तद्धिते' (पा ६,४,१४४) इति विहितष्टिलोपो न भवति । ता आपः ते तव शं भवन्तु । अनूप्याः अनुगता आपो यस्मिन् देशे । 'ऋक्पूरब्धूःपथामानक्षे' (पा ५,४,७४) इति अकारः समासान्तः । 'ऊदनोर्देशे' (पा ६,३,९८) इति अप्शब्दाकारस्य ऊकारादेशः । अनूपे जलसमृद्धे देशे भवा आपः । पूर्ववद् यत् । ते शं सन्तु । तथा खनित्रिमाः खननेन निर्वर्त्याः कूपतटाकादिस्था आपः ते तव शं भवन्तु । खनतेर्बाहुलकात् त्रिप्रत्ययः । 'आर्धधातुकस्येड् वलादेः' (पा ७,२,३५) इति इडागमः । 'क्त्रेर्मम्नित्यम्' (पा ४,४,२०) इति मप्प्रत्ययस्तद्धितः । तथा कुम्भेभिः कुम्भैः आभृताः आहृता आनीता या आपः सन्ति ता अपि शं भवन्तु । 'हृग्रहोर्भश्छन्दसि' (वा ८,२,३२) इति भः ।

---

१. तु. RW. वैतु. शंपा. सात. सनिष्यदा; °ष्यद् A,D. २. शमु ते सन्तु A,C,D, R,Cs; शमु ते संतु > शमु ते संतु Dc. ३. तु. मंपा. वैतु. शंपा. सनिस्यदाः; सनिऽस्यदाः P,P[2] J. ४. °लुकि S'. ५. स्रवंत S'. ६. सं S'. ७. अथ शंपा.

अनभ्रयः खनमाना विप्रा गम्भीरे अपसः ।
भिषग्भ्यो भिषक्तरा आपो 'अच्छा वदामसि' ॥ ३ ॥[1]

अनभ्रयः । खनमानाः । विप्राः । गम्भीरे । अपसः ।
भिषक्ऽभ्यः । भिषक्ऽतराः । आपः । अच्छ । वदामसि ॥ ३ ॥

अनभ्रयः अभ्रिः खननसाधनं कुद्दालादि तद्रहिताः सन्तः खनमानाः काष्ठ-हस्तपादादिना खननशीला गम्भीरेअपसः[2] गम्भीरे असाध्येपि विषये अपः कर्म येषां ते दुःसाधमपि प्रयोजनं मन्त्रबलात् साधयन्तो विप्राः मेधाविनः । इति सर्वम् ऋत्विग्विशेषणम् । एते वयं भिषग्भ्यः वैद्येभ्योपि[3] भिषक्तराः । भिषजो हि औषधानि[4] अन्यतः समानीय चिकित्सन्ति । अपां[5] तु मध्ये भेषजानि विद्यन्त इति 'लौकिकेभ्य-श्चिकित्सकेभ्यो'[6] विशिष्टा वैद्याः । तथा च निगमः—'अप्सु मे सोमो अब्रवीद् अन्तर्विश्वानि भेषजा ××× 'आपश्च विश्वभेषजीः' ( ऋ १,२३,२० ) इति । तथाविधा आपः । 'अप्तृन्॰' ( पा ६,४,११ ) इति असर्वनामस्थानेपि छान्दसो दीर्घः । अच्छा वदामसि अभिवदामः अभिष्टुमः । 'इदन्तो मसि' ( पा ७,१,४६ ) । 'अच्छ गत्यर्थवदेषु' ( पा १,४,६९ ) इति अच्छशब्दो गतिसंज्ञकः ।

अथवा पूर्वार्धं सर्वम् अब्विशेषणम् । अनभ्रयः अभ्र्यादिसाधनराहित्येन खनमानाः तटद्वयम् अवदारयन्त्यः[7] विप्राः स्वोपजीविनां[8] मेधाजननहेतवः विशेषेण पूर्णा वा गम्भीरे अगाधे स्थाने अपो[9] व्याप्तिर्यासां ता महाह्रदादिषु व्यापन-शीलाः । 'आपः कर्माख्यायां ह्रस्वो नुट् च वा' ( पाउ ४,२०८ ) इति असुन् धातोर्ह्रस्वश्च । नुडागमस्तु विकल्पितः । एवंरूपा या आपः सन्ति ता वैद्येभ्योपि अत्यन्तहितकारि-णीरपः अभिष्टुम इति ।

अपामह दिव्यानामपां[10] स्रोतस्यानाम् । अपामह 'प्रणेजनेश्वा'[11] भवथ वाजिनः[12] ॥४॥

अपाम् । अह । दिव्यानाम्[13] । अपाम् । स्रोतस्यानाम् । अपाम् । अह । प्रऽनेजने[14] ।
अश्वाः । भवथ । वाजिनः ॥ ४ ॥

अहेति विनिग्रहार्थीयः । दिव्यानाम् दिवि भवानाम् अपाम् स्रोतस्यानाम् स्रोतः प्रवाहः । तद्भवानाम् अपाम् तदुभयव्यतिरिक्तानाम् अन्यासाम् अपां प्रणेजने शोधनविषये[15] अश्वाः । लुप्तोपमैषा । अश्वाः तुरगा इव वाजिनः वाजो वेगः तद्वन्तो भवथ

१. अच्छावदामसि RW. २. वैद्य. मंपा. तु. गम्भीरवेपसः ( ऋ १०,६२,५ ).
३. वैद्योपि S'. ४. ओषधानि S'. ५. अप्सुषां S'. ६. °चिकित्सिके° S'.
७. °यंतः S'. ८. जीविना S'. ९. आपो S'. १०. तु. RW. ऋ १०,१२४,९ प्रभृ. वैद्य. शंपा. सात. दिव्याऽनामपां. ११. प्रणेजने° C. १२. पृ. ९६ टि २-४ द्र.
१३. तु. मंपा. शंपा. दिव्याऽनाम्. १४. प्रऽने । जने J. १५. यो नास्ति S'.

इति ऋत्विजः परस्परं ब्रुवते यजमानो वा ऋत्विजो ब्रूते मदर्थं व्याप्रियमाणा यूयं शान्त्युदककर्मणि त्वरमाणा भवतेति[१]।

[२]ता अपः† शिवा[२] [३]अपोऽयक्ष्मंकरणीरपः[३]।
यथैव [४]तृप्यते मयस्तास्त आ दत्त भेषजीः[४] ॥ ५ ॥

ताः। अपः[५]। शिवाः। अपः। अयक्ष्मम्ऽकरणीः। अपः।
यथा। एव। तृप्यते। मयः। ताः। ते। [६]आ। दत्त[६]। भेषजीः ॥ ५ ॥

इदमपि प्रयोजकस्य वाक्यम्। ताः प्रसिद्धा आपः[७] याः शिवाः शिवकारिण्य आपः[७] अयक्ष्मंकरणीः अरोगकारिण्यो या अपः आपः। प्रथमार्थे द्वितीया। 'आढ्यसुभग॰' (पा ३,२,५६) इति विहितः ख्युन्प्रत्ययः अयक्ष्मशब्दोपपदादपि व्यत्ययेन उत्पन्नः। 'खित्यनव्ययस्य' (पा ६,३,६६) इति मुम् आगमः। ता भेषजीः भिषग्वद् [८]आमयनिर्हारिकाः हितकारिणीश्च अपः। 'केवलमामक॰' (पा ४,१,३०) इति ङीप्प्रत्ययः। ते[७] यूयम् प्रयोक्तारः। तच्छब्दस्य प्रथमाबहुवचने रूपम्। न तु युष्मच्छब्दादेशः। निघातस्तु छान्दसः। आ दत्त आनयत। डुदाञ् दाने। लोटि मध्यमबहुवचनम्[९]। 'आङो दोनास्यविहरणे' (पा १,३,२०) इति आत्मनेपदं सर्वविधीनां छन्दसि विकल्पितत्वाद् न भवति। उदकानयने फलं दर्शयन्ति यथैवेति तृतीयपादेन। मयः इति सुखनाम। सुखं यथैव। एवकारो भिन्नक्रमः। सुखमेव येन प्रकारेण तृप्यते तृप्तम् अधिकं भवति। अधिकसुखलाभाय शान्त्युदकम् आनयतेत्यर्थः। यद्वा ते त्वदर्थम् आदत्त आनीतवान् इति प्रयोक्ता स्वात्मानं परोक्षेणाह। 'आङो दः॰' (पा १,३,२०) इति आत्मनेपदम्।

इति प्रथमेनुवाके द्वितीयं सूक्तम्।

'दिवस्पृथिव्याः' इति सूक्तद्वयं मेधाजननकर्मणि विनियुज्यते। एतेन सूक्तद्वयेन मेधाकामः सुप्त्वोत्थाय मुखं हस्तेन प्रक्षालयति। सूत्रितं हि— "'दिवस्पृथिव्याः' इति संहाय मुखं विमार्ष्टि" (कौसू १०,२४) इति।

---

१. भवेति S'. २. शं तु आपः RW. † आपः S, मा. ३. आपोय॰ S; आपोय॰ ॰णीरपः RW.; ॰यक्ष्मं॰ C,D. ४. तृप्यते मयस्तास्त आदुतभेषजीः RW. ॰आदत्त॰ > ॰आदुत॰ B^b; ॰आदत्त भे॰ > ॰आदुत भें॰ K^m; ॰आदुत॰ A,Cs; ॰आदुत भे॰ > ॰आदुत भें॰ Dc, ॰आदुत्त॰ R; ॰आदुत॰ C,D. ५. आपः P. ६. आद। दुत P,P^a,J. ७. वैतु. मंगा. ८. अनर्वनिर्हा॰ S'. ९. ॰वचने S'.

वर्चस्कामोपि अनेन सूक्तद्वयेन दधिमधुनी संपात्य अभिमन्त्र्य अश्नीयात्।

तथा वर्चस्कामः क्षत्रियश्चेद् अनेन सूक्तद्वयेन भक्तमिश्रिते[1] दधिमधुनी संपात्य अभिमन्त्र्य क्षत्रियं प्राशयेत्।

वर्चस्कामो वैश्यशूद्राविश्चेद्[2] अनेन सूक्तद्वयेन केवलम् ओदनं संपात्य अभिमन्त्र्य प्राशयेत्।

सूत्रितं हि— "'प्रातरग्निम्' (अ ३,१६), 'गिरावरगराटेषु' (अ ६,६९), 'दिवस्पृथिव्याः' (अ ९,१) इति दधिमध्वाशयति। कीलालमिश्रं क्षत्रियं कीलालम् इतरान्" (कौसू १२,१५;१६) इति।

यथा नवमकाण्डे समाम्नातयोः 'दिवस्पृथिव्याः' (अ ९,१,१-१०), 'यथा सोमः प्रातःसवने' (अ ९,१,११-२४) इति सूक्तयोः प्रथमसूक्ते 'मधुकशा हि जज्ञे' इति मन्त्रेषु कशेति वाङ्नामलिङ्गाद् द्वितीयसूक्ते 'वर्चस्वतीं वाचम् आवदानि जनाँ अनु' इति वाग्लिङ्गाच्च मेधाजननकर्मणि विनियोगः तथा 'यथा सोमः प्रातःसवने' (अ ९,१,११-२४) इति द्वितीयसूक्ते 'एवा मे अश्विना वर्च आत्मनि ध्रियताम्' इति वर्चोलिङ्गाद् वर्चस्यकर्मणि च विनियोग उक्तः एवम् अत्रापि प्रथमसूक्ते (३) वर्चःसमानार्थमहिमपुष्ट्यादिलिङ्गाद् द्वितीयसूक्ते (४) 'अथो भगस्य नो धेहि' इति लिङ्गाच्च वर्चस्यकर्मणि 'बृहस्पतिर्म आकूतिम् आङ्गिरसः प्रतिजानातु वाचम् एनाम्' इति वाग्लिङ्गाच्च मेधाजननकर्मणि विनियोग उच्यते। एवम् अनयोरेव विनियोगान्तरेषु[3] यथायथं लिङ्गम् अवगन्तव्यम्। अत एव कौशिको भिन्नप्रदेशस्थस्य सूक्तद्वयस्य सर्वत्र विनियोगं सूचयितुं 'दिवस्पृथिव्याः' इति उभयसाधारणं सूक्तप्रतीकं सूत्रयामास। यत्र सूक्तविशेषस्य विनियोगोपेक्षितस्तत्र सूक्तं विशिष्य सूत्रितवान्। यथा वैताने "'दिवस्पृथिव्याः' इति मधुसूक्तेन[4] राजानं संश्रयति" (वैताश्रौ १६,१२) इति।

दिवस्पृथिव्याः पर्यन्तरिक्षाद्वनस्पतिभ्यो[5] अध्योषधीभ्यः।
[6]यत्रयत्र विभृतो† जातवेदास्तत स्तुतो‡ जुषमाणो न एहि[6] ॥१॥

दिवः। पृथिव्याः। परि। अन्तरिक्षात्। वनस्पतिऽभ्यः। अधि। ओषधीभ्यः।
यत्रऽयत्र। विऽभृतः[7]। जातऽवेदाः। ततः। स्तुतः। जुषमाणः। नः। आ। इहि ॥१॥

द्युलोकादीनि अग्नेरुत्पत्तिस्थानानि। अत एव 'जनिकर्तुः प्रकृतिः' (पा १,४,३०) इति अपादानसंज्ञायाम् 'अपादाने पञ्चमी' (पा २,३,२८) इति द्युशब्दादिभ्यः पञ्चमी।

---

1. भक्तिमिश्रिते S'.  2. °शूद्रश्चेद् S'.  3. विनियोगो° S'.  4. मधुयुक्तेन S'.  5. °पतिभ्यो C; °क्षाद् वातात्पशुभ्यो पै २०,२०,१ तैब्रा १,२,१,२२.  6. यत्रयत्र जातवेदः संबभूथ। ततो नो अग्ने जुषमाण एहि' तैब्रा.  † विभ्रतो काठ ७,१३. A,K[m], WM.; विभृतो C,D,R,B[h],V. WM.; विभृतो > विभ्रतो Dc.  ‡ जातवेदस्° W. वैप, १,१३६० e इ.; ततस्तुतो P[2],M; ततस्ततो RW. सा.  7. विभ्रतः P,P[2],J.

दिवः द्युलोकात् पृथिव्याः भूमेः । परिः पञ्चम्यर्थानुवादी अन्तरिक्षात् अन्तरा[1] क्षान्ताद् मध्यमलोकाद् वनस्पतिभ्यः पुष्पैर्विना फलद्भ्यो वृक्षेभ्यः ओषधीभ्यः ओषः पाको धीयत आस्विति ओषध्यः फलपाकान्ताः ताभ्यश्च । अधिः पञ्चम्यर्थानुवादी । द्युलोकादिभ्य उत्पन्नो[2] जातवेदाः जातानि वेत्ति जातैर्विद्यते ज्ञायत[3] इति वा जातवेदाः यत्रयत्र यस्मिन्यस्मिन् स्थाने विभृतः विशेषेण पूर्णो वर्तते । यद्वा विभृतो विहृतो विभक्तो वर्तते ततस्ततः[4] तेभ्यः सर्वेभ्यः स्थानेभ्यः नः अस्मान् जुषमाणः । अन्तर्भावितण्यर्थः । जोषयमाणः प्रीणयन् । 'लक्षणहेत्वोः क्रियायाः' (पा ३,२,१२६) इति हेतौ शानच्प्रत्ययः । अस्मत्प्रीणनाद्धेतोः एहि आगच्छ ।

यस्ते॑ अ॒प्सु म॑हि॒मा यो वने॑षु॒ य ओष॑धीषु प॒शुष्व॒प्स्व१॒न्तः[5] ।
अग्ने॒ सर्वा॑स्त॒न्व१ः[6] सं र॑भस्व॒[7] ताभि॑र्न॒ एहि॑ द्रवि॒णोदा अज॑स्रः ॥ २ ॥

यः । ते॒ । अ॒प्ऽसु । म॒हि॒मा । यः । वने॑षु । यः । ओष॑धीषु । प॒शुषु॑ । अ॒प्ऽसु । अ॒न्तः ।
अग्ने॑ । सर्वाः॑ । त॒न्वः॑[8] । सम् । र॒भ॒स्व॒ । ताभिः॑ । न॒ः । आ । इ॒हि॒ । द्र॒वि॒णः॒ऽदाः । अज॑स्रः ॥२॥

हे अग्ने ते तव यो महिमा अप्सु उदकेषु वर्तते । अग्नेरुदकप्रवेशः श्रूयते 'सोऽपः प्राविशत्' (तै २,६,६,१) इति । दाशतय्यामपि मन्त्रवर्णः— 'ऐच्छाम त्वा बहुधा जातवेदः प्रविष्टम् अग्ने अप्स्वोषधीषु' ( ऋ १०,५१,३ ) इति । यः च वनेषु वर्तते दावाग्निरूपेण । यः च ओषधीषु महिमा फलपाकनिमित्तभूतः । यश्च पशुषु पशूपलक्षितेषु सर्वप्राणिषु वैश्वानरात्मना वर्तते । अप्सु अन्तरिक्षस्थेषु उदकेषु । मेघे इत्यर्थः । तेषु अन्तः मध्ये वैद्युतात्मना यो महिमा वर्तते हे अग्ने सर्वाः अबादिस्थानविशेषनिष्ठमहिमरूपाः तन्वः शरीराणि सं रभस्व[9] संकलय । तत्रतत्र विभक्तास्तनूरेकत्र संमेलयेत्यर्थः । किमर्थं संकलनं तद् आह ताभिरिति । ताभिः सर्वाभिस्तनूभिः सह नः अस्मान् अजस्रः । लिङ्गव्यत्ययः । अजस्रम् अनवरतं द्रविणोदाः धनस्य दाता सन् एहि आगच्छ ।

यस्ते॑ दे॒वेषु॑ महि॒मा स्व॒र्गो[10] या ते॑ त॒नूः पि॒तृष्वा॑वि॒वेश॑ ।
पुष्टि॒र्या ते॑ मनु॒ष्ये॑षु पप्र॒थेऽग्ने॒ तया॑ र॒यिम॒स्मासु॑ धेहि ॥ ३ ॥

यः । ते॒ । दे॒वेषु॑ । म॒हि॒मा । स्वः॒ऽगः । या । ते॒ । त॒नूः । पि॒तृषु॑ । आ॒ऽवि॒वेश॑ ।
पुष्टिः॑ । या । ते॒ । म॒नु॒ष्ये॑षु । प॒प्र॒थे । अग्ने॑ । तया॑ । र॒यिम् । अ॒स्मासु॑ । धे॒हि॒ ॥ ३ ॥

---

१. अन्तरि S'. २. उत्पन्नोऽग्निः बहुना S'. ३. जायत S'. ४. वैद्यु. मैपा. ५. °स्वे३न्तः A,B^h,C,D,R. पशुष्वाविवेश काठ ७,१२. ६. °तन्वा३ A,B^h,C,D,R, WM. ७. भरस्व WM. ८. तन्वाः P. ९. भरस्व S'. १०. स्वर्गे WM, RW.

हे अग्ने ते तव स्वर्गच्छतीति[1] स्वर्गः । 'डोन्यत्रापि दृश्यते' (पा ३,२,४८) इति डप्रत्ययः । दिवः प्रापणार्थं स्वर्लोकं गन्ता यो महिमा देवेषु । विषयसप्तमी । देवविषये वर्तते । यजमानैर्दत्तं हविः देवान् प्रापयितुम् इहलोकसंचारी यो माहात्म्यगुणो वर्तते । या च ते त्वदीया तनूः [2]पितृषु आविवेश पितृषु आविष्टा[2] स्वधाकारेण[3] प्रत्तं कव्यसंज्ञकं हविः पितॄन् प्रापयितुं पितृलोकसंचारिणी वर्तते । या च ते त्वदीया पुष्टिः मनुष्येषु मनुष्योपलक्षितेषु सर्वेषु चराचरात्मकप्राणिषु पप्रथे प्रथिता अशितपीतादिपाककरणाद् मनुष्यादिषु या त्वत्कर्तृका पुष्टिर्वर्तते तया । प्रत्येकविवक्षया एकवचनम् । ताभिस्तनूभिः सह अस्मासु रयिम् धनं धेहि प्रयच्छ ।

श्रुत्कर्णाय कवये वेद्याय [4]वचोभिर्वाकैरुप यामि रातिम्[4] ।
यतो भयमभयं[5] तन्नो अस्त्वव देवानां यज हेडो अग्ने[5] ॥ ४ ॥

श्रुत्ऽकर्णाय । कवये । वेद्याय । वचःऽभिः । वाकैः । उप । यामि । रातिम् । यतः । भयम् । अभयम् । तत् । नः । अस्तु । अव । देवानाम् । यज । हेडः । अग्ने ॥ ४ ॥

हे अग्ने श्रुत्कर्णाय अस्मदीयस्तुतिश्रवणसमर्थकर्णयुक्ताय । शृणोतेः क्विप् । श्रुतौ कर्णौ यस्येति विग्रहः । कवये कविः क्रान्तदर्शी । अतीन्द्रियार्थदर्शिने वेद्याय सर्वैर्ज्ञातव्याय वेदार्हाय वा । 'तद् अर्हति' (पा ५,१,६३) इति यत् । 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी । एवंगुणविशिष्टं त्वां रातिम् अभिलषितफलदानम् उप यामि । याच्ञाकर्मैतत् । उपयाचामीत्यर्थः । याचतेर्लटि अन्त्यलोपश्छान्दसः । कैः साधनैर्याचनं तद् आह— वचोभिः मन्त्ररूपैर्वाक्यैः । [6]वाकैः । एकदेशेन व्यपदेशः[6] । अनुवाकैर्मन्त्रसंघातात्मकैः वाकैर्वक्तव्यैः सूक्तैर्वा । कीदृशी रातिः तत्स्वरूपं दर्शयति— यतः यस्माद् भयं भीतिर्भवति तत् । 'सुपां सुलुक्°' (पा ७,१,३९) इति पञ्चम्या लुक् । तस्माद् अभयम् भयराहित्यं नः अस्माकम् अस्तु भवतु । अथवा तद् यतो भयं तत् सर्वं भयकारणम् अभयम् भयनिमित्तं न भवत्वित्यर्थः । भयहेतौ विद्यमाने कस्माद् अभयप्रार्थनं[7] तत्राह— अवेति । हे अग्ने देवानाम् दीव्यतां हेडः । क्रोधनामैतत् । क्रोधम् । हेडृ अनादरे इत्यस्माद् असुन् । अव यज तिरस्कुरु । ये ये अस्मभ्यं क्रुध्यन्ति तेषां क्रोधं निवारयेत्यर्थः ।

इति प्रथमेनुवाके तृतीयं सूक्तम् ।

'यामाहुतिम्' इति सूक्तस्य मेधाजननकर्मणि वर्चस्यकर्मणि च विनियोगः पूर्वसूक्तेन सह उक्तः ।

---

१. स्वर्गं गच्छ° S'. २. पितृषु पितृषु आविवेश आविश S'. ३. था नास्ति S'. ४. वचोभिर्नाकमुपयामि शंसन् काठ ३५,१. नमोभिर्नाकमुपयामि शंसन् आपश्रौ १४,१७,१. ५. भयमभयं° A,B[b]. 'मभयत्वं नो अस्त्वग्ने देवानामव हेड इयक्ष्व काठ. °तत्कृधी नो ऽग्ने देवानामव हेड इयक्ष्व आपश्रौ.; °हेडोग्ने C. ६. एकदेशेन व्यपदेशः वाकैः S'. ७. ऽभय° S'.

यामाहुतिं प्रथमामथर्वा या जाता या हव्यमकृणोज्जातवेदाः ।
तां त एतां प्रथमो जोहवीमि ताभिष्टुप्तो वहतु हव्यमग्निरग्नये स्वाहा ॥१॥

याम् । आऽहुतिम् । प्रथमाम् । अथर्वा । या । जाता । या । हव्यम् । अकृणोत् । जातऽवेदाः । ताम् । ते । एताम् । प्रथमः । जोहवीमि । ताभिः । स्तुप्तः[1] । वहतु । हव्यम् । अग्निः । अग्नये । स्वाहा ॥ १ ॥

**तिस्रः खलु अग्नेस्तन्वः । देवतारूपा हविःप्रापकदूतरूपा हविःप्रक्षेपाधाराङ्गाररूपा चेति ।** 'तिस्र उ ते तन्वो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन्' ( ऋ ३,२०,२ ) **इति मन्त्रवर्णात् ।** 'तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः । तवाग्ने यज्ञोऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः' ( ऋ १०,५१,९ ) **इत्यत्र[4] अग्नेर्देवतारूपत्वम् आम्नायते । हविःप्रापकदूतरूपत्वम्[5] अग्नेर्देवानां च उक्तिप्रत्युक्तिरूपाभ्यां मन्त्राभ्याम् अवगम्यते—** 'विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि' ( ऋ १०,५२,१ ) **इति ।** 'कुर्मस्त आयुरजरं यद् अग्ने यथा युक्तो जातवेदो न रिष्याः । अथा वहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजात' ( ऋ १०,५१,७ ) **इति । हविःप्रक्षेपाधाररूपत्वं तु सर्वलोकसंप्रतिपन्नम् ।** 'त्वे देवा हविरदन्त्याहुतम्' ( ऋ २,१,१३ ) **इति श्रुतेः । तद् इदम् अत्रोच्यते ।** अथर्वा । 'अथार्वाग् एनम् एतास्वेवाप्स्वन्विच्छेति । तद् यद् अब्रवीद् अथार्वाग् एनम् एतास्वेवाप्स्वन्विच्छेति तद् अथर्वाभवत्' ( गोब्रा १,१,४ ) **इति ब्राह्मणे परब्रह्मस्रष्टा· स्वेवाप्सु परमात्मानम् अन्विष्येति अशरीरया वाचा भृगुं प्रति उक्तम् । तस्माद् अथर्वशब्दवाच्यत्वं परमात्मनोथर्ववेदस्रष्टुराम्नायते । अथर्वा अथर्वशब्दवाच्यः परमात्मा** प्रथमाम् **सर्वसृष्टेः प्राक्कालीनां** याम् आहुतिम् अकृणोत् **स्वसृष्टदेवप्रीणनाम् अकरोत् ।** जातवेदाः **जातानि वेत्ति जातैर्विद्यते ज्ञायत इति वा जातवेदा अग्निः** या । **द्वितीयाया लुक् । याम् अथर्वणा दत्ताम् आहुतिं** जाताय[1] **प्रादुर्भूताय देवगणाय** हव्याम्[6] **होतुं दातुम् अर्हां यथाभागं कल्पनीयाम् अकृणोत् अकरोत् । जुहोतेः अर्हार्थे यत्प्रत्ययः[7]** । 'वान्तो यि प्रत्यये' ( पा ६,१,७९ ) **इति अव् आदेशः ।** ताम् एताम् **आहुतिं** प्रथमः **सर्वेभ्यो यजमानेभ्यः पूर्वभावी सन्** ते । **अग्निः संबोध्यते । विभक्तिव्यत्ययः । त्वयि अथवा ते तव । आस्ये इत्यध्याहारः । जोहवीमि अत्यर्थं जुहोमि । यजमानेन सर्वयष्टृभ्यः पूर्वं देवताः परिग्रहणीया इत्यत्र मन्त्रवर्णः—** 'वसून् रुद्रान् आदित्यान् इन्द्रेण सह देवतास्ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया' ( तैब्रा ३,७,४,३ ) **इति ।** ताभिः **तिसृभिस्तनूभिः सह** स्तुतः[1] **स्तोतृभिरभिष्टुतः** अग्निः **हव्यम्**

---

१. °जाताय Bh,K,V,S, सा.; °थर्वाग्रेजे यया RW. २. °ष्टुतो WM.; हवि-ष्कृतो RW. ३. स्तुप्तः Op,L. ४. इति इत्यत्र S'. ५. °दूतदूतरूप° S'. ६. वैदु. मंपा. ७. यत्प्रत्यये स्वरः?

देवयोग्यं हविः वहतु प्रापयतु देवान् इति । सामान्यप्रतीतावाह अग्नये स्वाहेति । अग्नये अग्निशब्दप्रतिपाद्यायै देवतायै स्वाहा इदं हविः सुहुतम् अस्तु । एवं शरीरत्रययुक्तोऽग्निः अनेन मन्त्रेण प्रतिपाद्यते ।

आकूतिं[1] देवीं[2] सुभगां[3] पुरो [4]दधे चित्तस्य[4] माता सुहवा नो[5] अस्तु ।
[6]यामाशामेमि† केवली सा मे अस्तु विदेयमेनां‡ मनसि प्रविष्टाम्[6] ॥२॥

आऽकूतिम् । देवीम् । सुऽभगाम् । पुरः । दधे । चित्तस्य[7] । माता । सुऽहवा । नः । अस्तु ।
याम् । आऽशाम् । एमि[8] । केवली । सा । मे । अस्तु । विदेयम्[9] । एनाम् । मनसि । प्रऽविष्टाम् ॥२॥

इदमादिभिस्तिसृभिर्ऋग्भिर्वाग्देवता प्रार्थ्यते । आकूतिम्[10] तात्पर्यरूपाम् । लौकिकवैदिकसर्ववाक्यप्रतिपाद्याम् इत्यर्थः । देवीम् द्योतमानां सुभगाम् भगो भाग्यं शोभनभाग्ययुक्ताम् एवंरूपां वाग्देवतां पुरो दधे पुरस्कुर्वे परिचरामि । सर्वेष्वभीष्टकार्येषु वाग्देवतामेव पुरस्ताद् भावयामीत्यर्थः । अनर्थनिवारकं हिते प्रवर्तकम् आप्तं जनं पुरोहितं कुर्वन्ति एवम् अस्माभिः[11] पुरतो निहिता चित्तस्य मनसः माता जननी यथा पुत्रो मातृवशे वर्तते एवं चित्तं स्वप्रभवं[12] नियमयन्ती वाक् नः अस्माकं सुहवा सुष्ठु ह्वातव्या अस्तु भवतु । आह्वानेन अस्मदनुकूला भवत्वित्यर्थः । किं च याम् आशां फलविषयां कामनाम् एमि प्राप्नोमि सा कामना मे मम केवली अस्तु असाधारणी[13] भवतु । [14]मदन्यं न[14] कामयताम् इत्यर्थः । 'केवलमामक°' (पा ४,१,३०) इति केवलशब्दाच्छन्दसि ङीप् । न केवलं कामना किं तु मनसि प्रविष्टाम् निहितां सर्वदा मनसि प्रवर्तमानाम् एनां फलविषयां कामनां विदेयम् फलपर्यवसायिनीं लप्सीय । विदेर्लाभार्थाद् आशीर्लिङि 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति अङ्प्रत्ययः । ङित्त्वात् लघूपधगुणाभावः ।

आकूत्या नो बृहस्पत आकूत्या न उपा गहि ।
अथो भगस्य[15] नो धेह्यथो नः सुहवो[16] भव ॥ ३ ॥

आऽकूत्या । नः । बृहस्पते । आऽकूत्या । नः । उप । आ । गहि ।
अथो इति । भगस्य । नः । धेहि । अथो इति । नः । सुऽहवः । भव ॥ ३ ॥

---

१. आकूतीं S. २. देवीं पै १२,२४,७. ३. मनसः तैब्रा २,५,३,२. ४. दधे चित्तस्य A,R,C,D Bᵇ,WM.; °यज्ञस्य तैब्रा. ५. मे तैब्रा. ६. यदिच्छामि मनसा सकामः । विदेयमेनद् धृदये निविष्टम् तैब्रा २,५,३,२. † तु. RW, वैतु. शंपा. सात. °मेमि ‡ तु. तैब्रा. RW. वैतु. शंपा. सात. °स्तु विदेय°. ७. चित्तस्य P. ८. तु. मंपा. वैतु. शंपा. पुमि. ९. तु. मंपा. वैतु शंपा. विदेयम्. १०. आकूतीं S'. ११. इति अस्माभिरेवं S'. १२. स्वप्रणवं S'. १३. °धारणं S'. १४. मद्व्यन्येन S'. १५. भगस्य Bᵇ,C,D,R,Sᵐ,Cs. १६. सुभगो पै १९,२४,८.

हे बृहस्पते बृहतां देवानां हितोपदेष्टृत्वेन पालक एतन्नामक देव आकूत्या सर्ववाक्यतात्पर्यार्थरूपया वाचा सह नः अस्मान् उपा गहि वाग्देवताम् अस्माकम् अनुकूलयितुम् उपागच्छ । गमेर्लोटि 'बहुलं छन्दसि' (पा २,४,७३) इति शपो लुक् । हेर्ङित्त्वाद् 'अनुदात्तोपदेश°' (पा ६,४,३७) इति अनुनासिकलोपः । 'असिद्धवदत्राभात्' (पा ६,४,२२) इति अनुनासिकलोपस्य असिद्धत्वाद् 'अतो हेः' (पा ६,४,१०५) इति हेर्लुक् न भवति । एतदेव आदरार्थं पुनरुच्यते—आकूत्या नः उपागहीति । अथो अपि च भगस्य भाग्यम् । 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४.३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी । 'चतुर्थ्यर्थे बहुलं छन्दसि' (पा २,३,६२) इति षष्ठी । नः अस्मभ्यं देहि[१] यच्छ । एतत् सर्वं बृहस्पतेराभिमुख्येन विना न[२] घटत इति तदेव प्रार्थ्यते अथो न इति चरमपादेन । अथो अपि च नः अस्माकं सुहवः सुष्ठु ह्वातव्यः आह्वानमात्रेणानुकूलो भव ।

बृहस्पतिर्म आकूतिमाङ्गिरसः प्रति जानातु वाचमेताम् ।
यस्य देवा [३]देवताः संबभूवुः[३] स सुप्रणीताः[४] कामो अन्वेत्वस्मान्[५] ॥४॥

बृहस्पतिः । मे । आऽकूतिम् । आङ्गिरसः । प्रति । जानातु । वाचम् । एताम् । यस्य । देवाः । देवताः । सम्ऽबभूवुः[६] । सः । सुऽप्रनीताः । कामः । अनु । एतु । अस्मान् ॥४॥

आङ्गिरसः अङ्गिरसां पुत्रः बृहस्पतिः । बृहस्पतेरङ्गिरसः पुत्रत्वम् ऐतरेयब्राह्मणे समाम्नायते— 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् । यद् अङ्गाराः पुनरवशान्ता उददीप्यन्त तद् बृहस्पतिरभवत् (ऐब्रा ३,३४) इति । तादृशो देवः आकूतिम् सर्वाभिप्रायरूपाम् एतां सकलश्रुतिपुराणादिप्रसिद्धां वाचम् वाग्देवतां मे । 'क्रियार्थोपपदस्य°' (पा २,३,१४) इति चतुर्थी । मह्यं दातुं प्रति जानातु स्मरतु । 'संप्रतिभ्याम् अनाध्याने' (पा १,३,४६) इति अनाध्यान इति निषेधात् प्रतिपूर्वात् जानातेरात्मनेपदं न भवति । अर्थिनं प्रति दातव्यस्मरणं प्रदानान्तं भवतीति तदेव प्रार्थ्यते । यस्य बृहस्पतेः । वश[७] इति अध्याहारः । देवाः देवताश्च स्त्रीपुरुषात्मना प्रसिद्धाः सकला देवताः सुप्रणीताः येन बृहस्पतिनैव कार्येषु सुष्ठु प्रणीयमाना देवताः संबभूवुः संभूताः संगता ऐकमत्यं प्राप्ताः सकला देवता यस्य वशे वर्तन्ते । स कामः काम्यमानफलप्रदाता बृहस्पतिः अस्मान् कामयमानान् अन्वेतु[१] फलप्रदानाय अभिमुखम् आगच्छतु ।

इति प्रथमेनुवाके चतुर्थं सूक्तम् ।

'इन्द्रो राजा' इति एकर्चेन सूक्तेन धनकामः इन्द्रं यजेत उपतिष्ठेत वा ।

---

१. वैतु. मंपा. २. नन S'. ३. देवताः संबभूवुः Bᵇ,C,D,R,Sᵐ; देवताः संबभूवुः>देवताः संबभूवुः Dc. ४. सुप्रणीतः पै १९,२४,९; सुप्रणीतिः RW. ५. अन्वेत्व° S', ६. सम् । बभूवुः P,J. ७. वंश S'.

इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि[1] विषुरूपं यदस्ति[2] ।
ततो ददाति दाशुषे वसूनि चोदद् राध उपस्तुतश्चिदर्वाक्[3] ॥ १ ॥

इन्द्रः । राजा । जगतः । चर्षणीनाम् । अधि । क्षमि । विषुऽरूपम् । यत् । अस्ति ।
ततः । ददाति । दाशुषे । वसूनि । चोदत् । राधः । उपऽस्तुतः । चित् । अर्वाक् ॥१॥

जगतः त्रैलोक्यस्य चर्षणीनाम् । मनुष्यनामैतत् । मनुष्योपलक्षितानां दैवीनां मानुषीणां च प्रजानां राजा स्वामी इन्द्रः परमैश्वर्यसंपन्नो देवः दाशुषे हविर्दत्तवते जनाय वसूनि धनानि ततः तस्मात् । आनीयेति अध्याहारः । ल्यब्लोपे पञ्चमी । ददाति ददातु । तत इत्युक्तं किं तद् इति तद् आह— क्षमि क्षमायां पृथिव्याम् । क्षमाशब्दात् सप्तम्येकवचने 'आतः' ( पा ६,४,१४० ) इति योगविभागाद् आकारलोपः । अधिः सप्तम्यर्थानुवादी । विषुरूपम् नानारूपं यद् अस्ति तस्माद् ददातु इत्यन्वयः । एतदेवाह चोददिति । उपस्तुतः अस्माभिरभिष्टुतः सन् । चिच्छब्द एवार्थे । अर्वाक् अस्मदभिमुखं राधः धनं चोदत् चोदयेत् प्रेरयेत् प्रयच्छतु इति यावत् । चुद प्रेरणे । अस्माण्ण्यन्ताल्लेटि 'छन्दस्युभयथा' (पा ३,४,११७) इति लेटि आर्धधातुकत्वात् 'णेरनिटि' ( पा ६,४,५१ ) इति णिलोपः । 'लटोऽडाटौ' ( पा ३,४,९४ ) इति अडागमः ।

इति प्रथमेऽनुवाके पञ्चमं सूक्तम् ।

'सहस्रबाहुः पुरुषः' इति सूक्तद्वयं पुरुषमेधे क्रतौ पुरुषपश्वनुमन्त्रणे विनियुक्तम् । 'पुरुषमेधोऽश्वमेधवच्चैत्र्याः पुरस्तात्' इति प्रक्रम्य वैताने सूत्रितम्— " 'स्नातम् अलंकृतम् उत्सृज्यमानं 'सहस्रबाहुः पुरुषः' ( अ १९,६ ), 'केन पार्ष्णी' ( अ १०,२ ) इत्यनुमन्त्रयते" ( वैताश्रौ ३७,१०;१९ ) इति ।

तथा एतस्य सूक्तद्वयस्य शनैश्चरग्रहदेवत्यहविराज्यहोमे समिदाधानोपस्थानयोश्च विनियोगः । "अथाज्यभागान्ते 'विषासहिम्' (अ १७,१) इत्यादित्याय हविषो हुत्वाज्यं जुहुयात् समिध आधायोपतिष्ठते" इति प्रक्रम्य शान्तिकल्पे सूत्रितम्— 'सहस्रबाहुः पुरुषः' ( अ १९,६ ), 'केन पार्ष्णी' ( अ १०,२ ), 'प्राणाय नमः' ( अ ११,६ ) इति शनैश्चराय" ( शाक १५ ) इति । सौवर्णभूमिदानेऽपि एतत् सूक्तद्वयम् आज्यहोमे विनियुक्तम् । 'अथ रोहिण्यां सकलायाम् उपोषितो ब्रह्मा इति प्रक्रम्य परिशिष्टेऽभिहितम्— 'अन्वारभ्याथ जुहुयात् कामसूक्तं कालसूक्तं पुरुषसूक्तम् ××× । अथ सुवर्णमयीं भूमिम्' इत्यादि ( अप १०,१,६-८ ) इति ।

सर्वातिशायित्वसर्वभूतात्मकत्वकामेन नारायणाख्येन पुरुषेण अनुष्ठितस्य पुरुषमेधक्रतोः प्रतिपादकत्वात् जगत्कारणस्य आदिनारायणपुरुषस्य प्रतिपादकत्वाद् वा एतत् पुरुषसूक्तम् इति उच्यते । अतः अस्य सूक्तस्य द्विविधोऽर्थः आधियज्ञिक

---

१. क्षेमो विषुरूपं[3] यदस्य कौ ३,१,२.   २. °स्तुतं चि[3] कौ.   ३. °यज्ञक S'.

एकः आध्यात्मिकोपरः[1]। पुरुषमेधविधायकं वाजसनेयकब्राह्मणम्[2] एवम् आम्नायते— 'पुरुषो ह वै [3]नारायणोकामयत । अतितिष्ठेयं[3] सर्वाणि भूतानि अहमेवेदं सर्वं स्याम् इति । स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुम् अपश्यत् । तम् आहरत् । तेनायजत । तेनेष्ट्वात्यतिष्ठत् सर्वाणि भूतानि । इदं सर्वम् अभवत्' ( माश १३,६,१,१ ) इति ।

सहस्रबाहुः[4] पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं [5]विश्वतो वृत्वात्यतिष्ठद्[5] दशाङ्गुलम् ॥ १ ॥

सहस्रऽबाहुः । पुरुषः । सहस्रऽअक्षः । सहस्रऽपात् ।
सः । भूमिम् । विश्वतः । वृत्वा । अति । अतिष्ठत् । दशऽअङ्गुलम् ॥ १ ॥

पुरुषसंज्ञापेक्षितावरणस्थानीयो देहविशेषो यज्ञानुष्ठातुर्नारायणपुरुषस्य रूप्यते । यथा परोक्षस्याग्नेः प्रत्यक्षैरग्निभिः स्तवः तद्वत् परोक्षस्यादिपुरुषस्य लौकिकैः सहस्रबाहुत्वं बह्वक्षिपादत्वं[6] च उच्यते । सहस्रबाहुः सहस्रशब्दस्य उपलक्षणत्वाद् अनन्तैर्बाहुभिर्युक्तः सहस्राक्षः बहुभिरक्षिभिरुपेतः । 'बहुव्रीहौ सक्थ्यक्ष्णोः°' ( पा ५,४,११३ ) इति षच् समासान्तः । सति शिष्टः समासान्तस्वरः प्रवर्तते । सहस्रपात् अनेकचरणः । 'संख्यासुपूर्वस्य' (पा ५,४,१४०) इति पादस्य लोपः समासान्तः । एवंरूपो यः पुरुषः यज्ञानुष्ठाता नारायणाख्यः पुरुषो वर्तते स पुरुषः भूमिम् सप्तसमुद्रद्वीपां[7] विश्वतः सर्वतो वृत्वा महिम्ना व्याप्य दशाङ्गुलम् । दशाङ्गुलयः[8] प्रमाणं यस्येति आर्हीयस्य ठकः 'अध्यर्धपूर्वद्विगोः°' (पा ५,१,२८) इति लुक् । 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' (पा ५,४,८६) इति अच् समासान्तः । अत्र दशाङ्गुलशब्देन हृदयाकाशम् उच्यते । तद् अत्यतिष्ठत् । पूर्वं हृदयाकाशे परिच्छिन्नस्वरूपः सन् स्वानुष्ठितक्रतुसामर्थ्यात् परिच्छिन्नाकारतां परित्यज्य सर्वातिशायिस्वरूपोभवद् इत्यर्थः । अध्यात्मपक्षे सर्वप्राणिसमष्टिरूपः सूत्रात्मा प्रतिपाद्यते । सहस्रबाहुः ये व्यष्टिभूतसर्वप्राणिनां बाहवस्ते सर्वे सूत्रात्मदेहान्तःपातित्वात् तदीया एवेति सहस्रबाहुत्वम् । एवम् अक्षिषु पादेष्वपि योजनीयम् । यद्वा सर्वत्र बाह्वादिसाध्यबहुकार्यसंभवात् तेषां सहस्रत्वव्यपदेशः । अत एव इमम्[9] अर्थम् अभिप्रेत्य अन्यत्राम्नायते—'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्' ( ऋ १०.८१,३ ) इति । पुरुषः पुरि देहे शेत इति पुरुषः । पृषोदरादिः । सर्वप्राणिदेहावस्थितः पूर्णो वा सहस्राक्षः सहस्रपात् । एवंरूपो यो वर्तते स पुरुषः भूमिम् । उपलक्षणम् एतद् अवादीनां भूतानाम् । सकलभूतकार्यब्रह्माण्डं तदन्तर्गतान्[10] भूम्यादीन् विकारान् वा विश्वतः सर्वतो वृत्वा मृदिव घटादीन् व्याप्य दशाङ्गुलम् दशाङ्गुलिप्रमाणं

---

१. °ध्यात्मको° S'. २. °नेयिक° S'. ३. °कामयतातिष्ठेयं S'. ४. सहस्रशीर्षा ऋ १०,९०,१ मा ३१,१ तैआ ३,१२,१; सहस्रशीर्षाः कौ ३,४,३ ५. सर्वतो वृत्वा कौ.; सर्वत स्पृत्वा° मा. तैआ. ६. °क्षिकापाद° S'. ७. सप्तसमुद्र° S'. ८. °लिः S'. ९. किमम् S'. १०. स्वदन्त° S'.

देशम्[1] अत्यतिष्ठत् अतिक्रम्य अवस्थितः। दशाङ्गुलम् इति उपलक्षणम्। ब्रह्माण्डाद् बहिरपि सर्वतो व्याप्य अवस्थितः। एकेनांशेन ब्रह्माण्डं व्याप्य दशभिरंशैः कार्यप्रपञ्चासंस्पृष्टः स्वप्रतिष्ठो वर्तत इत्यर्थः।

त्रिभिः पुद्भिर्द्यामरोहत्[2] पादस्येहाभवत्[3] पुनः।
तथा[4] व्यक्रामद्[5] विष्वङशनानशने[6] अनु[6] ॥ २ ॥

त्रिऽभिः। पत्ऽभिः। द्याम्। अरोहत्[7]। पात्। अस्य[8]। इह। अभवत्। पुनः।
तथा। वि। अक्रामत्। विष्वङ्। अशनानशने इत्यशनऽअनशने[9]। अनु ॥ २ ॥

सोयं यज्ञानुष्ठाता नारायणपुरुषः त्रिभिः पद्भिः पादैः। 'पद्दन्नोमास्°' (पा ६,१,६१) इत्यादिना पादशब्दस्य पद्भावः। द्याम् दिवं स्वर्गलोकम् आरोहत्[10] आरूढवान् आक्रान्तवान्। अस्य[10] पुरुषस्य पादः[11] चतुर्थः इह भूलोके पुनरभवत्। पुनःपुनराविर्भवति[11] प्रकाशते। पादचतुष्टयेन सर्वलोकव्याप्तिमेव दर्शयति— तथा तेन उक्तेन प्रकारेण अशनानशने अश्नातीति अशनम्। 'कृत्यल्युटो बहुलम्' (पा ३,३,११३) इति कर्तरि ल्युट्। अनशनम् अनश्नत् अशनानशने वस्तुनी अनु। लक्षणार्थे अनुः कर्मप्रवचनीयः। अशना मनुष्यतिर्यगादयः। अनशना[12] देववृक्षादयः। तान् अभिलक्ष्य विष्वङ् सर्वतोञ्चनः विश्वव्यापनः व्यक्रामत् विक्रान्तवान्। अध्यात्मपक्षे सोयम् उदीरितस्वरूप आदिपुरुषः त्रिभिः पद्भिः पादैः अंशैः संसारस्पर्शरहितः द्याम् दिवं द्योतनात्मकं स्वप्रकाशस्वरूपम् आरोहत् आरूढवान् आस्थितवान्। यद्यपि 'सत्यं ज्ञानम् अनन्तं ब्रह्म' (तैआ ८,१,१) इत्याम्नातस्य परब्रह्मणः इयत्ताया अभावाद् अंशचतुष्टयं न निरूपयितुं शक्यं तथापि जगद् इदं ब्रह्मस्वरूपापेक्षया अत्यल्पम्[13] इति विवक्षितुं पादत्वोपन्यासः। स पुरुषः संसारस्पर्शरहितः ज्ञानबहलस्वरूपो द्याम् आरोहत् अज्ञानकार्यात् संसाराद् बहिर्भूतः सन् अत्रत्यैर्गुणदोषैरस्पृष्टः स्वस्वरूपे वर्तत इत्यर्थः। अस्य पुरुषस्य योयं पादः लेशश्चतुर्थः सोयम् इह जगति पुनरभवत् सृष्टिसंहाराभ्यां पुनःपुनराविर्भवति। अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तम्—

'विष्टभ्याहम् इदं कृत्स्नम् एकांशेन स्थितो जगत्' (भगी १०,४२) इति।

---

१. दशम् S'. २. त्रिपादूर्ध्व उदैत् पुरुषः ऋ १०,९०,४ मा ३१,४ कौ ३,४,४. तैआ ३,१२,२ °मारोहत् K,V, सा. ३. पादःस्ये° > पादोऽस्ये° Sm; पादोऽस्ये° ऋ. मा. कौ. तैआ. ४. ततो ऋ मा तैआ. ५. विष्वङ् व्यक्रामत्साशना° ऋ. मा. तैआ.; °शनानशने A,Bh,K,KmC,D,R,Sm,V,Dc. † व्यक्रमत् A,Sm. ६. अभि ऋ. मा. तैआ. कौ. ७. आरोहत् P. ८. पादस्य P,P², J. ९. अशनानशने इत्यशनऽअशने P,J; अशनानशने इत्यशन् ऽअनशने P². १०. नैतु मंपा. ११. पुनःपुनः पुनरा° S'. १२. अमनारम्य S'. १३. अपि S'.

तथा तेन प्रकारेण तुरीयेण पादेन स पुरुषो विष्वङ् विष्वगञ्चनः अशनानशने अनु स्थावरजङ्गमात्मकं जगद् अभिलक्ष्य व्यक्रामत्। अथवा चेतनाचेतनात्मकम् उभयविधं जगद् यथा स्यात् तथा पुरुषः स्वयमेव द्विविधो[1] भूत्वा व्याप्तवान् इति। यद्येकस्मिन् कल्पे एकस्य पादस्य जननमरणयुक्तसर्वभूतात्मकत्वं तर्हि कल्पान्तरेषु पादत्रयमध्ये एकैकस्य सर्वभूतात्मकत्वं संभवति। तथा च सति अंशचतुष्टयात्मकस्य परब्रह्मणः सर्वजगदात्मकत्वसंभवेन सांसारिकसुखदुःखादिद्वन्द्व-संस्पर्शो भविष्यति इत्येषा शङ्का अंशत्रयेण द्याम् आरोहत् इह पुनरभवत् इत्यनेन अपाक्रियते। तथा हि अंशत्रयात्मकं ब्रह्म सर्वदा स्वप्रतिष्ठं संसारस्पर्श-रहितं सच्चित्सुखलक्षणं वर्तते। एकांशस्तु पुनःपुनर्जगदात्मना विवर्तेत इति। यः पूर्वकल्पे जगदात्मा विवृत्तः[2] स एव कल्पान्तरेपि सर्वभूतात्मना विवर्तते नान्योंश इति।

[3]तावन्तो अस्य महिमानस्ततो[3] ज्यायांश्च पूरुषः[4]।
पादोस्य विश्वा[5] भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

तावन्तः। अस्य। महिमानः। ततः। ज्यायान्। च। पुरुषः।
पादः। अस्य। विश्वा। भूतानि। त्रिऽपात्। अस्य। अमृतम्। दिवि ॥ ३ ॥

यद् इदं देवतिर्यङ्मनुष्यात्मकं जगद् यावद् अस्ति तावान् सर्वोपि अस्य यज्ञानुष्ठातुः पुरुषस्य महिमा महत् कर्म[6] स्वकीयसामर्थ्यविशेषः। तावन्तो महिमान इति पूजायां बहुवचनं सृष्टिभेदापेक्षया वा। ततो महिम्नोपि महिमाधारः पुरुषः ज्यायान् प्रवृद्धः अतिशयितः। अस्य पादः चतुर्थः विश्वा विश्वानि भूतानि भवनवन्ति स्थावरजङ्गमात्मकानि। व्यावर्तत इति शेषः। अस्य त्रिपात् पादत्रयम् अमृतम् अमरणधर्मकं सत् दिवि द्युलोके स्वर्गलोके वर्तते। अध्यात्मपक्षे यद् इदं देवतिर्य-ङ्मनुष्यात्मकम् अतीतानागतवर्तमानम् अस्तिरूपं जगद् यावद् अस्ति तावान् सर्वोपि अस्य पुरुषस्य महिमा। इदं तु तस्य न वास्तवं स्वरूपम्। वास्त-वस्तु पुरुषः अतो महिम्नो "यथोक्तात् मर्त्यामर्त्यलक्षणात्"[7] कार्यवर्गात् ज्यायान् वृद्धतरः। वृद्धशब्दस्य ईयसुनि ज्यादेशः। नैतावान् इति मन्तव्यं कथम् इत्यत आह— विश्वा विश्वानि सर्वाणि भूतानि भवनवन्ति कालत्रयवर्तीनि प्राण्यप्राणि-जातानि अस्य पुरुषस्य पादः चतुर्थोंशः। अस्य अवशिष्टं[8] त्रिपात् अंशत्रयात्मकं स्वरूपम् अमृतम् अमरणधर्मकं विनाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशे स्वरूपे अवतिष्ठते। तुरीय एव पादो जननमरणयुक्तः। तथा च तैत्तिरीया उत्तर-

---

१. विविधे S'. २. निवृत्तः S'. ३. एतावानस्य महिमातो ऋ १०,९,३ मा ३१,३ तैआ ३,१२,१; तावानस्य महिमा ततो कौ ३,४,६ छांउ ३,१२,६. † अस्य महिमा° A,B[h],D. ४. पुरुषः C. ५. सर्वा कौ. छांउ. ६. कर्मा S'. ७. यथोक्तात् मर्त्यामर्त्यलक्षणात् S'. ८. विशिष्टं S'.

नारायणे समामनन्ति— 'अजायमानो[1] बहुधा विजायते । तस्य धीराः परिजानन्ति योनिम्' ( तैआ ३,१३,१;२ ) इति । यद्यपि परब्रह्मणः परिच्छेदाभावाद् अंशचतुष्टयं न [2]निर्देष्टुं शक्यं[2] तथापि विश्वम् इदं ब्रह्मरूपापेक्षया अत्यल्पम् इति विवक्षित्वा पादत्वोपन्यासः । त्रिपादिति । त्रयः पादाः अस्य 'संख्यासुपूर्वस्य' ( पा ५,४,१४० ) इति लोपे 'द्वित्रिभ्यां पाद्दन्' ( पा ६,२,१९७ ) इति उत्तरपदान्तोदात्तत्वम् ।

पुरु॑ष ए॒वेदं सर्वं॒ यद् भू॒तं [3]यच्च॑ भा॒व्य॑म्[3] ।
उ॒ताम॑ृत॒त्वस्ये॑श्व॒रो[4] [5]यद॒न्येना॑भ॑वत् स॒ह[5] ॥ ४ ॥

पुरु॑षः । ए॒व । इ॒दम् । सर्व॑म् । यत् । भू॒तम् । यत् । च॒ । भा॒व्य॑म् ।
उ॒त । अ॒मृ॒त॒ऽत्वस्य॑ । ई॒श्व॒रः । यत् । अ॒न्येन॑[6] । अभ॑वत् । स॒ह ॥ ४ ॥

यद् भूतम् अतीतं जगत् यच्च भव्यम्[7] भविष्यद् यदपि इदं प्रत्यक्षेण दृश्यमानं व्यक्तं स्थावरजङ्गमात्मकं वर्तमानं जगत् तत् सर्वं पुरुष एव । यथा अस्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेपि पुरुषस्यावयवाः तथैव अतीतागामिनोः कल्पयोरिति द्रष्टव्यम् । अथवा एतत् सर्वं पुरुष एव पुरुषस्यैवायं[8] विवर्तः । उत अपि च अयं पुरुषः अमृतत्वस्य देवत्वस्यापि ईश्वरः स्वामी । देवानामपि ईश्वरः इति यावत् । यत् किंचिद् भूतम् अन्नेन[5] अदनीयेन भोग्येन सहाभवत् भवति तस्यापीश्वरः । अयोनिजानां देवानाम् अन्नरसपरिणामानां मर्त्यादीनां च ईश्वर इति यावत् । यज्ञानुष्ठातुर्नारायणस्य यज्ञनिर्वर्त्यं सार्वात्म्यम् । जगत्कारणस्य सूत्रात्मनस्तु स्वाभाविकम् इतीयान् विशेषः । शिष्टं समानम् ।

यत् पुरु॑षं॒ व्यद॑धुः[9] कति॒धा व्य॑कल्पयन्[10] ।
मुखं॒ किम॑स्य॒ किं[11] बा॒हू किमू॒रू[11] पादा॑[12] उच्येते ॥ ५ ॥

यत् । पुरु॑षम् । वि[13] । अद॑धुः[13] । क॒ति॒ऽधा । वि । अ॒क॒ल्प॒य॒न् ।
मुख॑म् । किम् । अ॒स्य॒ । किम् । बा॒हू इति॑ । किम् । ऊ॒रू इति॑ । पादौ॑ । उ॒च्येते॒ इति॑ ॥ ५ ॥

---

१. सजाय° S'. २. निर्देष्टुमशक्यं S'. ३. यच्च भव्यम् K,K$^m$,V. ऋ १०,९०,२ पै ९,५,४ काठकब्राह्मणसंकलन पृ १०० पं ६. तैआ ३,१२,१; यच्चे भांव्यम् की ३,४,५. ४. °मृतत्व° C,R,B$^h$; °स्येशानो ऋ. मा ३१,२ कौ. तैआ. ५. यदन्ये° C; यदन्ने° K K$^m$,V, यदुन्ये° > यदन्ने° Dc; यदन्नेनातिरोहति ऋ. मा. कौ. तैआ. ६. अन्येन P'. ७. बहु. मंपा. ८. पुरुषस्यैवायं S'. ९. व्यदधुः A,B$^h$,C,D,K,K$^m$,S$^m$,V,Dc. १०. एनम-कल्प° काठकब्रासंकलन पृ १०१ पं २. ११. कौ बाहू का ऊरू काठब्रासंकलन °का ऊरू ऋ १०,९०,११; °काबूरू तैआ ३,१२,५. १२. पादावु पै ९,५,५ तैआ. १३. अदधुः P,J, वेऽअदधुः इति पपा. न्याय्यः.

'विराड् अग्रे समभवद् विराजो अधि पूरुषः' (९) इति पुरुषसृष्टिराम्नास्यते। 'यत् पुरुषेण हविषा देवा यज्ञम् अतन्वत' (१०) इति पुरुषेण साधनेन यज्ञसृष्टिश्च आम्नास्यते। तं पुरुषं निमित्तीकृत्य प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुम् अत्र ब्रह्मवादिनां प्रश्ना उच्यन्ते। यत् यदा पुरुषम् यज्ञं व्यदधुः विशेषेण अकुर्वन् साध्या नाम देवाः वसवश्च तदा तं पुरुषं कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः। एष सामान्यरूपः प्रश्नः। बहुगणवतुडति संख्या[1] (पा १,१,२३) इति संख्यासंज्ञकात् कतिशब्दात् 'संख्याया विधार्थे धा' (५,३,४२) इति धाप्रत्ययः। मुखं किम् इत्यादयो विशेषप्रश्नाः। अस्य यज्ञात्मनः पुरुषस्य किं वस्तु मुखम् आसीत्। किं वस्तु बाहू। किं वस्तु ऊरू। किं वस्तु पादा उच्येते। बाहूरुपादद्वयात्मना किं वस्तु कथ्यते। 'लोपः शाकल्यस्य' (पा ८,३,१९) इति वकारलोपः। किम् इति सामान्यरूपत्वाद् नपुंसकलिङ्गता एकवचनता च। अध्यात्मपक्षे यत् यदा पुरुषम् वैराजं व्यदधुः मनःसंज्ञकप्रजापतेर्विराजः प्राणरूपा देवाः संकल्पेन उत्पादितवन्तः तदानीं कतिधा व्यकल्पयन् इत्यादि पूर्वेण समानम्।

इति एकोनविंशे काण्डे प्रथमेनुवाके षष्ठं सूक्तम्।

'ब्राह्मणोस्य मुखम् आसीद्' इति सूक्तस्य पुरुषमेधे उत्सृज्यमानपुरुषपश्वनुमन्त्रणे शनैश्चरग्रहदेवत्यहविराज्यहोमे च पूर्वसूक्तेन सह उक्तो विनियोगः।

ब्राह्मणो॒ऽस्य मुख॑मासीद् बा॒हू रा॑ज॒न्यो॑ऽभवत्[2]।
मध्यं॒[3] तद॑स्य॒ यद् वैश्यः॑ प॒द्भ्यां शू॒द्रो अ॑जायत ॥ ६ ॥

ब्रा॒ह्म॒णः। अ॒स्य॒। मुख॑म्। आ॒सी॒त्। बा॒हू इति॑। रा॒ज॒न्यः॑। अ॒भ॒व॒त्।
मध्य॑म्। तत्। अ॒स्य॒। यत्। वैश्यः॑। प॒त्ऽभ्याम्। शू॒द्रः। अ॒जा॒य॒त॒ ॥ ६ ॥

'कतिधा व्यकल्पयन्' इति सामान्यप्रश्नस्य 'चन्द्रमा मनसो जातः' इत्यादिना उत्तरं भविष्यति। मुखादिविशेषप्रश्नानाम् उत्तरम् अनया उच्यते— अस्य यज्ञात्मनः पुरुषस्य ब्राह्मणो मुखम् आसीत्। ब्राह्मणजातिविशिष्टः पुरुषः अस्य मुखाद् उत्पन्न इत्यर्थः। योयं राजन्यः क्षत्रियजातिविशिष्टः पुरुषः स तस्य यज्ञपुरुषस्य बाहू बाहुद्वयम् अभवत्। यद् वैश्यः वैश्यजातम् इति यद् अस्ति तद् अस्य यज्ञपुरुषस्य मध्यम् मध्याङ्गम् अभवत्। मध्यभागात् वैश्य उत्पन्न इत्यर्थः। पद्भ्याम् पादाभ्यां शूद्रः अजायत उत्पन्नः। इत्थं च मुखादिभ्यो ब्राह्मणादीनाम्[4] उत्पत्तिं तैत्तिरीयाः समामनन्ति— 'स मुखतस्त्रिवृतं निरमिमीत[5] ××× ब्राह्मणो मनुष्याणाम्' इति। 'उरसो बाहुभ्यां पञ्चदशं निरमिमीत ××× राजन्यो मनुष्याणाम्' इति। 'मध्यतः सप्तदशं निरमिमीत ××× वैश्यो मनुष्याणाम्' इति। 'अन्नधानाद्ध्यसृज्यन्त' (तै ७,१,१,४;५) इति

१. डति च शंपा. २. रा॒ज॒न्यः॑ कृतः ऋ १०,९०,१२ मा ३१,१२ तैआ ३,१२,६.
३. ऊरू ऋ. मा. तैआ. ४. दी नास्ति S'. ५. 'मीते S'.

वाक्यशेषेण शरीरस्य मध्यभाग एव विवक्षितः । मध्यभागः ऊर्वोरुपलक्षकः । अत एव किम् ऊरू इति प्रश्नः युज्यते । तत्रैव प्रश्ने 'पत्त एकविंशं निरमिमीत ××× शूद्रो मनुष्याणाम्' ( तै ७,१,१,६ ) इति च । अतः प्रश्नोत्तरे उभे अपि तत्परत्वेन योजनीये । अध्यात्मपक्षेपि एषोर्थः समानः ।

चन्द्रमा मनसो [1]जातश्चक्षोः सूर्यो अजायत[1] ।
[2]मुखादिन्द्रश्चाग्निश्च प्राणाद् वायुरजायत[2] ॥ ७ ॥

चन्द्रमाः । मनसः । जातः । चक्षोः । सूर्यः । अजायत ।
मुखात् । इन्द्रः । च । अग्निः । च । प्राणात् । वायुः । अजायत ॥ ७ ॥

अस्मिन् उत्तरस्मिन्नपि च मन्त्रे उत्तरकथनेन तदनुसारिणः प्रश्ना ऊहनीयाः । अत एव कतिधा व्यकल्पयन्निति सामान्यप्रश्नो ब्रह्मवादिभिः कृतः । यज्ञात्मनः पुरुषस्य मनसः सकाशात् चन्द्रमाः चन्द्रम् आह्लादं माति निर्मिमीत इति चन्द्रमाः सोमो जातः । 'चन्द्रमा मनो भूत्वा हृदयं प्राविशत्' ( ऐआ २,४,२ ) इति हि श्रुत्यन्तरम् । चक्षोः चक्षुषः । अन्त्यलोपश्छान्दसः । सूर्यः अजायत । 'आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्' ( ऐआ २,४,२ ) इति हि श्रुतिः । इन्द्रश्च अग्निश्च । परस्परसमुच्चयार्थौ चकारौ । तौ देवौ मुखात् जातौ । अत्र मुखशब्देन वागिन्द्रियम् उच्यते । 'ब्राह्मणोस्य मुखमासीत्' इत्यत्र सर्वं मुखमण्डलं विवक्षितम् । 'अग्निर्वाग् भूत्वा मुखं प्राविशत्' ( ऐआ २,४,२ ) इति ऐतरेयकश्रुतिः । वाचः इन्द्रसंबन्धं तैत्तिरीयाः समामनन्ति । 'वाग् वै पराच्यव्याकृतावदत्[3] । ते देवा इन्द्रम् अब्रुवन् । इमां नो वाचं व्याकुर्विति ××× ताम् इन्द्रो मध्यतोवक्रम्य व्याकरोत् । तस्माद् इयं व्याकृता[4] वाग् उद्यते' ( तै ६,४,७,३ ) इति । अस्य पुरुषस्य प्राणात् । अत्र प्राणशब्देन घ्राणेन्द्रियं विवक्ष्यते । तस्माद् वायुरजायत । 'वायुः प्राणो भूत्वा नासिके प्राविशत्' ( ऐआ २,४,२ ) इति हि श्रुत्यन्तरम् । अत्र सर्वत्र स्वस्वकारणप्रवेशेन तस्माद् उत्पत्तिर्विवक्षितेति मन्तव्यम् । अध्यात्मपक्षेपि अयम् अर्थः समानः ।

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन् ॥ ८ ॥

नाभ्याः । आसीत् । अन्तरिक्षम् । शीर्ष्णः[5] । द्यौः । सम् । अवर्तत ।
पत्ऽभ्याम् । भूमिः । दिशः । श्रोत्रात् । तथा । लोकान् । अकल्पयन् ॥ ८ ॥

---

१. चक्षुषोरधि सूर्यः काठग्रासंकलन पृ १०१ पं ६. २. श्रोत्राद् (मसोर् काठग्रा.) वायुश्च प्राणश्च मुखादग्निरजायत मा ३१,१२ काठग्रा. ३. पराच्यव्याकृता° S'. ४. व्याकृत्य S'. ५. शीर्ष्णोः P,J; शीष्णः P[2].

अत्रापि उत्तरानुसारिणः प्रश्ना ऊह्याः । अस्य यज्ञपुरुषस्य नाभिशिरःपादेभ्यः अन्तरिक्षद्युभूमयस्त्रयो लोकाः समभवन् । शीर्ष्णः । 'शीर्षंश्छन्दसि' (पा ६,१,६०) इति शिरसः शीर्षन् आदेशः । 'अल्लोपोनः' (पा ६,४,१३४) इति अकारलोपः । पद्भ्याम् इति 'पद्दन्नोमास्°' (पा ६,१,६३) इति पद्भावः । श्रोत्रात् अस्य पुरुषस्य श्रोत्रेन्द्रियाद् दिशः प्राच्यादय आसन् । 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' (ऐआ २,४,२) इति हि श्रुत्यन्तरम् । उक्तार्थोपसंहारश्चतुर्थश्चरणः । तथा उक्तेन प्रकारेण उक्तरीत्या लोकान् अन्तरिक्षादीन् । उपलक्षणम् एतत् । ब्राह्मणक्षत्रियादीन् अकल्पयन् अस्माद् यज्ञपुरुषात् कल्पितवन्तः उत्पादितवन्तः साध्या नाम देवाः । अध्यात्मपक्षे प्रजापतेः प्राणरूपा देवा इतीयान् विशेषः ।

[1]विराडग्रे समभवद्[1] विराजो अधि पूरुषः[2] ।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ॥ ९ ॥

विऽराट् । अग्रे । सम् । अभवत् । विऽराजः । अधि । पुरुषः ।
सः । जातः । अति । अरिच्यत । पश्चात् । भूमिम् । अथो इति । पुरः ॥ ९ ॥

पूर्वं यस्मात् पुरुषाद् ब्राह्मणादिसृष्टिरुक्ता तस्य सृष्टिरत्रोच्यते— अग्रे सृष्ट्यादौ विराट् विविधं राजन्ति वस्तूनि यस्मिन्निति स विराड् नाम पुरुषः समभवत् । 'सहस्रबाहुः पुरुषः' (१) इत्यादिना उपवर्णिताद् आदिपुरुषाद् विराट्संज्ञकः पुरुषोजायत । 'तस्माद् विराड् अजायत' (तैआ ३,१२,२) इति शाखान्तरे विराजः आदिपुरुषाद् उत्पत्तिः समाम्नायते । तथा मानवे शास्त्रे स्मर्यते—

'द्विधा कृत्वात्मनो देहम् अर्धेन पुरुषोभवत् ।
अर्धेन नारी तस्यां स विराजम् असृजत् प्रभुः ॥' (मस्मृ १,३२) इति ।

विराजः अधि । अधिशब्दः पञ्चम्यर्थानुवादी । तस्माद् विराजः [3]पुरुषः अन्यः[3] पुरुषोजायत । अत्र वाजसनेयकम्— "'विराजो अधि पूरुषः' इत्येषा वै सा विराट् । एतस्या एवैतद्[4] विराजो यज्ञं पुरुषं जनयति" (माश १३.६,१,२) इति । स च तृतीयः पुरुषः यज्ञात्मा जातः उत्पन्नमात्र एव अत्यरिच्यत अतिरिक्त आसीत् । भूमिम् भूम्यादीन् सर्वान् लोकान् पश्चात् पश्चाद्भागे अथो अपि च पुरः पुरस्तात् । 'पूर्वाधरावराणाम् असि पुरधवश्चैषाम्' (पा ५,३,३९) इति असिप्रत्ययः । तत्संनियोगेन पूर्वशब्दस्य पुर् आदेशः । स पुरुषो जातमात्र एव भूम्यादीन् लोकान् पश्चात् पुरस्ताच्च

---

१. तस्माद् (ततो मा. कौ.) विराडजायत ऋ १०,९०,५ मा ३१,५ कौ ३,४,७ काठआ. पृ १०० पं १२ तैआ ३,१२,२. २. पुरुषः C. ३. अन्यः पुरुषः S'. ४. एष तद् S'.

व्याप्य अतिक्रान्तवान्। अध्यात्मपक्षे— अग्रे सृष्टयादौ विराट् विविधं राजन्ति वस्तूनि यस्मिन्निति स विराट् मनःसंज्ञकः प्रजापतिः सहस्रबाहुः पुरुष इति प्रकृताद् महापुरुषाद् अजायत। ततो विराजः अधि विराजमेव अधिकरणीकृत्य[1] पुरुषः अन्यः प्रजापतिः सर्वभूतेन्द्रियपुरुषसमष्ट्यात्माभवत्[2] निष्पन्नः। श्रूयते हि 'स मानसीन[3] आत्मा जनानाम्' (तैआ ३,११,१) इति। मानसीनः मनसा निष्पन्न इत्यर्थः। स वैराजः पुरुषो जातः प्रादुर्भूतमात्रः अन्यरिच्यत स्वयमेव आत्मानम् अत्यरेचयत्। कर्मकर्तरि रूपम्। अनेकधा भावलक्षणं स्वरूपातिरेकम् अभजत। भूतेन्द्रियादीनि असृजद् इत्यर्थः। श्रूयते हि— 'असतोधि मनोसृज्यत। मनः प्रजापतिम् असृजत। प्रजापतिः प्रजा असृजत' (तैब्रा २,२,९,१०) इति। पश्चात् भूतग्रामसृष्टेरन्ते भूमिम् अत्यरेचयत्। सामर्थ्यात् कर्मकर्तृभावोत्र निवर्तते। एवम् आकाशादिपृथिव्यन्तानां तत्त्वानां सृष्टिरुक्ता भवति। अथो भूमेरनन्तरं पुरः पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि सुरनरतिर्यगादीनां स्थावराणां च अत्यरेचयत् अतिरिक्तान्यकरोत्। पुर इति। द्वितीयाबहुवचनं शस्। छान्दसं विभक्त्युदात्तत्वम्। अध्यात्मपक्ष एव अन्योर्थः— अग्रे विराट् ब्रह्माण्डरूपो देहः तस्माद् आदिपुरुषाद् उत्पन्नः। विराजः अधि विराड्देहस्योपरि तमेव देहम् अधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित् पुमान् अजायत। योयं सर्ववेदान्तवेद्यः परमात्मा स एव स्वकीयमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानिदेवतात्मा जीवोभवत्। एतच्च आथर्वणिका उत्तरतापनीये स्पष्टम् आमनन्ति— 'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव' (नृउ १,९) इति। स जातः विराट्पुरुषः अत्यरिच्यत अतिरिक्तोभूत्। देवतिर्यङ्मनुष्यादिरूपोभूत्। पश्चात् देवादिजीवभावाद् ऊर्ध्वं भूमिं ससर्जेति क्रियाध्याहारः। अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः शरीराणि ससर्ज। एवं भूतसृष्टिः पिण्डसृष्टिश्च प्रतिपादिता।

यत् पुरुषेण हविषा देवा यज्ञमतन्वत[4]।
वसन्तो[5] अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १० ॥

यत्। पुरुषेण। हविषा। देवाः। यज्ञम्। अतन्वत[6]।
वसन्तः। अस्य। आसीत्। आज्यम्। ग्रीष्मः। इध्मः। शरत्। हविः ॥ १० ॥

'उषा वा अश्वस्य मेध्यस्य' (बृआ १,१,१) इत्यादिना पुरुषस्य अश्वत्वेन उपासना आम्नायते। अतोत्र पुरुषस्य अश्वत्वात् हविष्ट्वम्। अश्वमेधे हि

१. °रणेकृत्य S'. २. °स्मानीयत S'. ३. °सीमे S'. ४. °मतन्वत Bh,D,Sm. ५. °सन्तोऽस्या° मा ३१,१४. ६. अतन्वत P,J.

अश्वः पशुः । अथवा मुख्यः पुरुष एव पुरुषमेधे पशुः । तस्माद् अयम् अर्थः— यत् यदा पुरुषेण अश्वरूपेण पुरुषरूपेण वा हविषा देवाः साध्यनामका यज्ञम् अतन्वत अकुर्वत तदानीम् अस्य यज्ञस्य वसन्तः रसानाम् उत्पादक ऋतुः स्वमहिम्ना आज्यम् होम्यम् आसीत् । ग्रीष्मः शोषक ऋतुः इध्मः अग्निसमिन्धनसाधनभूतैकविंशतिदारुमयात्मकः पदार्थ आसीत् । शरत् शीर्यन्ते पच्यन्ते अस्याम् ओषधय इति शरद् ऋतुः हविः यज्ञियचरुपुरोडाशादिहवीरूपोभवत् । अध्यात्मपक्षे— यत् यदा पुरुषेण प्रजापतिना हविषा हविष्ट्वेन संकल्पितेन हविरन्तरस्याभावाद् देवाः प्राणाः प्राजापत्या इन्द्रियाणि च यज्ञं संकल्पात्मकम् अतन्वत अकुर्वत । यद्वा यज्ञमेव अन्वतिष्ठन् । स्रष्टृकामः प्रजापतिर्देवः देवशब्दवाच्यप्राणादिभेदेनोच्यते । अथवा पूर्वोक्तक्रमेण देवशरीरेषु उत्पन्नेषु ते देवा उत्तरसृष्टिसिद्ध्यर्थं तत्साधनत्वेन यज्ञम् अतन्वत । कंचिद् यज्ञम् अन्वतिष्ठन् । द्रव्यस्य अद्यापि अनुत्पन्नत्वेन हविरन्तराभावात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य तेन पुरुषाख्येन हविषा यत् यदा मानसं यज्ञम् अकुर्वत तदानीम् अस्य यज्ञस्य वसन्तर्तुरेव आज्यम् अभूत् । तमेव आज्यत्वेन संकल्पितवन्तः । एवं ग्रीष्मः इध्मत्वेन संकल्पितः । शरत्[1] पुरोडाशादिहविष्ट्वेन संकल्पिता । पूर्वं[2] पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः वसन्तादीनां तु आज्यादिषु विशेषरूपत्वेनेति द्रष्टव्यम् ।

तं य॒ज्ञं प्रा॒वृषा॒[3] प्रौक्ष॒न् पुरु॑षं जा॒तम॑ग्र॒शः[4] ।
तेन॑ दे॒वा अ॑यजन्त[5] सा॒ध्या वस॑वश्च॒[6] ये ॥ ११ ॥

तम् । य॒ज्ञम् । प्रा॒वृषा॑ । प्र । औ॒क्ष॒न् । पुरु॑षम् । जा॒तम् । अ॒ग्र॒ऽशः ।
तेन॑ । दे॒वाः । अ॒य॒ज॒न्त॒ । सा॒ध्याः । वस॑वः । च॒ । ये ॥ ११ ॥

तं यज्ञम् यष्टव्यं पुरुषम् अग्रशः अग्रे सृष्ट्यादौ जातम् अश्वभूतं वा प्रावृषा वर्षकेण प्रावृडाख्येन ऋतुना प्रौक्षन् प्रोक्षितवन्तः । उक्ष सेचने । प्रावृट्कालं प्रोक्षणसाधनोदकरूपत्वेन संकल्पितवन्त इत्यर्थः । तेन पुरुषेण देवा अयजन्त इष्टवन्तः । के देवाः तान् आह— ये साध्या वसवश्च एतत्संज्ञका देवाः । अध्यात्मपक्षे— यज्ञं यज्ञसाधनभूतम् । करणे नङ्प्रत्ययः । तं पुरुषं पशुत्वभावनया यूपे बद्धम् अग्रशः अग्रतः अग्रे सर्वविकारसृष्टेः पूर्वं जातम् पुरुषत्वेन उत्पन्नं संकल्पात्मके यज्ञे प्रावृषा प्रौक्षन् प्रावृट्कालेन प्रोक्षितमिव मनसा कृतवन्त इत्यर्थः । तेन पुरुषरूपेण पशुना देवाः अयजन्त मानसं यागं निष्पादितवन्तः । के ते देवा इति त उच्यन्ते । साध्याः सृष्टिसाधनयोग्याः साधयन्तीति साध्याः ।

---

१. समित् S'. २. पूर्वं° S'. ३. ब॒र्हिषि॒ ऋ १०,९०,७ मा ३१,९ तैआ ३,१२,३. ४. °अ॒ग्रतः WM. ऋ. मा. तैआ. ५. अयंजन्त A,C,D,Bh,Sm,Cs,P,J, तैआ. ६. ऋष॑यश्च॒ ऋ. मा. तैआ.

'कृत्यल्युटो बहुलम्' (पा ३,३,११३) इति कर्तरि 'अचो यत्' (पा ३,१,९७) इति यत्प्रत्ययः[1]। वसवः वासकाः प्राणाः इन्द्रियाणि च द्वयेपि देवनशीलत्वाद् देवा इत्युच्यन्ते।

तस्मादश्वा अजायन्त ये च[2] के चोभयादतः।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥ १२ ॥

तस्मात्। अश्वाः। अजायन्त। ये। च। के। च। उभयादतः[3]।
गावः। ह। जज्ञिरे। तस्मात्। तस्मात्। जाताः। अजऽअवयः[4] ॥ १२ ॥

पशुसृष्टिरुच्यते। तस्मात् यज्ञात्मनः पुरुषाद् अश्वा अजायन्त। ये के च अश्वव्यतिरिक्ता गर्दभा अश्वतराश्च उभयादतः ऊर्ध्वाधोभागयोरुभयोर्दन्तयुक्ताः सन्ति ते अजायन्त[5]। 'छन्दसि च' (पा ५,४,१४२) इति दन्तस्य दतृभावः। 'अन्येषामपि दृश्यते' (पा ६,३,१३६) इति दीर्घः। 'अनित्यम् आगमशासनम्' इति नुमभावः। तस्माद् एव पुरुषाद् गावः च जज्ञिरे। जनी प्रादुर्भावे। हशब्दश्चार्थे। तस्माद् एव यज्ञपुरुषाद् अजावयः अजाश्च अवयश्च जाताः। अध्यात्मपक्षेपि अयम् अर्थः समानः।

तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे[6]।
[7]छन्दो ह[7] जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ १३ ॥

तस्मात्। यज्ञात्। सर्वऽहुतः। ऋचः। सामानि। जज्ञिरे।
छन्दः। ह। जज्ञिरे। तस्मात्। यजुः। तस्मात्। अजायत ॥ १३ ॥

सर्वहुतः। 'सुपां सुलुक्' (पा ७,१,३९) इति पञ्चम्येकवचनस्य सुः। सर्वहुतात्[8]। आश्वमेधिकोश्वः सर्वहुतः। पुरुषस्य अश्वमेधत्वम् उक्तम्। यद्वा सर्वः सर्वाङ्गः सन् पशुर्हूयते स सर्वहुत्। कर्मणि व्यत्ययेन क्विप्प्रत्ययः। सर्वहुतः अश्वभूतात् तस्माद् यज्ञात् पुरुषाद् ऋचः पादबद्धा मन्त्राः सामानि गीत्यात्मकानि जज्ञिरे। तस्मात् यज्ञात् पुरुषात् छन्दः। जसो लुक्। छन्दांसि। हशब्दश्चार्थे। छन्दांसि च ऋगाद्यधिष्ठानानि जज्ञिरे। तस्माद् एव पुरुषाद् यजुः प्रश्लिष्टपाठात्मको मन्त्रः अजायत। ऋगादीनां लक्षणं जैमिनिना सूत्रितम्। 'तच्चोदकेषु मन्त्राख्या'। 'तेषाम् ऋग् यत्रार्थवशेन पादव्यवस्था'। 'गीतिषु सामाख्या'। 'शेषे यजुःशब्दः' (मीसू २,१,३२;३५;३६;३७) इति। अध्यात्मपक्षे – सर्वहुतः सर्वात्मा पुरुषः पशुत्वेन हूयतेस्मिन्निति सोयं सर्वहुत् तस्मात् पूर्वोक्ताद् मानसाद् यज्ञात्। शिष्टं समानम्।

---

१. यत्प्रत्यये स्वरः? २. नास्ति K,V, सा. ऋ १०,९०,१० मा ३१,८ तैआ ३,१२,५. ३. द्र. ऋ. तै. अवग्रहाभावः मा. द्र उभयादत इत्युभयऽदतः ४. द्र. ९६५ टि. ३ द्र. अजाऽअवयः P. ५. प्रजायन्त S'. ६. जज्ञिरे B^b,S^m. ७. छन्दांसि K,V,W,M. ऋ १०,९०,९ मा ३१,७ पै ९,५,११ तैआ ३,१२,४. ८. क्तप्रत्ययान्ते स्वरो न सिध्यति, क्विबन्तमेव युक्तम्.

तस्माद् यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्[1] ।
पशूँस्तांश्चक्रे[2] वायव्यानारण्या[3] ग्राम्याश्च[4] ये ॥ १४ ॥

तस्मात् । यज्ञात् । सर्वऽहुतः । सम्ऽभृतम् । पृषत्ऽआज्यम् ।
पशून् । तान् । चक्रे । वायव्यान्[5] । आरण्याः । ग्राम्याः । च । ये ॥ १४ ॥

सर्वहुतस्तस्माद् यज्ञात् अश्वभूताद् यज्ञपुरुषात् संभृतम् संपादितं यत् किंचिद् द्रव्यजातं तत् पृषदाज्यम् । दधिमिश्रम् आज्यं पृषदाज्यम् इत्युच्यते । तद् आसीत् । अथ तत् पृषदाज्यं कर्म ते देवाः साध्यनामकाः वायव्यान् वायुदेवत्यान् आरण्यान्[6] अरण्योद्भवान् द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेयाख्यान्[7] सप्तसंख्याकान् एवमादिकान् अन्यान् आरण्यान् पशूंश्चक्रे चक्रिरे । 'तिङां तिङो भवन्ति' (पावा ७,१,३९) इति ह्रस्य तादेशः । ये च ग्राम्याः ग्रामोद्भवा गोश्वाजाविपुरुषगर्दभोष्ट्रा एवमादिका अन्ये ग्राम्याश्च ये सन्ति तान् पशूंश्चक्रिरे । अरण्ये भवा आरण्याः । 'तत्र भवः' (पा ४,३,५३) इति अण्प्रत्ययः[8] । 'ग्रामाद् यखञौ' (पा ४,२,९४) इति ग्रामशब्दात् शैषिको यप्रत्ययः । आरण्यपशुविशेषणे तच्छब्दस्य प्रसिद्धिवाचकत्वम् । ग्राम्यविशेषणे यच्छब्दयोगात् तच्छब्दस्य प्रतिनिर्देशः । पशूनाम् अन्तरिक्षद्वारा वायुदेवत्यत्वं मन्त्रान्तरव्याख्याने तैत्तिरीयाः समामनन्ति—'वायवः स्थेत्याह । वायुर्वा अन्तरिक्षस्याध्यक्षाः । अन्तरिक्षदेवत्याः खलु वै पशवः । वायव एवैनान् परिददाति' (तैब्रा ३,२,१,४) इति । आरण्यानामेव वायुरधिपतिरिति केचित् । अध्यात्मपक्षे—सर्वहुतस्तस्माद् यज्ञात् पूर्वोक्ताद् मानसाद् यज्ञात् संभृतं समुत्पन्नं पृषदाज्यं पृषत् विचित्रं बिन्दुमद् आज्यम् । अथ तत् पृषदाज्यं कर्म आरण्यान् ग्राम्यांश्च द्विविधान् पशूंश्चक्रे प्राणेन्द्रियसमष्टिरूपः प्रजापतिः । तत्रैव अर्थान्तरम् । पृषदाज्यं दधिमिश्रम् आज्यं संभृतं संपादितम् । दधि च आज्यं च इत्येवमादि भोग्यजातं सर्वं संपादितम् इत्यर्थः । तथा द्विविधान् पशूंश्चक्रे प्राणेन्द्रियसमष्टिरूपः प्रजापतिरेवेति ।

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥

सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । सम्ऽइधः । कृताः ।
देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥ १५ ॥

---

१. तु. ऋ. मा. प्रभृ. वैतु. शंपा. सात. पृषदाज्य॑ऽम् (पपा. पृषत्ऽआज्य॑ऽम्) २. चक्रिरे पै ९,५,१२ काठब्रा. पृ १०० पं १९. ३. °व्यानार्° C,R,J; °रण्यान् K,V, सा. ऋ १०,९०, ८ पै. तैआ ३,१२,४. ४. ग्राम्यांश्च पै. ५. वायव्यान् J. ६. वैतु. शंपा. ७. °ख्याः S'. ८. णप्रत्ययः इति युक्तम्, अरण्याण्णः (पावा ४,२,१०४) इति विशेषविहितेन अण्प्रत्ययस्य बाधात्.

यत् यदा यज्ञम् अश्वमेधं पुरुषमेधं वा तन्वानाः कुर्वाणाः साध्या देवाः स्वस्मिन् यज्ञे पुरुषं पशुम् अश्वभूतं मुख्यं पुरुषं वा अबध्नन् यूपे बद्धवन्तः तदानीम् अस्य यज्ञस्य सप्त सप्तसंख्याकानि गायत्र्यादीनि छन्दांसि त्रिः सप्त एकविंशतिसंख्यायुक्ताः परिधयः समिधः च कृताः संपादिता आसन् । ऐष्टिक्यः पञ्चदशभिः सामिधेनीभिर्ऋग्भिराधीयमानाः पञ्चदश समिधः एका अनुयाजसमित् द्वे आघारसमिधौ त्रयः परिधयः इति एकविंशतेर्दारूणां संपादनेन इध्मरूपं कृतम् । अथवा अस्य सांकल्पिकयज्ञस्य गायत्र्यादीनि सप्त छन्दांसि परिधय आसन् । ऐष्टिकस्य आहवनीयस्य त्रयः परिधयः । औत्तरवेदिकास्त्रयः । आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः । अत[1] एवाम्नायते—'न पुरस्तात् परिदधाति । आदित्यो ह्येवोद्यन् पुरस्ताद् रक्षांस्यपहन्ति' ( तै २,६,६,३ ) इति । त एत आदित्यसहिताः सप्त परिधयः अत्र सप्तच्छन्दोरूपाः । तथा समिधः त्रिः सप्त त्रिगुणितसप्तसंख्याका एकविंशतिः कृताः । 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' ( ऐब्रा १,३० ) इति श्रुताः पदार्था एकविंशतिदारुयुक्तेध्मत्वेन भाविताः । एवम् इध्मानाम् एकविंशतेर्दारूणां संपादनेन इध्मरूपं कृतम् पूर्वं तु पृथक्त्वेन परिधानकाले परिधिरूपणं कृतम् इति द्रष्टव्यम् । यत् यदा देवाः प्रजापतिप्राणेन्द्रियरूपा यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पुरुषं वैराजं पशुम् अबध्नन् तं पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वत्र पुरुषेण हविषा इत्युक्तम् ।

मूर्ध्नो देवस्य बृहतो अंशवः सप्त सप्ततीः ।
राज्ञः सोमस्याजायन्त जातस्य पुरुषादधि ॥ १६ ॥

मूर्ध्नः । देवस्य । बृहतः । अंशवः । सप्त । सप्ततीः ।
राज्ञः । सोमस्य । अजायन्त । जातस्य । पुरुषात् । अधि ॥ १६ ॥

सर्वस्य यज्ञस्य सोमसाध्यत्वाद् अत्रापि यज्ञे परंपरया सोमसंबन्धं[2] दर्शयितुं सोमः अनया प्रस्तूयते—पुरुषात् यज्ञात्मनः वैराजाद् वा । अधिशब्दः पञ्चम्यर्थानुवादी । जातस्य निष्पन्नस्य सोमस्य राज्ञः सप्त सप्तगुणिताः सप्ततीः सप्ततयः सप्तगुणितसप्ततिसंख्याका अंशवः किरणाः बृहतः महतो देवस्य द्योतनात्मकस्य 'सहस्रबाहुः पुरुषः' ( १ ) इत्यादिना निरूपितस्य आदिपुरुषस्य मूर्ध्नः सकाशात् अजायन्त उद्भूताः । अयम् अर्थः— द्विविधो हि सोमः वल्लीरूपो देवतारूपश्चेति । तत्र लतारूपस्य सोमस्य स्वसाध्याः प्रकृतिविकृत्यादिभेदेन नानासंख्याकाः प्रकृतिरूपाः अग्निष्टोमादिसप्तसंस्थाः नानासंख्याका[3] विकृतिभेदेन च क्रतवः पुरुषमेधक्रतुनिर्वर्तकनारायणपुरुषस्य शिरसः सकाशाद् उद्भूता इति । कलारूपस्य

---

१. सप्त S'. २. होम° S'. ३. °संख्याक° S'.

तु सोमस्य द्युलोके सप्तगुणितसप्ततिसंख्याकाः किरणा निष्पन्नाः । सूर्यस्य तु संहस्रकिरणाः सोमस्य तु दशोनपञ्चशतसंख्याकाः किरणा देवस्य मूर्ध्नोऽजायन्त इति ।

इति एकोनविंशे काण्डे प्रथमेऽनुवाके सप्तमं सूक्तम् ।

'चित्राणि साकम्' इति 'यानि नक्षत्राणि' इति सूक्तयोर्नक्षत्रदेवताज्यहोमे तद्धविर्होमे च विनियोगः । 'अथ नक्षत्राणाम् उपचारं वक्ष्यामः' (शांक १,१) इति प्रक्रम्य शान्तिकल्पे सूत्रितम् — "एतेषां चैव ऋक्षाणां ध्रुवस्थानोपसादिनाम् । यथावर्णानि पुष्पाणि वासांस्येवानुलेपनम् । 'इमा आपः' (अ ९,३,२३) इत्येतैः षड्भिः प्रतिगृह्णन्तु[1] भगवन्ति नक्षत्राणि इत्येतैर्यथोक्तं[2] कृत्वा । अथाज्यभागान्ते 'चित्राणि साकं दिवि रोचनानि' 'यानि नक्षत्राणि' (अ १९,७;८) इत्याज्यं[3] हुत्वा" (शांक ६,६;७) इति, 'अथ नक्षत्रहवींषि — घृतं कृत्तिकाभ्यः । सर्वबीजानि रोहिण्यै' इति प्रक्रम्य सूत्रितम् — "[4]क्षीरिवृक्षाङ्कुरा अश्विनीभ्याम्[4] । कृष्णतिलाः सर्पिर्मधुमिश्रा[5] भरणीभ्यः । 'चित्राणि साकं दिवि रोचनानि' (अ १९,७), 'यानि नक्षत्राणि' (अ १९,८) इति हुत्वाभयेन (अ १९,१५) उपस्थाय तन्त्रं परिसमापयेत्" (शांक १२,५) इति च ।

चि॒त्राणि॑ सा॒कं दि॒वि रो॑च॒नानि॑ सरीसृ॒पाणि॒ भुव॑ने ज॒वानि॑ ।
तु॒र्मिशं॒[6] सु॒म॒तिमि॒च्छमा॑नो अहा॑नि गी॒र्भिः स॑पर्यामि॒[7] नाक॑म् ॥ १ ॥

चि॒त्राणि॑ । सा॒कम् । दि॒वि । रो॒च॒नानि॑ । स॒री॒सृ॒पाणि॑ । भुव॑ने । ज॒वानि॑ ।
तु॒र्मिश॑म् । सु॒ऽम॒तिम् । इ॒च्छमा॑नः । अहा॑नि । गी॒ःऽभिः । स॒प॒र्या॒मि॒[8] । नाक॑म् ॥ १ ॥

चित्राणि चायनीयानि नानावर्णानि वा दिवि द्योतमाने स्वर्गे साकम् सह रोचनानि रोचमानानि दीप्यमानानि । 'अनुदात्तेतश्च हलादेः' (पा ३,२,१४९) इति युच्प्रत्ययः । भुवने भुवर्लोके अन्तरिक्षे सरीसृपाणि पुनःपुनः सर्पन्ति । सृपेर्यङ्लुगन्तात् पचाद्यच् । 'न धातुलोप आर्धधातुके' (पा १,१,४) इति लघूपधगुणाभावः । सरीसृपाणि इत्यनेन विलम्बगमनप्रतीतावाह— जवानि शीघ्रगामीनि अनुक्षणम्[9] आवर्तमानानि अहानि प्रत्यहम् एकैकनक्षत्रसद्भावाद् अहःशब्देन नक्षत्राण्युच्यन्ते । नाकम् । कम् सुखम् अकं दुःखम् न विद्यते अकं दुःखं यस्मिन् स नाकः स्वर्गः । 'नभ्राण्नपात्' (पा ६,३,७५) इति नञो नलोपाभावेन निपातितः । नाकं स्वर्गलोकम् । आसितानि इत्यध्याहारः । द्युलोकावस्थितानि नक्षत्राणि गीर्भिः स्तुतिरूपाभिर्वाग्भिः मन्त्रकरणकैर्हविर्भिर्वा सपर्यामि । सपर्यतिः परिचरणकर्मा[10] । परिचरामि । किमर्थं तद् आह—

१. गृह्णंति S'. २. तन्त्रैर्यथोक्तम् S'. ३. नक्षत्राणि अभयेनोपस्थाप्य S'.
४. क्षीरवृक्षाङ्कुरा अश्वयुग्भ्याम् Bol. ५. सर्पिर् नास्ति S'. ६. तुर्मिशं WM.; अष्टाविंशं RW. वैप १,१४८९ c द्र. ७. द्र. RW. वैद्र. शंपा. सात. सपर्यामि; Cs. सपर्यामि. ८. तु. मंपा. वैद्र. शंपा. सपर्यामि. ९. अनुक्षमाणम् S'. १०. परिचरणकर्मा परिचरणकर्मा S'.

तुर्मिशाम्[1] इति । तुर्मयो हिंसकाः हिंसाकारिणः तान् श्यति तनूकरोतीति तुर्मिशा। तुर्वेतेर्हिंसार्थाद् औणादिको मिप्रत्ययः[2]। 'लोपो व्योः°' (पा ६,१,६६) इति वलोपः। शो तनूकरणे इत्यस्माद् 'आतोनुपसर्गे कः' (पा ३,२,३)। यद्वा तुरो हिंसकान् मिषति स्पर्धते हिनस्तीति तुर्मिशा। मिष स्पर्धायाम् इत्यस्माद् मूलविभुजादित्वात् कप्रत्ययः[2]। मूर्धन्यस्य तालव्यादेशश्छान्दसः। एवंविधव्युत्पत्तिदर्शनाद्[3] अनवग्रहः। बाधकनिवारयित्रीं सुमतिम् शोभनाम्[4] अनुग्रहबुद्धिम् इच्छमानः इच्छन् कामयमानः। 'लक्षणहेत्वोः°' (पा ३,२,१२६) इति हेतौ शानच्प्रत्ययः। दुःखनिवारकनक्षत्रानुग्रहबुद्ध्येषणाद्धेतोरित्यर्थः। एवम् अस्मिन् मन्त्रे सर्वाणि नक्षत्राणि संघशः प्रार्थितानि।

अथ उत्तराभिर्ऋग्भिश्चतसृभिः कृत्तिकादीनि नक्षत्राणि प्रत्येकं प्राथ्यर्न्ते —

सुहवमग्ने[5] कृत्तिका रोहिणी चास्तु भद्रं मृगशिरः शमार्द्रा[6]।
पुनर्वसू सूनृता [7]चारु पुष्यो[7] भानुराश्लेषा अयनं मघा मे ॥ २ ॥

सुऽहवम्। अग्ने। कृत्तिकाः। रोहिणी। च। अस्तु[8]। भद्रम्। मृगऽशिरः। शम्[9]। आर्द्रा। पुनर्वसू इति पुनःऽवसू। सूनृता। चारु। पुष्यः[10]। भानुः। आऽश्लेषाः। अयनम्। मघाः। मे ॥

हे अग्ने कृत्तिकाः। कृत्तिकानक्षत्रस्य आग्नेयत्वाद् अग्निः संबोध्यते। एवम् उत्तरेषां रोहिण्यादीनां नक्षत्राणां तत्तद्देवता भावनीया इति ज्ञापयितुं[11] प्रथमम् अग्नेर्निर्देशः। तेजःप्रदेशोपाधिबहुत्वापेक्षया कृत्तिका इति बहुवचनम्। बहुप्रदेशाभिमानिनो नक्षत्रस्य ऐक्यात् सुहवम् अस्त्विति एकवचनम्। एवम् उत्तरेषु नक्षत्रेषु द्विवचनं बहुवचनं च प्रदेशोपाधिभेदाद् इत्यवगन्तव्यम्। कृत्तिकानक्षत्रं सुहवम् सुष्ठु आह्वातुम् अर्हम् अस्तु भवतु। स्वदोषांशं परित्यज्य अस्मदनुकूलं भवत्वित्यर्थः। रोहिणी रोहिणीनक्षत्रं च हे प्रजापतिदेवते सुहवम् अस्तु। मृगशिरः मृगस्य शिर इव प्रतीयमानम् एतत्संज्ञकं नक्षत्रम् हे सोम भद्रम् भन्दनीयं मङ्गलप्रदं भवतु। आर्द्रा नक्षत्रं रुद्रदेवत्यं शम् सुखकारि भवतु। पुनर्वसू एतत्संज्ञकम् अदितिदेवताकं सूनृता। प्रियसत्यात्मिका वाक् सूनृतेत्युच्यते। सा सर्वत्र भवतु वाक्प्रदं भवत्वित्यर्थः। पुष्यः तिष्यः बार्हस्पत्यः चारु श्रेयःप्रदम्। अस्तु इति योज्यम्। आश्लेषाः सर्पदेवत्यं नक्षत्रं भानुः दीप्तिः। दाभाभ्यां नुः (पाउ ३,३२) इति नुः। दीप्तिप्रदम्। मघाः पितृदेवत्यं एतत्संज्ञकं नक्षत्रं मे मम अयनम् गन्तव्यं स्थानम्। भवत्वित्यर्थः।

पुण्यं पूर्वा फल्गुन्यौ चात्र हस्तश्चित्रा शिवा स्वाति[12] सुखो मे अस्तु।

---

१. वेतु. मंपा. २. उभयथापि स्वरो दुरुपपादः. ३. °विधाब्यु° S'. ४. °नाद् S'.
५. सुहवं मे RW. ६. समाद्रा A,B^b; समार्द्रा Dc; समा° > शमा° Cs,S^m,Dc.
७. °पुष्यो P^2,M; चारु पुष्यो RW. ८. अस्तु J. ९. सम् P,P^2,J. १०. पुष्यः P. ११. ज्ञापयित्री S'. १२. स्वाती V,K,S, सा.; स्वातिः RW.

राधे[1] विशाखे सुहवानुराधा ज्येष्ठा सुनक्षत्रमरिष्ट[2] मूलम् ॥ ३ ॥

पुण्यम् । पूर्वाः । फल्गुन्यौ । च । अत्र । हस्तः । चित्रा । शिवा । स्वाति । सुऽखः । मे । अस्तु । राधे । विऽशाखे । सुऽहवा । अनुऽराधा । ज्येष्ठा । सुऽनक्षत्रम् । अरिष्ट । मूलम् ॥

पूर्वा पूर्वे फल्गुन्यौ अर्यमदेवत्यम् एतत्संज्ञकं पुण्यम् अस्तु । अत्र अस्मिन् नक्षत्रगणे फल्गुन्यौ उत्तरे च भगदेवत्यम् एतन्नक्षत्रं च । पुण्यम् इति अनुषङ्गः । हस्तः सावित्रः पुण्यप्रदोस्तु । चित्रा ऐन्द्री शिवा मङ्गलकारिणी । स्वाती[3] वायव्या मे मम सुखा[3] अस्तु । राधे विशाखे इति पदद्वयं विशाखानक्षत्रवाचि । राधासंज्ञकं विशाखासंज्ञकं च एकं नक्षत्रम् ऐन्द्राग्नं सुहवेति सुहवं भवत्विति लिङ्गवचनविपरिणामेन योज्यम् । अनुराधा राधे अनु राधयोः पश्चाद्भावि एतन्नामकं मैत्रं नक्षत्रं सुहवा सुष्ठु आह्वातुम् अर्हा । ज्येष्ठा ऐन्द्री च सुहवा । विचृन्नक्षत्रस्य मूलसंज्ञां निर्वक्ति अरिष्टमूलम्[3] इति । मूलमिति नक्षत्रस्य रूढं नाम न भवति किं तु यौगिकं सर्वेषाम् अरिष्टानां पादभेदेन पितृमातृस्वधननाशानां निदानम् । अरिष्टमूलम् इति वक्तव्ये मूलम् इति एकदेशेन व्यपदिशन्ति सत्यभामा भामेतिवत् । तादृशम् अरिष्टनिदानं मूलसंज्ञकं पितृदेवत्यं सुनक्षत्रम् शोभननक्षत्रं[4] मम श्रेयःप्रदं भवतु ।

अन्नं पूर्वा रासतां[5] मे अषाढा[6] ऊर्जं देव्युत्तरा[7] आ वहन्तु ।
अभिजिन्मे रासतां पुण्यमेव श्रवणः श्रविष्ठाः कुर्वतां सुपुष्टिम् ॥ ४ ॥

अन्नम् । पूर्वा[8] । रासताम् । मे । अषाढाः[9] । ऊर्जम् । [10]देवी । उत्ऽतराः[10] । आ । वहन्तु । अभिऽजित् । मे । रासताम् । पुण्यम् । एव । श्रवणः । श्रविष्ठाः । कुर्वताम्[11] । सुऽपुष्टिम् ॥

पूर्वा अषाढाः । तेजःप्रदेशबहुत्वापेक्षया बहुवचनम् । पूर्वाषाढाः अब्देवत्याः मे मह्यम् अन्नम् अदनीयं भोग्यं रासताम् ददतु[12] । रातेर्लोटि व्यत्ययेन आत्मनेपदम् । बहुलग्रहणाद् अलेट्यपि 'सिब्बहुलम्०' (पा ३,१,३४) इति सिप् । 'आत्मनेपदेष्वनतः' (पा ७,१,५) इति झस्य अदादेशः । यद्वा रासृ शब्दे । आत्मनेपदी । अनेकार्थत्वाद् धातूनाम् अत्र रासतिर्दानार्थे । नक्षत्रविवक्षया एकवचनम् । देवी देव्यः । बहुवचनस्य एकवचनम् आदेशः । उत्तराः अषाढाः वैश्वदेव्यः ऊर्जम् बलकरम् अन्नम् [13]अन्नरसम् आ वहन्तु[13] अस्मदभिमुखं प्रापयन्तु । अभिजित् अभिजयसाधनं ब्रह्मदेवत्यं नक्षत्रं मे मम पुण्यमेव रासताम् प्रयच्छतु पूर्ववद् रातेर्लोटि 'बहुलं छन्दसि (पा २,४,७३)

---

१. राधो RW.; वैप १,२६६१ c द्र. २. °रिष्टं RW. ३. वैतु. मंपा. ४. प्रादिसमासे स्वरः? ५. रासन्तां RW. ६. आषाढा C; अषाढा D. ७. देव्युत्तरु A,B[h],C,D,R,S[m],K[m],Dc,Cs,WM.; ये युत्तरु RW. ८. पूर्वाः इति न्याय्यं तु. सा. उत्तराः इति च. ९. आषाढाः P[2]. १०. देवि । उत्ऽतरे P,P[2],J. ११. कुर्वताम् P. १२. ददातु S'. १३. अंनरसनावहं S'.

इति शपो लुगभावः। पूर्ववत् सिबात्मनेपदे। रासतेर्वा रूपम्। श्रवणः विष्णुदेवत्यः श्रविष्ठाः धनिष्ठा वासव्यश्च सुपुष्टिम् शोभनां पुष्टिं पशुपुत्रादिपोषं कुर्वताम्।

आ मे॑ म॒हच्छ॒तभि॑ष॒ग् वरी॑य॒ आ मे॑ द्व॒या प्रोष्ठ॑पदा सु॒शर्म॑ ।
आ रे॒वती॑ चाश्व॒युजौ॒ भगं॑ म॒ आ मे॑ र॒यिं भर॑ण्य॒ आ व॑हन्तु ॥ ५ ॥

आ। मे॒। म॒हत्। श॒तऽभि॑षक्। वरी॑यः। आ। मे॒। द्व॒या। प्रोष्ठ॑ऽपदा। सु॒ऽशर्म॑।
आ। रे॒वती॑। च॒। अ॒श्व॒ऽयुजौ॑। भग॑म्। मे॒। आ। मे॒। र॒यिम्। भर॑ण्यः। आ। व॒ह॒न्तु॒ ॥ ५ ॥

शतभिषक् शतविशाखा ऐन्द्री वरीयः उरुतरम्। 'प्रियस्थिर' (पा ६,४,१५७) इत्यादिना उरुशब्दस्य ईयसुनि वर् आदेशः। उरुतरं फलं मे मम आ वहतु[1] आवहतु। वहेर्लेटि अडागमः। द्वया द्विप्रकारा। ङीपः स्थाने व्यत्ययेन टाप्प्रत्ययः। प्रोष्ठपदा अजैकपाद्देवत्या पूर्वाभाद्रपदा अहिर्बुध्न्यदेवत्या[2] उत्तराभाद्रपदा च सुशर्म शोभनं[3] सुखं[3] गृहं[3] वा मे आ वहतु इति क्रियानुषङ्गः। रेवती पौष्णी मे मम भगम् भाग्यम् आ वहतु। अश्वयुजौ अश्विदेवत्यौ आ वहताम् इति। भरण्यः याम्यो मे मम रयिम् धनम् आ वहन्तु प्रापयन्तु। द्वितीय आकारः पूरणः।

इति प्रथमेऽनुवाके अष्टमं सूक्तम्।

'यानि नक्षत्राणि' इति सूक्तस्य नक्षत्रहोमे पूर्वसूक्तेन सह उक्तो विनियोगः।

यानि॒ नक्ष॑त्राणि दि॒व्य१॒॑न्तरि॑क्षे[4] अ॒प्सु भू॒मौ यानि॒ नगे॑षु दि॒क्षु ।
प्र॒क॒ल्पयँ॑श्च॒न्द्रमा॑[5] यान्येति॒ सर्वा॑णि॒ ममै॒तानि॑ शि॒वानि॑ सन्तु ॥ १ ॥

यानि॑। नक्ष॑त्राणि। दि॒वि। अ॒न्तरि॑क्षे। अ॒प्ऽसु। भू॒मौ। यानि॑। नगे॑षु। दि॒क्षु।
प्र॒ऽक॒ल्पय॑न्[6]। च॒न्द्रमाः॑। यानि॑। एति॑। सर्वा॑णि। मम॑। ए॒तानि॑। शि॒वानि॑। स॒न्तु॒ ॥१॥

दिवि द्युलोके अन्तरिक्षे मध्यमलोके अप्सु उदकेषु भूमौ पृथिव्यां नगेषु पर्वतेषु दिक्षु च यानि नक्षत्राणि दृश्यन्ते द्युलोके देवतात्मना अन्तरिक्षे तेजोमण्डलाकारेण अप्सु प्रतिबिम्बनेन। उदये च अस्तमयकाले च भूमिसमानदेशे पर्वतसमानप्रदेशे च प्रतीतेर्भूमिः[7] पर्वताश्च अधिकरणत्वेन[8] उच्यन्ते। दिक्षु प्रतीतिस्तु स्फुटा। चन्द्रमाः यानि नक्षत्राणि प्रकल्पयन् प्रकर्षेण कल्पयन्[9] संभोगसमर्थानि कुर्वन् प्रोत्साहयन् एति प्राप्नोति एतानि सर्वाणि नक्षत्राणि मम शिवानि सुखकराणि सन्तु भवन्तु।

अ॒ष्टा॒वि॒ंशानि॑ शि॒वानि॑ श॒ग्मानि॑ स॒ह योगं॑ भजन्तु मे ।

---

१. वैतु. मैपा. २. °बुध्न्या S'. ३. प्रादिसमासे स्वरः? ४. दिव्यंऽन्त° A,B,C,R,S^m. ५. तु. RW. वैतु. शंपा. सात. प्रकल्पयं°. ६. तु. मैपा. वैतु. शंपा. प्रऽकल्पयन्. ७. °मि S'. ८. °करणेन S'. ९. प्रकल्पयन् S'.

योगं प्र पद्ये क्षेमं च क्षेमं प्र पद्ये योगं च नमोऽहोरात्राभ्यामस्तु ॥ २ ॥

अष्टाऽविंशानि । शिवानि । शग्मानि । सह । योगम् । भजन्तु । मे ।
योगम् । प्र । पद्ये । क्षेमम् । च । क्षेमम् । प्र । पद्ये । योगम् । च । नमः । अहोरात्राभ्याम् । अस्तु ॥

अष्टाविंशानि प्रत्येकम् अष्टाविंशतेः संख्यायाः पूरणानीति सर्वाणि अष्टाविंशानीत्युक्तम् । पूरणार्थे डट्प्रत्यये कृते 'ति विंशतेर्डिति' (पा ६,४,१४२) इति तिशब्दस्य लोपः । 'अष्टनः संख्यायाम्' (पा ६,३,४७) इति अष्टशब्दस्य आत्त्वम् । [1]कृत्तिकेत्यादीनि भरणीत्यन्तानि[1] शिवानि सुखदर्शनानि शग्मानि । सुखनामैतत् । सुखप्रदानि तानि सर्वाणि नक्षत्राणि मे मदर्थं मम फलं दातुम् । 'क्रियार्थोपपदस्य' (पा २,३,१४) इति चतुर्थी । सहयोगम्[2] सहभावम् ऐकमत्यं भजन्तु प्राप्नुवन्तु । नक्षत्राणां मदर्थं सहयोगाद् अहं योगम् । अलब्धवस्तुप्राप्तिर्योगः । तं प्र पद्ये पूर्वम् अलब्धानि वस्तूनि नक्षत्रप्रसादाल्लभेय । क्षेमम् । लब्धवस्तुपरिपालनं क्षेमः । तं च प्र पद्ये । क्षेमस्य अन्वाचयशिष्टत्वेन अप्राधान्यशङ्कां वारयितुं तत्प्राधान्येन पुनराह— क्षेमं प्र पद्ये योगं चेति । अनेन योगक्षेमयोः प्राधान्यम् । अहनि रात्रौ च नक्षत्राणां संचरणात् तयोरानुकूल्यकरणं नमोऽहोरात्राभ्याम् अस्त्विति । अहश्च रात्रिश्च । 'अहःसर्वैकदेश' (पा ५,४,८७) इति अच् समासान्तः । ताभ्यां नमः नमस्कारोऽस्तु ।

[3]स्वस्तितं मे[3] सुप्रातः सुसायं सुदिवं सुमृगं सुशकुनं[4] मे[4] अस्तु ।
सुहवमग्ने स्वस्त्य१मर्त्यं[5] गत्वा पुनरायाभिनन्दन् ॥ ३ ॥

स्वस्तितम्[6] । मे । सुऽप्रातः । सुऽसायम् । सुऽदिवम् । सुऽमृगम् । सुऽशकुनम्[7] । मे । अस्तु ।
सुऽहवम् । अग्ने । स्वस्ति । अमर्त्यम्[5] । गत्वा । पुनः । आय[8] । अभिऽनन्दन् ॥ ३ ॥

पूर्वमन्त्रे योगक्षेमप्रपदनं प्रार्थितं तद् विशिनष्टि— मे मम तत्[2] वक्ष्यमाणं स्वस्ति[2] इत्यविनाशिनाम[9] । अविनश्वरं तत् फलं भवतु । सुप्रातः प्रातःकालः शोभनः सुखो भवतु । प्रातरादिशब्दैः सह सुशब्दः समृद्ध्यर्थे समस्यते । स समासः अव्ययीभावः[10] । प्रातःकालाः सुकारित्वेन समृद्धा भवन्तु । सुसायम् सायंकाला अपि सुखाः समृद्धाः । सुदिनम्[2] दिनशब्दः अहोरात्रपरः । सुखानि

1. कृत्तिकेत्यादीनि भरणी नास्ति S'. 2. वैतु. मंपा. 3. स्वस्तितं मे $S^m$; स्वस्तितं मे > स्वस्तितं मे > स्वस्तितं मे Dc; स्वस्ति तन्मे K, $K^m$, V, सा.; स्वस्तमितं मे RW. 4. तु. RW. सुप्रातः प्रभृ. च. वैतु. शंपा. सात. सुशकुनं मे. 5. स्वस्त्य१° C, D, K, $K^m$, $S^m$, Dc; °स्त्यमर्त्यं मर्त्यं RW. वैप १,३८२ b द्र. 6. स्वस्तितम् > स्वस्ति । तम् $P^2$; स्वस्ति । तत् K. 7. तु. मंपा. D, L च. वैतु. शंपा. सुऽशकुनम्. 8. आया P, WM; आ° WM. 9. °नाशनाम S'. 10. सुप्रातसुदिवयोः बहुव्रीहावच्प्रत्ययान्तत्वमपि न्याय्यं द्र. तु. (पा ५,४,१२०).

अहानि सुखा रात्रयश्च। सुमृगम् मृगा हरिणादयः अर्थार्थम् अनुकूले नक्षत्रे गच्छतो मम भाविफलसूचकत्वेन अनुकूलगतिचेष्टायुक्ता भवन्तु। एवं सुशकुनम् शकुनाः काकादयः स्वरगतिचेष्टादिभिः अनुकूला मे सन्तु। एवं नक्षत्राणि संप्रार्थ्य नक्षत्राधिदेवताः प्रार्थयते। हे अग्ने कृत्तिकानक्षत्रदेवताऽग्निः तदुपलक्षिताः सर्वनक्षत्रदेवता यूयं सुहवम् सुष्ठु आह्वातुमर्हम् अमर्त्यम् अमरणधर्माणम् अविनश्वरं द्युलोकं स्वस्ति क्षेमेण गत्वा अभिनन्दन् हविःप्रदातॄन् अभिलक्ष्य हृष्यन् पुनः आय आगच्छ। प्रत्येकविवक्षया एकवचनम्। केवलोऽग्निरेव वा संबोध्यते। हे अग्ने सुहवम् सुष्ठु[1] हविः[1] [2]तत्तद्देवतार्हं हविः अमर्त्यम्[2] अमरणधर्मकं तत्तन्नक्षत्रदेवतासंघं स्वस्ति क्षेमेण गत्वा अन्तर्णीतण्यर्थः। गमयित्वा पुनः अस्मान् अभिनन्दन् आय आगच्छ। इ गतौ। भौवादिकः। आङ्पूर्वस्य लोटि हौ रूपम्।

अनुहवं परिहवं परिवादं परिक्षवम्[3]।
[4]सर्वैर्मे रिक्तकुम्भान् परा† तान्त्सवितः[4] सुव[5] ॥ ४ ॥

अनुऽहवम्। परिऽहवम्। परिऽवादम्। परिऽक्षवम्[6]।
सर्वैः। मे। रिक्तऽकुम्भान्। [7]परा। तान्[7]। सवितरिति। सुव ॥ ४ ॥

अनुकूले नक्षत्रे धनार्थं गच्छतः पुरुषस्य भाविकार्यप्रतिबन्धकानि पश्चादाह्वानादीनि दुर्निमित्तानि। तेषां निवारणम् आशास्ते। अनुहवम् पुरो गच्छतः पुरुषस्य नाम गृहीत्वा पश्चाद्भागावस्थायिना पुरुषेण आह्वानम् अनुहवः। परितः पार्श्वद्वये आह्वानं परिहवः। परुषभाषणं[8] परिवादः। परितः सर्वतः क्षवः क्षुतं परिक्षवः। अथवा वर्जनार्थे परिशब्दाः। वर्जिते[9] प्रदेशे पुरोभागलक्षणे क्षुतं क्षवः परिक्षवः। रिक्तकुम्भाः शून्यकलशाः। तान् उक्तान् अनुहवादीन् दुर्निमित्तदोषान् मे मम कार्यार्थं गच्छतो हे सवितः सर्वस्य प्रसवितः अनुज्ञातर्देव सर्वैः नक्षत्रदेवैः सहितः सन्[10] परा सुवः[11] पराकुरु। षू[12] प्रेरणे। तौदादिकः।

अपपापं[13] परिक्षवं[14] पुण्यं भक्षीमहि[15] क्षवम्[16]।
[17]शिवा ते पाप नासिकां पुण्यगश्चाभि मेहताम्[17] ॥ ५ ॥

---

१. प्रादिसमासे स्वरः ? २. °द्देवत्यं हं हविः मर्त्यं S'. ३. परिक्षवम् D; परिक्षुवम् C,R,Bᵇ,Cs; परिक्षपम् पै २०,४६,१. ४. सर्वाणि रिक्तकुम्भान्परा तान्त्सवितः RW. † परा A,Bᵇ,C,D,R,Sᵐ,Cs; पारा WM.; परा > परा Dc. ५. सुवः A,D,Sᵐ. ६. परिऽक्षुवम् P,J. ७. परातान् P,J. ८. रुभाषणं S'. ९. गर्जिते S'. १०. सः S'. ११. वैतु. मंपा. १२. षु S'. १३. अपं पापं RW., सा. १४. परिक्षुवं C,R,Bᵇ,Cs; परिक्षुवं > परिक्षवं Dc; परिक्षपं पै २०,४६,२. १५. स्वरः ? भक्षीमहि RW. १६. क्षपम् पै. १७. शिवमाघ्राय नासिका पुण्यगन्धीनि मेघताम् RW.

अप॒ऽपा॒पम् । परि॑ऽक्ष॒वम्[१] । पुण्य॑म् । भ॒क्षी॒म॒हि॒ । क्षवम्[२] ।
शि॒वा । ते॒ । पा॒प॒[३] । ना॒सि॑काम्[३] । पुण्य॑ऽगः । च॒ । अ॒भि । मे॒ह॒ताम्[४] ॥ ५ ॥

अत्रापि दुर्निमित्तदोषपरिहार आशास्यते — पापम्[५] पापावहम् अहितनिमित्तं परिक्षवम् कष्टप्रदेशे क्षुतम् अप[५] । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । अपगमयेम । न केवलम् अहितनिवारणं किं तु क्षवम् दुर्निमित्तरूपं क्षुतं पुण्यम् श्रेयस्करं भक्षीमहि लप्सीमहि । भज सेवायाम् । आशीर्लिङि कर्त्रभिप्राये क्रियाफले आत्मनेपदम् । 'एकाच उपदेशेनुदात्तात्' (पा ७,२,१०) इति इट्प्रतिषेधः । उत्तरार्धम् ऋत्विग्वचनम् । [६]धनार्थं प्रयास्यतः पुरुषस्य पथि शिवागमनं शिवादर्शनं तद्ध्वनिश्रवणं नपुंसकदर्शनं च निषिद्धम् । तत्परिहारायाह — हे पुरुष शिवा । क्रोष्टुनामैतत् । नियतं[६] स्त्रीलिङ्गम् । विरुद्धं शब्दायमानापि शिवा ते तव गच्छतः पापनाशिका[५] दुर्निमित्तदोषनिवारिका भवतु । तथा पण्डकः[५] नपुंसकः पुरुषश्च अभिमेधताम्[५] प्रोत्साहयतु । स्वदर्शनस्पर्शनादिदोषं[७] परिहार्य त्वत्कार्यसिद्ध्यनुकूलो[८] भवतु । मेधृ संगमे । भौवादिकः । अभिमेधनं नाम प्रोत्साहनम् इति आपस्तम्बेनोक्तम् — 'पत्नयोभिमेधन्ते'[९] (आपश्रौ २०,१८,५) इति ।

इ॒मा या ब्र॑ह्मणस्पते॒ विषू॑ची॒र्वात॒ ईर॑ते ।
स॒ध्रीची॑रिन्द्र॒ ताः कृ॒त्वा मह्यं॑ शि॒वत॑मास्कृधि[१०] ॥ ६ ॥

इ॒माः । याः । ब्र॒ह्म॒णः॒ । प॒ते॒ । विषू॑चीः । वातः॑ । ईर॑ते ।
स॒ध्रीचीः॑ । इ॒न्द्र॒ । ताः । कृ॒त्वा । मह्य॑म् । शि॒वऽत॑माः । कृ॒धि॒ ॥ ६ ॥

हे ब्रह्मणस्पते । उत्तरार्धे इन्द्रेति निर्देशात् तस्य विशेषणम् एतत् । ब्रह्मणः मन्त्रसंघस्य पते स्वामिन् सर्वमन्त्रप्रतिपाद्य इन्द्र इमाः परिदृश्यमाना याः प्राच्यादिदिशः कर्म । वातः वात्यारूपो वायुः विषूचीः विष्वगञ्चना[११] ईरते ईर्ते । यथा प्राच्यादिदिग्विभागो न भवति तथा परिभ्रमयतीत्यर्थः । प्राची वा प्रतीचीवत् प्रतीयते प्रतीची वा प्राचीवत् प्रतीयते अन्यदिगात्मना वा प्रतीयते तथा व्यामोहयतीति यावत् । महावाते वाति एवं भवतीति प्रसिद्धिः । विषूचीरिति । विषुशब्दोपपदाद् अञ्चतेः क्विन् । 'अञ्चतेश्चोपसंख्यानम्' (पा ४,१,६) इति ङीप् । 'अचः' (पा ६,४,१३८) इति अकारलोपे 'चौ' (पा ६,३,१३८) इति दीर्घः । ईर गतौ । आदादिकोनुदात्तेत् । 'बहुलं छन्दसि' (पा २,४,७३) इति शपो लुगभावः । हे इन्द्र ता विषूचीर्दिशः

---

१. परि॑ऽछ॒वम् P. २. छवम् P. ३. वैप १,१७९५ l,m द्र. ४. तु. सा.; वैतु. मे॒ । ह॒ताम् P,P²,J.. ५. वैतु. मपा. ६. धनार्थं प्रयास्यन् पुरुषेण पथि शिवागं शिवा क्रोष्टुनामैतत् । दर्शनं तध्वनिश्रवणं नपुंसकदर्शनं च निषिद्धं तत्परिहारायाह हे पुरुष ... नियतं S'. ७. स्वदर्शस्पर्शनादिदोष° S'. ८. तत्कार्य° S'. ९. तस्मनयोभि° S'. १०. °माकृधि B. ११. विष्वगच S'.

सध्रीचीः सहाञ्चना यथास्थितप्रदेशावस्थायिनीः कृत्वा मह्यं मदर्थं शिवतमाः अत्यर्थं सुखकारिणीः कृधि कुरु। सहपूर्वाद् अञ्चतेः क्विनि 'सहस्य सध्रिः' (पा ६,३,९५) इति सध्र्यादेशः।

सप्तमो मन्त्रो यजूरूपः पठ्यते—

स्वस्ति नो अस्त्वभयं नो अस्तु नमोऽहोरात्राभ्यामस्तु ॥ ७ ॥

स्वस्ति। नः। अस्तु। अभयम्। नः। अस्तु। नमः। अहोरात्राभ्याम्। अस्तु ॥ ७ ॥

नः अस्माकम्। स्वस्ति इत्यविनाशिनाम। तद् अस्तु। अभयम् भयराहित्यं च नः अस्माकम् अस्तु। भयादिकं तु अहनि रात्रौ वा संभवतीति तत्परिहारायाह— नमोऽहोरात्राभ्याम्। अह्ने रात्रये च नमः नमस्कारोऽस्तु।

इति प्रथमेऽनुवाके नवमं सूक्तम्।

प्रत्यहं कर्तव्ये राज्ञो वासगृहप्रापणकर्मणि शर्कराप्रक्षेपानन्तरं 'शान्ता द्यौः' इति शान्तिसूक्तं जपेत्। 'अथातो रात्रिसूक्तानां[1] विधिम् अनुक्रमिष्यामः' इति प्रक्रम्य उक्तं परिशिष्टे— "'त्र्यायुषम्' (शौ ५,२८,७) इति राज्ञे रक्षां कृत्वा। 'असपत्नम्' (शौ १९, १६) इति शर्करा अभिमन्त्र्य अङ्गुष्ठात् प्रदक्षिणं प्रतिदिशं क्षिपेत्। 'शान्ता द्यौः' इति जपित्वा राजानं वासगृहं नयेत्" (अप ४,५,१;१२-१४) इति।

पिष्टरात्रिकल्पेऽपीदं[2] शान्तिसूक्तं विनियुक्तम्। (द्र. अप ६,२,६)

अस्य सूक्तस्य शान्तिप्रतिपादकत्वेन शान्तिगणे पाठाद् 'आयुष्यः शान्तिः स्वस्तिगण ऐरावत्याम्' (शांक १८,८) इति ऐरावत्यादिषु विनियोगो द्रष्टव्यः।

शान्ता द्यौः शान्ता पृथिवी शान्तमिदमुर्व१न्तरिक्षम्[3]।
शान्ता उदन्वतीरापः शान्ता नः सन्त्वोषधीः ॥ १ ॥

शान्ता। द्यौः। शान्ता। पृथिवी। शान्तम्। इदम्। उरु। अन्तरिक्षम्।
शान्ताः। उदन्वतीः। आपः। शान्ताः। नः। सन्तु। ओषधीः ॥ १ ॥

अस्मिन् सूक्ते सर्वतः शान्तिः प्रतिपाद्यते। 'या तेनोच्यते सा देवता' (ऋअ १,२,५) इति न्यायात् शान्तिरेव देवता। शान्तिर्नाम अनिष्टपरिहारेण सुखकारिरूपता। अतोऽत्र शान्तिकारिणः पदार्थविशेषान् आह शान्ता द्यौः इत्यादिना। द्यौः

---

1. रात्री° S'. 2. पिष्टपिष्टरात्रे कल्पे° S'. 3. °मुर्वुरुन्त° A,B^h,C,D,R,S^m.

द्युलोकः शान्ता अस्तु । शमु उपशमे । कर्तरि क्तप्रत्ययः । दोषाणां शमयित्री स्वनिबन्धनोपद्रवशमनेन अस्य सुखकारिण्यस्त्वित्यर्थः । एवम् उत्तरत्रापि । पृथिवी प्रथिता भूमिः शान्ता अस्तु । इदं परिदृश्यमानम् उरु विस्तीर्णम् अन्तरिक्षम् अन्तरा क्षान्तं मध्यमलोकः शान्तम् अस्तु । उदन्वतीः उदन्वान् उदकवान् उदधिः । 'उदन्वान् उदधौ च' ( पा ८,२,१३ ) इति उदकशब्दाद् मतुपि उदन्भावो निपात्यते । 'तत्र भवः' ( पा ४,३,५३ ) इति भवार्थे अण् । 'संज्ञापूर्वको विधिरनित्यः' इति आदिवृद्धेरभावः । [1]'कार्ये वा कारणशब्दः'[1] । 'वा छन्दसि' ( पा ६,१,१०६ ) इति यणादेशाभावे पूर्वसवर्णदीर्घः । ता आपः शान्ताः सन्तु ओषधीः ओषः पाको धीयते आस्विति ओषध्यः । ता नः शान्ताः सन्तु ।

शान्तानि पूर्वरूपाणि शान्तं नो अस्तु कृताकृतम् ।
शान्तं भूतं च भव्यं च सर्वमेव शमस्तु नः ॥ २ ॥

शान्तानि । पूर्वऽरूपाणि । शान्तम् । नः । अस्तु । कृतऽअकृतम् ।
शान्तम् । भूतम् । च । भव्यम् । च । सर्वम् । एव । शम् । अस्तु । नः ॥ २ ॥

पूर्वरूपाणि कार्यापेक्षया पूर्वरूपाणि कारणावस्थापन्नानि वस्तूनि कृताकृतम् कृतं कार्यजातम् अकृतम् अनिष्पन्नं नित्यं मे[2] मदर्थं शान्तानि यद्वा मदीयानि पूर्वरूपाणि पूर्वाणि रूपाणि दुष्कृतफलभूतानि प्राक्तनानि जन्मानि शान्तानि सन्तु । पूर्वेषु जन्मसु तत्तत्कर्मणो भोगादेव तत्कृतानिष्टाभावः अतः किमिति एषां शान्तित्वाशासनम् इति । नैष दोषः । प्राक्तनजन्मापादकस्य कर्मणोऽभावेपि तत्तज्जन्मकृतदुष्कृतकर्मण उत्तरत्र तिर्यगादिजन्मप्रापकत्वे तत्परिहाराय तच्छान्तिराशास्या । तथा मे मदीयं कृताकृतम् । इह कृतशब्देन सम्यग् अनुष्ठितं कर्म न विवक्ष्यते किं तु विरुद्धम् आचरितम् अकृतम् अननुष्ठितं स्वाश्रमविहितं कर्म नित्यनैमित्तिकरूपम् । तद् उभयं शान्तम् अस्तु । 'क्तेन नञ्विशिष्टेनानञ्' ( पा २,१,६० ) इति कृतशब्दः अकृतेन समस्यते । विरुद्धाचरणविहितानाचरणयोः पतनहेतुत्वं स्मर्यते—

'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनम् ऋच्छति ॥' (प्रायश्चित्तविवेक) इति ।

भूतम् उत्पन्नं भव्यम् भविष्यत् । परस्परसमुच्चयार्थौ चकारौ । तद् उभयं शान्तम् । किं बहुना । सर्वम् कालत्रयावच्छिन्नम् उक्तम् अनुक्तं च सर्वं नः अस्माकं [3]शम् दोषशमयितृ[3] सुखमेव अस्तु भवतु ।

---

१. कार्यो वा कारणशेषः S'. २. वेदु. मेपा. ३. शदोष शमयि S'.

इयं या परमेष्ठिनी वाग् देवी ब्रह्मसंशिता ।
ययैव ससृजे[1] घोरं तयैव शान्तिरस्तु नः ॥ ३ ॥

इयम् । या । परमेऽस्थिनी । वाक् । देवी । ब्रह्मऽसंशिता ।
ययां । एव । ससृजे । घोरम् । तयां । एव । शान्तिः । अस्तु । नः ॥ ३ ॥

परमे स्थाने तिष्ठतीति परमेष्ठिनी परमेष्ठिनो ब्रह्मणः पत्नी वा । 'तत्पुरुषे कृति बहुलम्' ( पा ६,३,१४ ) इति सप्तम्या अलुक् । ब्रह्मसंशिता ब्रह्मभिर्मन्त्रैः सम्यग् उत्तेजिता[2] सकलवैदिकवाक्यप्रतिपादितस्वरूपा इयं विद्वद्भिः स्वात्मभूतेन सम्यग् अनुभूयमाना या वाग्देवी वर्तते ययैव वाग्देव्या घोरम् परेषाम् अरुन्तुदं वचः शापादिरूपं ससृजे सृष्टम् उच्चरितं तयैव वाचा नः अस्मदर्थं शान्तिरस्तु "वाचा सृष्टस्य[3] घोरकर्मणः शान्तिर्भवतु । [4]यद् वाचा अनर्थजातम्[4] उत्पन्नं तदेव स्वकृतम् अनर्थं परिहरत्वित्यर्थः । एवम् उत्तरयोर्मन्त्रयोरपि योज्यम् ।

इदं यत् परमेष्ठिनं मनो वां[5] ब्रह्मसंशितम् ।
येनैव ससृजे[6] घोरं तेनैव शान्तिरस्तु नः ॥ ४ ॥

इदम् । यत् । परमेऽस्थिनम् । मनः । वाम् । ब्रह्मऽसंशितम् ।
येनं । एव । ससृजे । घोरम् । तेनं । एव । शान्तिः । अस्तु । नः ॥ ४ ॥

परमेष्ठिनम् परमे उत्कृष्टे स्थाने तिष्ठतीति परमेष्ठी । तेन सृष्टम् । 'तदसदेव[7] सन्मनोकुरुत स्याम् इति' ( तैब्रा २,२,९,१ ) इति सृष्ट्यादौ मनःसृष्टिरुक्ता । आदिवृद्ध्यभावश्छान्दसः[8] । ब्रह्मसंशितम् ब्रह्मणा सृज्यविषये तीक्ष्णीकृतम् इदं सर्वजगन्मूलकारणं यत् मनः विद्यते येनैव मनसा घोरं कर्म ससृजे तेनैव मनसा नः अस्मदर्थं मनःसृष्टस्य घोरकर्मणः शान्तिरस्तु ।

इमानि यानि पञ्चेन्द्रियाणि मनःषष्ठानि[9] मे हृदि ब्रह्मणा संशितानि ।
यैरेव ससृजे[10] घोरं तैरेव शान्तिरस्तु नः ॥ ५ ॥

इमानि । यानि । पञ्च । इन्द्रियाणि । मनःऽपष्ठानि[11] मे । हृदि । ब्रह्मणा । सम्ऽशितानि ।
यैः । एव । ससृजे । घोरम् । तैः । एव । शान्तिः । _स्तु । नः ॥ ५ ॥

---

१. ससृजे > संसृजे Dc. २. उत्तेजिता. ३. स्मसृष्टस्य S'. ४. यतवा नर्थं° S'. ५. वा S,RW. ६. संसृजे K,K^m,C,R,V; ससृजे > संसृजे Dc. ७. तद् नास्ति S'. ८. तथा सति स्वरः? ९. द्र. मा.; वैद्र. A,B^h,C,D,K,K^m,R, S^m,V,Dc,Cs; 'पृष्ठानि. १०. संसृजे K,K^m,V; ससृजे > संसृजे Dc. ११. द्र. सा.; वैद्र. P,P^s,J. मनः। पृष्ठानि.

मनःषष्ठानि मनः षष्ठं येषां तानि। पूर्वमन्त्रे मनसः पृथगुक्तावपि[1] चक्षुरादिसर्वेन्द्रियाणां स्वस्वविषयज्ञाने मनःसाहाय्यस्य अवश्यम् अपेक्षणीयत्वाद् अत्रापि मनस उपादानम्। मनःसहितानि इमानि यानि पञ्च इन्द्रियाणि ज्ञानेन्द्रियाणि मे हृदि हृदयप्रदेशे वर्तन्ते। हृदयं हि आत्मनिवासस्थानम्। सुषुप्तिकाले स्वस्वकारणरहितानि सर्वेन्द्रियाणि आत्मनि लीयन्त इति हृदीत्युक्तम्। इन्द्रियाणि विशिनष्टि— ब्रह्मणा चेतनेन आत्मना नियन्त्रा संशितानि स्वस्वविषयेषु व्यापारितानि। विषयप्रवणत्वमेव संशितत्वम्। यैरेव इन्द्रियैः घोरम् पापावहं कर्म ससृजे सृष्टं तैरेव इन्द्रियैः सृष्टस्य घोरकर्मणो नः अस्मदर्थं शान्तिः शमनम् अस्तु।

शं नो॑ मि॒त्रः शं वरु॑णः [2]शं विष्णुः॒ शं प्र॒जाप॑तिः[2]।
शं न॒ इन्द्रो॒ बृह॒स्पतिः॒ शं नो॑ भवत्वर्य॒मा ॥ ६ ॥

शम्। नः॒। मि॒त्रः। शम्। वरु॑णः। शम्। विष्णुः॑। शम्। प्र॒जाऽप॑तिः।
शम्। नः॒। इन्द्रः॑। बृ॒ह॒स्पतिः॑। शम्। नः॒। भ॒व॒तु॒। अ॒र्य॒मा ॥ ६ ॥

मित्रः सूर्यः अहरभिमानी। वरुणः रात्र्यभिमानी। विष्णुः व्यापको देवः। प्रजापतिः प्रकर्षेण जायमाना देवतिर्यङ्मनुष्यादयः प्रजाः तासां पतिः पालकः। इन्द्रः परमैश्वर्यसंपन्नः। बृहस्पतिः बृहतां देवानां पतिः हितकारित्वेन पालकः। अर्यमा। अर्तेर्धातोः अर्यमन्शब्दो निपातितः। मित्रादयः अर्यमान्ताः सर्वे देवा नः अस्माकं शम् शान्त्यै भवन्तु। वाक्यभेदात् शम् इति पदस्य प्रतिवाक्यं प्रयोगः।

शं नो॑ मि॒त्रः शं वरु॑णः॒ शं वि॒वस्वां॒छमन्त॑कः।
[3]उ॒त्पा॒ताः पार्थि॑वा॒न्तरि॑क्षाः[†] शं नो॑[3] दि॒विच॑रा ग्र॒हाः ॥ ७ ॥

शम्। नः॒। मि॒त्रः। शम्। वरु॑णः। शम्। वि॒वस्वा॑न्[4]। शम्। अन्त॑कः।
उ॒त्ऽपा॒ताः[5]। पार्थि॑वाः[6]। आ॒न्तरि॑क्षाः[7]। शम्। नः॒। दि॒वि॒ऽच॑राः। ग्र॒हाः ॥ ७ ॥

मित्रवरुणौ व्याख्यातौ। विवस्वान् विवासयति अपगमयति तम इति विवस्वान्। विपूर्वाद् [8]वसेर्वसुः। यद्वा। धनस्य नाम विव इति। तद् अस्यास्तीति मतुप्। 'मादुपधायाः'' (पा ८,२,९) इति वत्वम्। अन्तकः सर्वेषां प्राणिनाम् अन्तम् अवसानं करोतीति अन्तकः। अन्तोपपदात् करोतेः 'डोन्यत्रापि दृश्यते' (गाधा ३,२,४८) इति

---

१. °क्तापि S'. २. शं नो विष्णुरुरुक्रमः ऋ १,९०,९ मा ३६,९. ३. उत्पाताः° K,Km; उत्पाताः° Sm; उत्पाताः° > उत्पाताः° Dc. वैर १,८९० m द्र. † स्वरः? वैप १, २१०४ b द्र. °रिक्षाछंनो A,Bh,C,R,Cs; °रिक्षान्छंनो D; °ताः पार्थिवान्तरिक्षाः शं नो R.W. ४. विवस्वान् P². ५. उत्। पाताः P². ६. पार्थिवाः इति न्याय्यम् (तु. सा. अ १९, ११,२ च). ७. स्वरः? अंतरिक्षाः P,P²,J. ८. वसुप्रत्यये स्वरः?

डः[1]। पार्थिवाः[2] पृथिव्यां भवाः आन्तरिक्षाः अन्तरिक्षे मध्यमलोके भवा उत्पाताः । शं भवन्तु इति शेषः। दिविचराः दिवि द्युलोके चराः[3] संचरन्तो ग्रहाः कालचक्रवशात् परिभ्राम्यन्तः अङ्गारकाद्याः । मित्रादयः सर्वेपि नः अस्माकं शम् दोषशमकाः सुखकरा भवन्तु ।

शं नो भूमिर्वेप्यमाना[3] शमुल्का निर्हतं[4] च यत् ।
शं गावो लोहितक्षीराः[5] शं भूमिरव तीर्यतीः[6] ॥ ८ ॥

शम् । नः । भूमिः । वेप्यमाना[7] । शम् । उल्का । निःऽहतम् । च । यत् ।
शम् । गावः । लोहितऽक्षीराः । शम् । भूमिः । [8]अव । तीर्यतीः[8] ॥ ८ ॥

पार्थिवान् आन्तरिक्षांश्च उत्पातान् आह—वेप्यमाना कम्पमाना । व्यत्ययेन कर्तरि श्यन्प्रत्ययः[9] । यद्वा प्राणिसंहारककालेन वेप्यमाना कम्प्यमाना । कर्मणि 'सार्वधातुके यक्' (पा ३,१,६७) इति यक्प्रत्ययः। सा भूमिः नः अस्माकं शम् शान्त्यै कम्पदोषपरिहाराय भवतु। तथा उल्कानिहतम्[10] उल्काभिः आयतज्वालारूपेण पतन्तीभिर्बाधितं दग्धं यद् विद्यते तत् च शम् अस्तु । लोहितक्षीराः लोहितमेव क्षीरं यासां ताः लोहितदोग्ध्र्यो गावः च शम् दोषनिर्हारिका भवन्तु। अवदीर्यती[10] अवदीर्यमाणा। दॄ विदारणे। 'ॠत इद्धातोः' (पा ७,१,१००) इति इत्त्वम् । 'हलि च' (पा ८,२,७७) इति दीर्घः । व्यत्ययेन लटः शत्रादेशः । अवदीर्यमाणा द्विधा भवन्ती भूमिः च शं भवतु । भूमिः कम्पनविदरणदोषजनितम् अनर्थं शमयतु । अन्तरिक्षम् उल्काभिहननजनितं दुरितं गावो लोहितदोहनजं शमयन्तु इति ।

नक्षत्रमुल्काभिहतं[11] शमस्तु नः शं नोभिचाराः शमु सन्तु कृत्याः ।
शं [12]नो निखाता[12] वल्गाः[13] शमुल्का देशोपसर्गाः शमु नो भवन्तु ॥९॥

नक्षत्रम् । उल्का । अभिऽहतम् । शम् । अस्तु । नः । शम् । नः । अभिऽचाराः । शम् । ऊं इति । सन्तु । कृत्याः । शम् । नः । निऽखाताः[14] । वल्गाः[15] । शम् । उल्काः[16] । देशोपऽसर्गाः । शम् । ऊं इति । नः । भवन्तु ॥ ९ ॥

---

१. उपपदसमासे स्वरः? २. वैतु. मंपा. ३. °वेप्यमाना इति न्याय्यं. तु. सा. वै १ १, २८७६ । च. °वेप्यमाणा Bh; °वेप्यमाणाः Dc,Km,D,C,Sm; °वेप्यमानाः R; भूमिर्वेपमाना RW. ४. °निहतं V; °निर्हतं Sm; °निहतं K,Km,J; शमुल्कानिर्हतं RW. वैप १, ९७५ a द्र. ५. लोहित:° Bh,C,D,R,Cs,WM.; °क्षीराः WM. ६. भूमिरवदीर्यती V,W; भूमिरवतीर्यती RW ; वैप १,४५१ i द्र. ७. वेप्युमाणाः P,Ps J. ८. अवतीः। युती: P,Ps,J,WM. ९. श्यन्प्रत्यये स्वरः? १०. वैतु. मंपा. ११. °भिहितं R,Sm,Cs; °भिहतं RW.; वैप १,९७५ b द्र. १२. नो निखाता A,Bh,C,D,R,Sm,Cs, RW.; नो निषाता > नो निखाता Dc. १३. वऽगाः RW. १४. निऽखाताः P,J. १५. वल्गाः Ps,Ds,L. १६. उल्का P,Ps,J.

उल्काभिहतम्[1] समन्ताद् आकाशात् पतन्तीभिरायतज्वालाभिरुपप्लुतं नक्षत्रम्। अभिचाराः मारणार्थं शत्रुभिः क्रियमाणानि कर्माणि। अभिपूर्वाच्चरतेः 'अकर्तरि च कारके संज्ञायाम्' ( पा ३,३,१९ ) इति कर्मणि घञ्प्रत्ययः। उशब्दः अप्यर्थे। कृत्याः अभिचारकर्मभिरुत्पादिताः पिशाच्यः। अभिचारकर्माणि जडत्वात् स्वयमेव शत्रुसमीपम् आगत्य न निघ्नन्ति किं तु हिंसिकाः पिशाचीरुत्पादयन्ति। तेभिचारास्ताः पिशाच्यश्च शम् उपद्रवशमनाय सन्तु भवन्तु। 'कृञः श च' ( पा ३,३,१०० ) इति स्त्रियां करोतेः क्यप्प्रत्ययः। 'ह्रस्वस्य पिति°' ( पा ६,१,७१ ) इति तुक्। तथा निखाताः भूमावप्रकाशं निगूहिता वलगाः[1]। पीडार्थं भूमेरधो बाहुप्रदेशे निखन्यमाना अस्थिकेशादिवेष्टिता विषवृक्षादिनिर्मिताः पुत्तल्यो[2] वलगा इत्युच्यन्ते। तथा तैत्तिरीयके— 'रक्षोहणो वलगहनः' इत्यत्र समाम्नायते— 'असुरा[3] वै निर्यन्तो देवानां प्राणेषु वलगान् न्यखनन्। तान् बाहुमात्रेन्वविन्दन्। तस्माद् बाहुमात्राः खायन्ते' ( तै ६,२,११,१ ) इति। तेपि वलगा नः अस्माकं शम् भवन्तु। उल्काः आकाशान्निष्पतन्त्य आयतज्वालाः। उल्कादर्शनम् अनर्थकारि। उल्काः स्वदर्शनजनितं दुरितं शमयन्तु। देशोपसर्गाः देशे जनपदे उपसर्गा ईतिबाधाः। उशब्दश्चार्थे। तेपि शम् शान्ता भवन्तु।

शं नो ग्रहाश्चान्द्रमसाः [4]शमादित्यश्च राहुणा[4]।
शं नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्मतेजसः ॥ १० ॥

शम्। नः। ग्रहाः। चान्द्रमसाः। शम्। आदित्यः। [5]च। राहुणा[5]।
शम्। नः। मृत्युः। धूमऽकेतुः[6]। शम्। रुद्राः। तिग्मऽतेजसः ॥ १० ॥

चान्द्रमसाः चन्द्रमसः संबन्धिनश्चन्द्रमण्डलस्य भेदकाः संघर्षका ये अङ्गारकाद्या ग्रहाः सन्ति ते नः शं भवन्तु। राहुणा ग्रहेण ग्रस्त आदित्यश्च शम् शान्तो भवतु। आदित्यस्य अतितेजस्वित्वेन इतरग्रहैरुपप्लवाभावाद्[7] राहुणेति विशेषितम्। तथा मृत्युः मारको धूमकेतुः उत्पातः। धूमकेतोरनिष्टकारित्वं कौशिकेन सूत्रितम्— 'अथ यत्रैतद् धूमकेतुः सप्तर्षीन् उपधूपयति तद् अयोगक्षेमाशङ्कम् इत्युक्तम्' ( कौसू १२७,१ ) इति। स धूमकेतुः शम् दोषनिर्घाताय भवतु। तिग्मतेजसः तीक्ष्णतेजसो रुद्राः रोदका एतत्संज्ञका देवाश्च स्वतेजःसंतापकम् शम् उपद्रवं परिहरन्तु।

---

१, वैतु. मंपा. २. उत्तल्यो S′. ३. असुरो S′. ४. °दित्यः शं राहुणा A.V,Cs,C,D,R; °दित्यः शं राहुणा > दित्यश्च शं राहुणा Km; °दित्यस् शं° Bb; °दित्याः संराहुणा > °दित्यः शं राहुणा Dc; °दित्यः शराहुणा > °दित्यश्च राहुणा Sm; दित्याश्च राहुणा RW.; वैप १,२६६४ f द्र. ५. शराहुणा P,J; शराहुणा P². ६. °केतु P. ७. °प्लवभावात् S′.

शं रुद्राः शं वसवः शमादित्याः शमग्नयः[1] ।
शं नो महर्षयो[2] देवाः शं देवाः[3] शं बृहस्पतिः ॥ ११ ॥

शम् । रुद्राः । शम् । वसवः । शम् । आदित्याः । शम् । अग्नयः ।
शम् । नः । महऽऋषयः[4] । देवाः[5] । शम् । देवाः[6] । शम् । बृहस्पतिः ॥ ११ ॥

रुद्राः एकादश । वसवः अष्टौ । आदित्याः द्वादश । अग्नयः वैतानिकास्त्रयः सभ्यावसथ्याभ्यां सह पञ्च वा । एकः स्मार्तो वाग्निः[7] । महर्षयः सप्त । देवाः द्योतमानास्तेजोरूपाः । महर्षिविशेषणम् एतत् । देवाः इन्द्रादयः । बृहस्पतिः तेषां पुरोधाः । एते रुद्रादयः नः शम् शान्त्यै भवन्तु ।

ब्रह्म प्रजापतिर्धाता लोका वेदाः सप्तऋषयोऽग्नयः[8] ।
तैर्मे कृतं स्वस्त्ययनमिन्द्रो मे शर्म यच्छतु ब्रह्मा मे शर्म यच्छतु ।
[9]विश्वे मे देवाः शर्म यच्छन्तु सर्वे मे देवाः शर्म यच्छन्तु[9] ॥ १२ ॥

ब्रह्म । प्रजाऽपतिः । धाता । लोकाः । वेदाः[10] । सप्तऽऋषयः । अग्नयः । तैः । मे । कृतम् । स्वस्त्ययनम् । इन्द्रः । मे । शर्म । यच्छतु । ब्रह्मा । मे । शर्म । यच्छतु । विश्वे । मे । देवाः । शर्म । यच्छन्तु । सर्वे । मे । देवाः । शर्म । यच्छन्तु ॥ १२ ॥

ब्रह्म । बृहतेर्मनिन्प्रत्ययः । देशकालानवच्छिन्नं[11] सच्चिदानन्दलक्षणं परं ब्रह्म । प्रजापतिः प्रजानां पालकः सर्वनियन्ता सर्वान्तर्यामी । धाता सर्वस्य धाता चतुर्मुखो ब्रह्मा । लोकाः सप्तसंख्याकाः । वेदाः साङ्गाश्चत्वारः । सप्तर्षयः[12] प्रसिद्धाः । अग्नयः व्याख्याताः । तैः सर्वैः मे मम स्वस्त्ययनम् । स्वस्तीति अविनाशिनाम । तस्य अयनं प्राप्तिः कृतम् स्वस्त्ययनं क्षेमप्रापणं कृतम् । 'आशंसायां भूतवच्च' (पा ३,३,१३२) इति भूतवत् प्रत्ययः । इन्द्रो मे शर्म सुखं यच्छतु प्रयच्छतु । दाण् दाने । 'पाघ्रा' (पा ७,३,७८) इत्यादिना यच्छादेशः । एवं ब्रह्मा मे इत्याद्यास्त्रयः व्याख्येयाः ।

---

१. शंमुग्नयः A,C,D,S^m,Cs. २. महऋषयो K,K^m,B^h,D,RW.; मुहऋषयो R; महुर्षयो S^m; महुऋर्षयो Cs; महुऋषयो > महऋषयो Dc. ३. देवी: RW.; वैप १,१५१८ e द्र. ४. तु. मंपा. P^2, वैतु. शंपा. P,J; मुहुऽऋषयः. ५. देवाः P,P^2; देवाः > देवाः J. ६. देवाः P^2,J. ७. वाग्नि S'. ८. तु. Dc,W, अ १९,७२,१ च वैतु. शंपा. वेदाःसप्त°; °सप्तुर्षयो° K^m; सप्तर्षयो° S^m; देवाः सप्तर्षयो° Cs; देवाः सप्तर्षयो° > वेदाः सप्तर्षयो° R; ९. इमौ पादौ उत्तरस्यामृचि आदौ पठतः WM.RW. १०. तु. मंपा. वैतु. शंपा. वेदाः; देवाः > वेदाः J. ११. °कालाव° S'. १२. वैतु. मंपा.

यानि कानि [1]चिच्छान्तानि लोके सप्तऋषयो[1] विदुः ।
सर्वाणि शं भवन्तु मे शं मे अस्त्वभयं मे अस्तु ॥ १३ ॥

यानि । कानि । चित् । शान्तानि । लोके[2] । सप्तऽऋषयः । विदुः[3] ।
सर्वाणि । शम् । भवन्तु । मे । शम् । मे । अस्तु । अभयम् । मे । अस्तु ॥ १३ ॥

उक्तानुक्तानि[4] शान्तिकारणानि संगृह्य आह— सप्तर्षयः[5] अतीन्द्रियार्थद्रष्टारो लोके सर्वेषु लोकेषु यानि कानि चिद् वस्तूनि शान्तानि शान्तिकारणानि विदुः जानन्ति तानि सर्वाणि मे शं भवन्तु । एतत्सूक्तप्रतिपाद्यस्यार्थस्य संग्रहेण वचनं शं मे अस्त्वभयं मे अस्त्विति । 'शान्ता द्यौः' (१) इत्यादिना द्युलोकादयः शान्ता भवन्तु इति यद् उक्तं तस्यायम् अर्थः— मे शम् अस्तु सर्वतः सुखम् अस्तु । अभयम् भयराहित्यं च अस्तु इति ।

अनृगात्मकश्चतुर्दशो मन्त्र एवम् आम्नायते -

[6]पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वे मे देवाः शान्तिः सर्वे मे देवाः शान्तिः शान्तिः शान्तिः[7] शान्तिभिः । ताभिः [8]शान्तिभिः सर्व शान्तिभिः †शमयामोहं[8] यदिह घोरं यदिह क्रूरं यदिह पापं [9]तच्छान्तं तच्छिवं सर्वमेव शमस्तु नः ॥ १४ ॥[6]

पृथिवी । शान्तिः । अन्तरिक्षम् । शान्तिः । द्यौः । शान्तिः । आपः । शान्तिः । ओषधयः । शान्तिः । वनस्पतयः । शान्तिः । विश्वे । मे । देवाः । शान्तिः । सर्वे । मे । देवाः । शान्तिः । शान्तिः । शान्तिः[7] । शान्तिऽभिः[8] । ताभिः । शान्तिऽभिः । सर्वं[10] । शान्तिऽभिः[10] । [11]शम् । अयामः । अहम्[11] । यत् । इह । घोरम् । यत् । इह । क्रूरम् । यत् । इह । पापम् । तत् । शान्तम् । तत् । शिवम् । सर्वम् । एव । शम् । अस्तु । नः ॥ १४ ॥

पृथिव्यादयः शान्तिरूपा भवन्तु । शान्तिभिः उक्ताभिः पृथिव्यादिशान्तिभिः शान्तिः निरुपपदा सर्वसाधारणभूता शान्तिरपि शान्तिः भवतु इत्याशास्यते । शान्तेरपि

---

१. °नि लोकें सप्तर्षयो R; °नि लोकें सप्त ऋषयो A; °निं लोके सप्तर्षयो D,Bh,Sm; °नि लोके सप्तर्षयो C; °नि लोकें सप्तऋषयो > °निं लोके सप्तऋषयो Dc; °नि लोकें सप्तर्षयो Cs.
२. लोकें P,J. ३. विदुः P. ४. उक्तान्युक्तानि S'. ५. वतु. मंपा. ६. मा ३६,१७ मै ४,९,२७ तैआ ४,४२,५ विशिष्टः पाभेद्र. ७. नास्ति A,Bh,R,D,Sm,Dc,Cs,P[4], J,RW. ८. पाठः ? RW अनुसारं शोध्यः शान्तिभिः सर्वंशान्तिभिः शमयाम्यहं RW.
† शम्° Bh,C,D,Cs,R,Sm. ९. तं तच्छा° A. १०. पपा. ? ११. पपा. ?
तु. सा. वैतु. P,P[2],J शमय । मोहम्.

शान्तित्वं तैत्तिरीयके समाम्नायते — 'शान्तिरेव शान्तिः शान्तिर्मे अस्तु शान्तिः' (तैआ ४,४२,५) इति। ताभिः शान्तिभिः सर्वशान्तिभिः[1]। अहम्। 'सुपां सुलुक्°' (पा ७,१,३९) इति जसः सुः। वयं शमयामः[1] अपगमयामः। किं तद् इति तद् आह — इह अस्मिन् कर्मणि यद् घोरम् भयंकरं विपरीतानुष्ठानेन विपरीतफलप्रापकं यद् अस्ति। एतस्यैव विवरणं यद् इह क्रूरं यद् इह पापम् इति। अथवा त्रिर्वचनेन दोषशमयितृत्वं निश्चितं भवतीति यद् इह घोरम् इत्यादि त्रिर्वचनम्। एवं तच्छान्तं तच्छिवम् इति शान्तिशिवशंशब्दैस्त्रिर्वचनम्। यथा कर्मान्तरेषु 'अदीक्षिष्टायं ब्राह्मणः' (तै ६,१,४,३) इत्यादिषु आवेदनरूपेषु त्रिरुपांशुवचनं त्रिरुच्चैर्वचनम् एवम् अत्रापि। सर्वथा घोरं कर्म शमयामः। तच्च सर्वथा शान्तं भवत्वित्यर्थः।

इति एकोनविंशे काण्डे प्रथमेऽनुवाके दशमं सूक्तम्।

प्रथमोऽनुवाकः समाप्तः।

द्वितीयेऽनुवाके एकादश सूक्तानि। तत्र 'शं न इन्द्राग्नी' इति प्रथमसूक्तत्रयस्य अहरहः पुरोहितेन कर्तव्ये राज्ञः शय्यागृहप्रवेशनकर्मणि शान्त्यर्थजपे विनियोगः। 'अथातो रात्रीसूक्तानां विधिम् अनुक्रमिष्यामः' इति प्रक्रम्य उक्तं परिशिष्टे — “'शान्ता द्यौः' इति जपित्वा राजानं वासगृहं नयेत्” (अप ४,५,१;१४) इति। अत्र शान्ता द्यौरित्येकेन शान्त्यर्थप्रतिपादकं समनन्तरम् इदं सूक्तद्वयं गृह्यते। यत्रैकेन प्रतीकेन समानार्थं समानदेवत्यं समानार्षं वा समनन्तरं सूक्तं गृह्यते तद् अर्थसूक्तम् इति अथर्वणां[2] परिभाषणात्।

तथा अनेन सूक्तत्रयेण 'शान्ता द्यौः' इति पूर्वेण च तुलापुरुषमहादाने आज्यहोमं कुर्यात्। 'अथातस्तुलापुरुषविधिं व्याख्यास्यामः' इति प्रक्रम्य उक्तं परिशिष्टे — “प्राक्तन्त्रमाज्यभागान्तं कृत्वा। [3]महाव्याहृतिसावित्रीशान्तिं 'ब्रह्म जज्ञानम्[3]' इति हुत्वा” (अप ११,१,१;४;५) इति। अत्र शान्तिपदेन शान्त्यर्थप्रतिपादकम् इदं सूक्तत्रयं पूर्वं च गृह्यते।

अस्य सूक्तत्रयस्य शान्तिप्रतिपादकत्वेन शान्तिगणे पाठाद् 'आयुष्यः शान्तिः स्वस्तिगण ऐरावत्याम्' (शांक १८,८) इत्यादिषु विनियोगो द्रष्टव्यः।

शं न॑ इन्द्रा॒ग्नी भ॑वता॒मवो॑भिः॒ शं न॒ इन्द्रा॒वरु॑णा रा॒तह॑व्या।
शमिन्द्रा॒सोमा॑ सुवि॒ताय॒ शं योः शं न॒ इन्द्रा॑पू॒षणा॒ वाज॑सातौ ॥ १ ॥

शम्। न॒ः। इन्द्रा॒ग्नी इति॑। भ॒व॒ता॒म्। अवः॑ऽभिः। शम्। न॒ः। इन्द्रा॒वरु॑णा। रा॒तऽह॑व्या।
शम्। इन्द्रा॒सोमा॑। सु॒वि॒ताय॑[4]। शम्। योः। शम्। न॒ः। इन्द्रा॑पू॒षणा॑। वाज॑ऽसातौ ॥ १ ॥

---

१. वैतु मंपा.	२. आथर्वणां S'.	३. ब नास्ति S'; °शान्तिमब्रह्मजज्ञानम् शंपा.
४. सुऽवितायं P,J.

हे इन्द्राग्नी[1] युवाम् [2]अवोभिः रक्षाभिः[2] नः अस्माकम् अस्मभ्यं वा शम् शान्त्यै सकलदुःखनिवारणाय भवताम् । इन्द्राग्नी इत्यत्र 'आमन्त्रितस्य च' (पा ८,१,१९) इति आष्टमिकं सर्वानुदात्तत्वम्[1] । रातहव्या रातहव्यौ यजमानैर्दत्तहविष्कौ[3] इन्द्रावरुणा इन्द्रावरुणौ । 'देवताद्वन्द्वे च' (पा ६,३,२६;६,२,१४१) इति आनङ्[4] उभयपदप्रकृतिस्वरत्वं च । शं नः । भवताम् इत्यनुषङ्गः । इन्द्रासोमा इन्द्रासोमौ सुविताय । सुखनामैतत् । सुष्ठु प्राप्तव्याय । सुपूर्वाद् एतेः कर्मणि क्तः । तन्वादित्वाद् उवङ् आदेशः । सुखाय शं भवताम् । शं योः इति पदयोरर्थो यास्केनोक्तः — 'शमनं च रोगाणां यावनं च भयानाम्' (नि ४,२१) इति । शमु उपशमे । यु मिश्रणामिश्रणयोः । उभयत्र 'अन्येभ्योपि दृश्यन्ते' (पा ३,२,७५) इति विच्प्रत्ययः । शमनाय यावनाय च । केचिद् एवं व्याचचक्षिरे[5]— 'शम् आत्महेतुकं सुखं योः विषययोगनिमित्तं सुखम्' इति । इन्द्रापूषणा इन्द्रापूषणौ । 'वा षपूर्वस्य निगमे' (पा ६,४,९) इति पूषन्शब्दस्य दीर्घाभावः । वाजसातौ । युद्धनामैतत् । वाजो वेगः वेगेन सातिः अवसानं विनाशो योद्धॄणां भवति यत्रेति वाजसातिः युद्धं तत्र । अथ वा वाजः अन्नं तल्लाभार्थम् । विषयसप्तमी । शं नो भवताम् । वाजसाताविति । षो अन्तकर्मणि । स्त्रियां क्तिन् । 'ऊतियूति' (पा ३,३,९७) इत्यादिना निपातनाद् आत्वं द्रष्टव्यम् । [6]अथ वा षण संभक्तौ[6] । अस्मात् क्तिनि 'जनसनखनां सञ्झलोः' (पा ६,४,४२) इति आत्त्वम् ।

शं नो भगः शमु नः शंसो अस्तु शं नः पुरंधिः शमु सन्तु रायः ।
शं नः सत्यस्य सुयमस्य[7] शंसः शं नो अर्यमा पुरुजातो अस्तु ॥ २ ॥

शम् । नः । भगः । शम् । ऊं इति । नः । शंसः । _स्तु । शम् । नः । पुरमऽधिः । शम् । ऊं इति । सन्तु । रायः । शम् । नः । सत्यस्य । सुऽयमस्य[8] । शंसः । शम् । नः । अर्यमा । पुरुऽजातः । अस्तु ॥ २ ॥

भगः भजनीयो देवः । 'पुंसि संज्ञायाम्'[10] (पा ३,३,११८) इति भजतेर्घप्रत्ययः[9] । नः अस्माकं शम् अस्तु । शंसः सर्वैः स्तूयमानः । एकदेशेन व्यपदेशः । नराशंसो नाम देवः । उशब्दः अवधारणे । शम् एव नः अस्तु । पुरंधिः पूर्णा धीयते निधीयते संधार्यते[10] इति पुरंधिर्बुद्धिः शं नः अस्तु । रायः धनानि शमु सुखायैव सन्तु । सुयमस्य सुष्ठु यन्तव्यस्य शोभनयमयुक्तस्य[11] वा । 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' (योसू २,३०) इति यमस्वरूपं पातञ्जले[12] विहितम् । तादृशस्य सत्यस्य शंसः वचनं नः अस्माकं शं सुखाय भवतु । पुरुजातः बहुप्रादुर्भावः अर्यमा देवः शं नोस्तु ।

---

१. वैतु. मंपा. २. अहोरक्षाभिः S'. ३. हविष्यो S'. ४. समाम् S'. ५. व्याचक्षे S'. ६. अथ वा षण सं नास्ति S'. ७. सुयमस्तु A,B[b],D; सुयमस्तु>सुयमस्य Dc; सुयमस्य>सुयमस्तु Cs. ८. सुऽयमस्तु P. ९. स्वरार्थं वृषादित्वं (पा ६,१,२०३) द्र. १०. एवं स्वरः ! वैप १,२०३४e द्र. ११. शोभनमयुक्तस्य S'. १२. पातञ्जले S'.

शं नो॑ धा॒ता शमु॑ ध॒र्ता नो॑ अस्तु॒ शं न॑ उरू॒ची[१] भ॑वतु स्व॒धाभि॑: ।
शं रोद॑सी बृह॒ती शं नो॒ अद्रि॒: शं नो॑ दे॒वानां॑ सु॒हवा॑नि सन्तु ॥ ३ ॥

शम् । नः॒ । धा॒ता । शम् । ऊं इति॑ । ध॒र्ता । नः॒ । अ॒स्तु॒ । शम् । नः॒ । उ॒रू॒ची[१] । भ॒व॒तु॒ । स्व॒धाभि॑: । शम् । रोद॑सी॒ इति॑ । बृ॒ह॒ती इति॑ । शम् । नः॒ । अद्रि॑: । शम् । नः॒ । दे॒वाना॑म् । सु॒ऽहवा॑नि । स॒न्तु॒ ॥ ३ ॥

धाता **विधाता सर्वस्य देवः** नः **अस्माकं** शम् अस्तु । धर्ता **विधारयिता पुण्यपापानां वरुणः** शम् **एव** नः **अस्तु** । उरूची **विस्तीर्णगमना विवर्तगमना**[३] **वा पृथिवी कथ्यते** । स्वधाभिः **अन्नैः सह** नः **अस्माकं** शं भवतु । बृहती **बृहत्यौ** रोदसी **द्यावापृथिव्यौ** शं **भवताम्**[४] । अद्रिः **पर्वतः**[५] शं नो **भवतु** । नः **अस्मदीयानि** देवानां सुहवानि **सुष्टुतयः** शं सन्तु ।

शं नो॑ अ॒ग्निर्ज्योति॑रनीको अस्तु॒ शं नो॑ मि॒त्रावरु॑णाव॒श्विना॒ शम् ।
शं न॑: सु॒कृतां॑ सुकृ॒तानि॑ सन्तु॒ शं न॑ इषि॒रो अ॒भि वा॑तु॒ वात॑: ॥ ४ ॥

शम् । नः॒ । अ॒ग्निः । ज्योति॑:ऽअनीकः । अ॒स्तु॒ । शम् । नः॒ । मि॒त्रावरु॑णौ । अ॒श्विना॑ । शम् । शम् । नः॒ । सु॒ऽकृता॑म् । सु॒ऽकृ॒तानि॑ । स॒न्तु॒ । शम् । नः॒ । इ॒षि॒रः । अ॒भि । वा॒तु॒[६] । वात॑: ॥ ४ ॥

ज्योतिरनीकः **ज्योतींषि अनीके मुखे यस्य स तादृशः** अग्निः **अङ्गनादिगुणयुक्तो देवः** नः **अस्माकं** शम् अस्तु । मित्रावरुणौ नः शं **भवताम्** । अश्विना **अश्विनौ** शं **स्ताम्** । सुकृतां **पुण्यकर्मणाम्** । 'सुकर्मपाप०' (पा ३,२,८९) **इति क्विप्प्रत्ययः** । सुकृतानि **सुष्ठु कृतानि पुण्यानि** नः शं सन्तु । इषिरः **गमनशीलो** वातः **वायुः** शम् **शान्त्यर्थं** नः अभि वातु **अस्मान् अभिलक्ष्य प्रवातु** ।

शं नो॒ द्यावा॑पृथि॒वी पू॒र्वहू॑तौ॒ शम॒न्तरि॑क्षं दृ॒शये॑ नो अस्तु ।
शं न॒ ओष॑धीर्व॒निनो॑ भवन्तु॒ शं नो॒ रज॑स॒स्पति॑रस्तु जि॒ष्णुः[७] ॥ ५ ॥

शम् । नः॒ । द्यावा॑पृथि॒वी इति॑ । पू॒र्वऽहू॑तौ । शम् । अ॒न्तरि॑क्षम् । दृ॒शये॑ । नः॒ । अ॒स्तु॒ । शम् । नः॒ । ओष॑धीः । व॒निन॑: । भ॒व॒न्तु॒ । शम् । नः॒ । रज॑सः । पति॑: । अ॒स्तु॒ । जि॒ष्णुः ॥५॥

द्यावापृथिवी **द्यावापृथिव्यौ** पूर्वहूतौ **देवानां प्रथमस्तोत्रार्थम्** । **यद्वा पूर्वे पूर्वे जाता देवा हूयन्ते इज्यन्ते आहूयन्ते**[८] **वा यत्रेति पूर्वहूतिर्यज्ञः**[९] **तत्र** शं नः **स्ताम्** ।

---

१. उरूची A,Bᵇ. २. उरुची P,P³J. ३. विवर्तिगमना S'' ४. भवाम् S'. ५. पूर्वतः S'. ६. वातु P. ७. जिष्णुः Bᵇ. ८. आहूयन्ते S'. ९. देवहूति° S'.

अन्तरिक्षम् **मध्यमलोकः** दृशये **दर्शनाय** शं नो अस्तु । ओषधीः **ओषध्यः** वनिनः **वनरूपसमुदायिनो वृक्षाश्च** शं नो भवन्तु । रजसः **लोकस्य** पतिः **पालकः** जिष्णुः **जयशील इन्द्रः** शं नोस्तु ।

**शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः ।**
**शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥ ६ ॥**

शम् । नः । इन्द्रः । वसुऽभिः । देवः । अस्तु । शम् । आदित्येभिः । वरुणः । सुऽशंसः ।
शम् । नः । रुद्रः । रुद्रेभिः । जलाषः । शम् । नः । त्वष्टा । ग्नाभिः[1] । इह । शृणोतु ॥६॥

इन्द्रो देवः वसुभिः **एतत्संज्ञकैर्देवैः सार्धं** नः **अस्माकं** शम् अस्तु । सुशंसः **शोभनस्तुतिः** वरुणः आदित्येभिः **आदित्यैः सार्धं** शं नः **अस्तु** । जलाषः । **सुखनामैतत्** । **जलाषः[2] सुखं तद् अस्यास्तीति । अर्शआदित्वाद् अच्प्रत्ययः[3] । सुखकरो** रुद्रो रुद्रेभिः **रुद्रैः सार्धं** शं नः **अस्तु** । त्वष्टा **सर्वप्राणिनां रूपाणि विकुर्वन् देवः** ग्नाभिः **देवपत्नीभिः सार्धं** शं नः **अस्तु** । इह **अस्मिन् कर्मणि** शृणोतु **च । नः स्तोत्रम् इति शेषः ।**

**शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः ।**
**शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः[4] शम्वस्तु वेदिः ॥ ७ ॥**

शम् । नः । सोमः । भवतु । ब्रह्म । शम् । नः । शम् । नः । ग्रावाणः । शम् । ऊं इति । सन्तु । यज्ञाः । शम् । नः । स्वरूणाम् । मितयः । भवन्तु । शम् । नः । प्रऽस्वः[5] । शम् । ऊं इति । अस्तु । वेदिः ॥

सोमः **लतारूपः अभिषूयमाणः** शं नः भवतु । ब्रह्म **स्तोत्रशस्त्रात्मकं** शं नः **अस्तु** । ग्रावाणः **अभिषवसाधनभूताः** शं नः सन्तु । यज्ञाः **सोमनिर्वर्त्याः क्रतवः शम् एव** सन्तु । स्वरूणाम् । **लुप्तमत्वर्थीयः । स्वरुमतां यूपानां** मितयः **उन्मानानि** शं नो भवन्तु । प्रस्वः **प्रकर्षेण सूयमाना जायमाना ओषधयः चरुपुरोडाशसंपादिकाः** शं नः **सन्तु । प्रस्व इति । प्रपूर्वात् सूयतेः क्विप् । कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तः । ततः परस्य जसः** 'उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य' (पा ८,२,४) **इति स्वरितत्वम् । उशब्दः अवधारणे ।** वेदिः शम् **एव** अस्तु । 'मय उञो वो वा' (पा ८,३,३३) **इति उशब्दस्य वकारः ।**

**शं नः सूर्य उरुचक्षा उदेतु शं नो भवन्तु प्रदिशश्चतस्रः ।**

---

१. ग्नाभिः P,P[2],J. २. च नास्ति S'. ३. अच्प्र. स्वरः? ४. प्रस्वः[*] A,B[h],C,R,S[m],Cs. ५. प्रऽस्वाः P.

**शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥ ८ ॥**

शम् । नः । सूर्यः । उरुऽचक्षाः । उत् । एतु । शम् । नः । भवन्तु । प्रऽदिशः । चतस्रः । शम् । नः । पर्वताः । ध्रुवयः । भवन्तु । शम् । नः । सिन्धवः । शम् । ऊं इति । सन्तु । आपः ॥

उरुचक्षाः **विस्तीर्णतेजाः उरुभिर्बहुभिर्दृश्यमानो वा** । 'असनयोः प्रतिषेधो वक्तव्यः' ( पावा २,४,५४ ) **इति ख्याञादेशाभावः** । सूर्यो नः **अस्माकं** शम् **शान्त्यर्थम्** उदेतु । चतस्रः प्रदिशः **महादिशः** शं नो भवन्तु । ध्रुवयः **ध्रुवाः । ध्रु स्थैर्ये । औणादिकः किप्रत्ययः । उवङ् आदेशः । स्थिराः** पर्वताः शं नो भवन्तु । सिन्धवः **स्यन्दमाना नद्यः** नः शं **सन्तु** । शम् **एव** सन्तु आपः ।

**शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः[1] स्वर्काः ।**
**शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥**

शम् । नः । अदितिः । भवतु । व्रतेभिः । शम् । नः । भवन्तु । मरुतः । सुऽअर्काः । शम् । नः । विष्णुः । शम् । ऊं इति । पूषा । नः । अस्तु । शम् । नः । भवित्रम् । शम् । ऊं इति । अस्तु । वायुः ॥

अदितिः **अखण्डनीया देवमाता** व्रतेभिः **व्रतैः कर्मभिः सार्धं** नः **अस्माकं** शं भवतु[2] । स्वर्काः । 'अर्कोर्चतेः स्तुतिकर्मणः' ( तु. नि ५,४ ) **इति यास्कः । सुष्टुतयो** मरुतः नः शं भवन्तु । **शं** नः **अस्तु** विष्णुः । शम् **एव पूषा** नो अस्तु । भवित्रम् **भुवनम् उदकम् अन्तरिक्षं वा** शं नः **अस्तु** । 'अर्तिलूधूसूखनसह°' ( पा ३,२,१८४ ) **इति विहित इत्रप्रत्ययो भवतेरपि व्यत्ययेन उत्पन्नः** । **उशब्दः अवधारणे** । वायुः शम् **शान्त्यर्थमेव** अस्तु । 'मय उञो वो वा' (पा ८,३,३३ ) **इति उञो वकारादेशः** ।

**शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।**
**शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥ १० ॥**

शम् । नः । देवः । सविता । त्रायमाणः । शम् । नः । भवन्तु । उषसः । विऽभातीः । शम् । नः । पर्जन्यः । भवतु । प्रऽजाभ्यः । शम् । नः । क्षेत्रस्य । पतिः । अस्तु । शम्ऽभुः ॥ १० ॥

त्रायमाणः **रक्षन् भयेभ्यः** सविता **सर्वस्य प्रेरको** देवः नः शं **भवतु** । विभातीः **विभात्यो व्युच्छन्त्यः** । 'वा छन्दसि' ( पा ६,१,१०६ ) **इति पूर्वसवर्णदीर्घः** । उषसः **उषोभिमानिन्यो देवताः** नः शं भवन्तु । पर्जन्यः **वृष्टिप्रदो** नः **अस्माकं** प्रजाभ्यः शं भवतु । शंभुः **सुखस्य भावयिता** क्षेत्रस्य पतिः ।

---

१. मरुत्व Bh,Sm,C. २. भवन्तु S'.

'रुद्रं क्षेत्रपतिं प्राहुः केचिद्[1] अग्निम् अथापरे ।
स्वतन्त्र एव[2] वा कश्चित् क्षेत्रस्य पतिरुच्यते ॥' ( तन्त्रसार )

एतत्संज्ञको देवः नः अस्माकं शम् शान्त्यै अस्तु भवतु । 'विप्रसंभ्यो ड्वसंज्ञायाम्' ( पा ३,२, १८० ) इति विप्रसमुपपदाद् भवतेर्विहितो डुप्रत्ययः शंपूर्वादपि व्यत्ययेन भवति ।

इति द्वितीयेनुवाके प्रथमं सूक्तम् ।

'शं नः सत्यस्य' इति सूक्तस्य रात्रीकल्पादिषु शान्त्यर्थजपे पूर्वसूक्तेन सह उक्तो विनियोगः ।

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः ।
शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥ १ ॥

शम् । नः । सत्यस्य । पतयः । भवन्तु । शम् । नः । अर्वन्तः । शम् । ऊं इति । सन्तु । गावः । शम् । नः । ऋभवः । सुऽकृतः । सुऽहस्ताः । शम् । नः । भवन्तु । पितरः । हवेषु ॥

सत्यस्य पतयः पालयितारः सत्यशीला देवाः नः अस्माकं शम् शान्त्यै भवन्तु । अर्वन्तः अश्वाः शं नो भवन्तु । शम् एव सन्तु गावः धेनवः सुकृतः सुकृतकर्माणः कर्मणैव देवत्वं प्राप्ताः सुहस्ताः शोभनहस्ताश्चमसतक्षणादिषु कुशलहस्ता ऋभवः एतत्संज्ञकाः कर्मदेवाः । तथा च दाशतय्याम् आर्भवसूक्ते समाम्नायते—'एकं वि चक्र चमसं चतुर्वयं निश्चर्मणो गाम् अरिणीत धीतिभिः' ( ऋ ४,३६,४ ) इति । 'विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वम् आनशुः' ( ऋ १,११०,४ ) इति च । 'ऋभवो वै देवेषु तपसा सोमपीथम् अभ्यजयन्[3]' ( ऐब्रा ३,३० ) इत्यादिना ऐतरेयब्राह्मणे ऋभूणां मनुष्याणामेव देवैः सह सोमपानं विद्यत इति प्रपञ्चितम् । अत एव अत्र सुकृत इत्युक्तम् । एवंविधम-हिमान ऋभवो देवा नः अस्माकं शम् शान्त्यै दुरितनिवृत्त्यै भवन्तु । पितरो हवेषु । विषयसप्तमी । स्तोत्रेषु यज्ञेषु वा नः अस्माकं शं भवन्तु ।

शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥२॥

शम् । नः । देवाः । विश्वऽदेवाः । भवन्तु । शम् । सरस्वती । सह । धीभिः । अस्तु । शम् । अभिऽसाचः[4] । शम् । ऊं इति । रातिऽसाचः । शम् । नः । दिव्याः । पार्थिवाः । शम् । नः । अप्याः ॥ २ ॥

---

१. के नास्ति S'. २. एवं S'. ३. अभ्युदयन् S'. ४. °साचः P.

विश्वदेवाः। अत्र दीव्यतिः स्तुत्यर्थः। बहुस्तोत्रका देवा इन्द्रादयः। यद्वा वा इति विश्वदेवानां विशेषणम्। दीव्यन्तो विश्वे सर्वे देवाः। पूर्वस्मिन् क्षे 'बहुव्रीहौ विश्वं संज्ञायाम्' (पा ६,२,१०६) इति पूर्वपदान्तोदात्तत्वम्। द्वितीयस्मिन् क्षे तत्पुरुषत्वात् समासान्तोदात्तत्वेन[1] भवितव्यम्। अत्र 'परादिश्छन्दसि बहुलम्' पा ६,२,१९९) इति पूर्वपदान्तोदात्तत्वम्। देवाः नः अस्माकं शं भवन्तु। सरस्वती र्णपदवाक्यात्मना सरणवती वाग्देवता धीभिः स्तुतिभिः कर्मभिर्वा सह शम् स्तु। अभिषाचः। षच समवाये। अभिषचमानाः यज्ञम् अभितः समवयन्तो वाः शं भवन्तु। रातिषाचः रातये दानार्थं संगच्छमाना देवाः शम् एव भवन्तु। ातिषाचः अभिषाचः इति पदद्वयेन विश्वे देवा उच्यन्ते। तथा च दाशतय्यां श्वदेवसूक्ते समाम्नायते— 'विश्वे देवाः सह धीभिः पुरंध्या मनोर्यजत्रा अमृता ऋतज्ञाः। तिषाचो अभिषाचः स्वर्विदः स्वर्गिरो ब्रह्म सूक्तं जुषेरत' (ऋ १०,६५,१४) इति। व्याः दिवि भवा देवाः पार्थिवाः पृथिव्यां भवाः। उत्सादित्वाद् अञ्प्रत्ययः। ार्थिवा देवाश्च नः अस्माकं शं भवन्तु। अप्याः अप्सु अन्तरिक्षे भवाः। 'भवे न्दसि' (पा ४,४,११०) इति यत्। 'यतोऽनावः' (पा ६,१,२१३) इति आद्युदात्तत्वम्। शं भवन्तु।

शं नो॑ अ॒ज एक॑पाद् दे॒वो अ॑स्तु॒ शमहि॑र्बु॒ध्न्य॒१ः[2] शं स॑मु॒द्रः।
शं नो॑ अ॒पां नपा॑त् पे॒रुर॑स्तु॒ शं न॒ः पृश्नि॑र्भवतु दे॒वगो॑पा[3] ॥ ३ ॥

ाम्। न॒ः। अ॒जः। एक॑ऽपात्। दे॒वः। अ॒स्तु॒। शम्। अहि॑ः। बु॒ध्न्य॑ः। शम्। स॒मु॒द्रः।
ाम्। न॒ः। अ॒पाम्। नपा॑त्। पे॒रुः। अ॒स्तु॒। शम्। न॒ः। पृश्नि॑ः। भ॒व॒तु॒। दे॒वऽगो॑पा ॥

अजः अजायमानः एकपात् एकः पादः स्थावरजङ्गमात्मको यस्य। 'पादोऽस्य श्वा भूतानि' (अ १९,६,३) इति श्रुतेः। 'संख्यासुपूर्वस्य' (पा ५,४,१४०) इति पादस्य ोपः समासान्तः। अजएकपाच्छब्दाभ्याम्[4] एक एव देवोऽभिधीयते। अजैक- ान्नामको देवः नः शम् अस्तु। अहिर्बुध्न्यः अहिः अहन्तव्यः बुध्न्यः बुध्नं[5] मूलं दर्हः। अत्रापि पूर्ववद् अहिर्बुध्न्य इति पदद्वयम् एकदेवताप्रतिपादकम्। अहि- ध्न्यनामको देवः नः शम् अस्तु। समुद्रः समुद्द्रवन्ति आपः अस्माद् इति मुद्रः शम् अस्तु। अपां नपात् अपाम् उदकानां न पातयिता। पातयतेः क्विप्। अपान्नपात्°' (पा ६,३,७५) इति नलोपाभावो निपातितः। अपांनपात्संज्ञको देवो नः शम् ान्त्यै पेरुः पारयिता दुःखेभ्यो अस्तु भवतु। पृश्निः मरुतां माता देवगोपा देवा गोपा- यतारो यस्याः सा पृश्निः नः शं भवतु। गुपू रक्षणे। क्विप्। 'गुपूधूपविच्छिपणि-

---

१. पूर्वपदप्रकृतिस्वरत्वाद् आद्युदात्तत्वेन शंपा. २. शमहि° ऋ ७,३५,१३ पै १३,८, ; ध्न्यः A,B[b],C,S[m]. ३. °गोपाः पै. ४. अजैकपा° S'. ५. बुध्नं S'.

पनिभ्य आयः' (पा ३,१,२८) इति आयप्रत्ययः। अतोलोपयलोपौ[1]। देवा गोपा यस्या इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरः।

आदित्या रुद्रा वसवो जुषन्तामिदं[2] ब्रह्म क्रियमाणं नवीयः।
शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥ ४ ॥

आदित्याः। रुद्राः। वसवः। जुषन्ताम्। इदम्। ब्रह्म। क्रियमाणम्। नवीयः।
शृण्वन्तु। नः। दिव्याः। पार्थिवासः। गोऽजाताः। उत। ये। यज्ञियासः ॥ ४ ॥

आदित्याः अदितेः पुत्रा द्युस्थाना देवाः। 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (पा ४,१,८५) इति ण्यः। रुद्राः रोदयितारः अन्तरिक्षस्थाना देवाः वसवः पार्थिवाः जुषन्ताम् सेवन्ताम्। किं तत्। नवीयः नवतरम् इदम् इदानीं क्रियमाणं ब्रह्म स्तोत्रं जुषन्ताम् इत्यन्वयः। अन्ये च नः अस्मदीयं ब्रह्म स्तोत्रं शृण्वन्तु। के ते। दिव्याः दिवि भवाः पार्थिवासः पार्थिवाः। 'आज्जसेरसुक्' (पा ७,१,५०)। पृथिवीस्थानाः गोजाताः गोः पृश्नेर्जाता मरुतो देवाः। उत अपि च यज्ञियासः यज्ञार्हा ये देवास्तेपि नः स्तोत्रं शृण्वन्तु।

ये [3]देवानामृत्विजो यज्ञियासो[3] मनोर्यजत्रा अमृता ऋतज्ञाः।
ते नो रासन्तामुरुगायमद्य[4] यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

ये। देवानाम्। ऋत्विजः। यज्ञियासः। मनोः। यजत्राः। अमृताः। ऋतऽज्ञाः। ते।
नः। रासन्ताम्। उरुऽगायम्। अद्य। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ५ ॥

देवानाम् 'शं नः इन्द्राग्नी' (अ १९,१०;११) इत्यादिसूक्तद्वयप्रतिपादितानाम् ऋत्विजः। ऋतौ काले यष्टारः। 'ऋत्विग्दधृक्' (पा ३,२,५९) इत्यादिना ऋत्विक्शब्दो निपातितः। यज्ञियासः यज्ञार्हा मनोः प्रजापतेः यजत्राः यजनीया यजमानार्हा अमृताः अमरणधर्माणः ऋतज्ञाः ऋतं सत्यभूतं[5] यज्ञं जानन्तो ये देवाः सन्ति ते देवाः अद्य इदानीं नः अस्माकम् उरुगायम् प्रभूतां कीर्तिं रासन्ताम् प्रयच्छन्तु। रासतिर्दानकर्मा। उरुगायमिति। कै गै रै शब्दे। अस्मात् कर्मणि घञ्। आतो युगागमः। हे देवाः यूयं नः अस्मान् सदा सर्वदा स्वस्तिभिः। स्वस्तीति अविनाशिनाम। क्षेमकरणैरुपायैः पात रक्षत[6]। सुपूर्वाद् अस्तेः क्तिनि[7] भूभावाभावश्छान्दसः।

तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम्।
अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥ ६ ॥

---

१. अतोलोपयतोलोपौ S'. २. जुषन्तेदं ऋ ७,३५,१४. ३. देवानां यज्ञियां यज्ञियानां ऋ ७,३५,१५. ४. 'मुरुगाय' C. ५. सत्यं भूतं S'. ६. रक्षतु S'.
७. क्तिनि स्वरः ?

तत् । अस्तु । मित्रावरुणा । तत् । अग्ने । शम् । योः । अस्मभ्यम् । इदम् । अस्तु । शस्तम् । अशीमहि । गाधम् । उत । प्रतिऽस्थाम् । नमः । दिवे । बृहते । सदनाय[१] ॥ ६ ॥

हे मित्रावरुणा **मित्रावरुणौ अहोरात्राभिमानिनौ** तत् **वक्ष्यमाणं फलम्** अस्तु । **हे** अग्ने **प्रातःसायंकालाभिमानिन्** तत् **वक्ष्यमाणं फलम् अस्तु । किं तत् ।** शम् **रोगाणां शमनं** योः **भयानां यावनं पृथक्करणं च** । इदम् उक्तं फलं शस्तम् **प्रशस्तं समीचीनम्** अस्मभ्यम् अस्तु । उत **अपि च** गाधं प्रतिष्ठाम् । **गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । अस्माद् घञ् । प्रतिष्ठां स्थितेरविच्छेदम् । यद्वा गाधं धनलाभं प्रतिष्ठां च क्षेत्रादिरूपं फलम्** अशीमहि **अश्नुवीमहि । अशू व्याप्तौ । अस्माद् विधिलिङि विकरणस्य लुक् छान्दसः । आशीर्लिङि वा ऊदित्वाद् इडभावः । '**छन्दस्युभयथा**' ( पा ३,४,११७ ) इति लिङः सार्वधातुकत्वात्** '**लिङः सलोपोऽनन्त्यस्य**' ( पा ७,२,७९ ) **इति सकारलोपः ।** दिवे **द्युलोकाय** बृहते **महते** सदनाय **सर्वेषां निवासस्थानाय । अधिकरणे ल्युट् । पृथिव्यै च** नमः **नमस्कारोऽस्तु ।**

**इति द्वितीयेऽनुवाके द्वितीयं सूक्तम् ।**

'उषा अप स्वसुः' **इति एकर्चस्य सूक्तस्य रात्रिकल्पे शान्त्यर्थजपे** 'शान्ता द्यौः' **इत्यादिसूक्तत्रयेण सह उक्तो विनियोगः ।**

**सा खल्वेषा ऋग् एवम् आम्नायते—**

**उषा अप[२] स्वसुस्तमः सं वर्तयति[३] वर्तनिं सुजातता[४] ।**
**अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ १ ॥**

उषाः । अप[५] । स्वसुः । तमः । सम् । वर्तयति । वर्तनिम् । सुऽजातता[४] ।
अया । वाजम् । देवऽहितम् । सनेम । मदेम । शतऽहिमाः । सुऽवीराः ॥ १ ॥

उषाः **उषःकालाभिमानिनी देवता** स्वसुः । **यदा उषा अभवत् तदा अनन्तरमेव रात्रिर्भवतीति परस्पराविनाभावेन रात्रिरुषसः स्वसेत्युच्यते । स्वसुः स्वयमेव सारिण्या आगच्छन्त्याः स्वसृभूताया रात्रेः** तमः **अन्धकारम्** अप । **गमयतीति योग्यक्रियाध्याहारः ।** ततः सुजातता **सुष्ठु जाता सुजाता तस्या भावः सुजातता ।** 'त्वतलोर्गुणवचनस्य' ( पावा ६,३,३५ ) **इति पुंवद्भावः ।** '**तृतीयाया आकारः**[६] **। सुजाततया सुष्ठु प्रादुर्भावेन सम्यक् प्रकाशकरणेन** वर्तनिम् **मार्गं लौकिकं वैदिकं च** संवर्तयति **सम्यग् निर्वर्तयति**[७] **। उषःकाले जाते सर्वेऽपि प्राणिनः स्वस्वव्यापार-**

---

१. सादनाय P. २. आपः A,D; अपः $B^h$,C,K,$K^m$,R,$S^m$,V,WM.; अपुः $B^s$; अप Cs. ३. वर्तयत D. ४. °याततां D,$K^m$,$S^m$,V,Dc,P,WM. ५. आपः P; आपः $P^s$,J. ६. तृतीया आकारः S'. ७. निवर्त° S'.

करणाय मार्गं पश्यन्ति वैदिका अपि अग्निहोत्रादिकर्ममार्गं पश्यन्तीत्यर्थः। अया अनया उषसा। सर्वविधीनां छन्दसि विकल्पितत्वात् अनादेशाभावः। इदमः इद्रूपस्य लोपः। 'आङि चापः' (पा ७,३,१०५) इति एत्वे अयादेशः। अनादेशो वा नकारलोपश्छान्दसः। 'ऊडिदम्°' (पा ६,१,१७१) इति विभक्तेरुदात्तत्वम्। देवहितम् देवैः सम्यगिष्टैर्हितं निहितं दत्तं देवेभ्यो वा हितं वाजम् अन्नं सनेम संभजेमहि लभेमहि। वन षण संभक्तौ। अनन्तरं सुवीराः। वीरः कर्मणि कुशलः पुत्रपौत्रादिः। शोभनपुत्रादिसमेताः सन्तः शतहिमाः। हिमशब्दो हेमन्तर्तुवाची। शतं[1] हिमाः[1] शतसंख्याकान् हेमन्तर्तून् शतं वर्षाणि मदेम हृष्यास्म। 'कालाध्वनोः°' (पा २,३,५) इति द्वितीया। माद्यतेः 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति अङ्प्रत्ययः।

इति द्वितीयेऽनुवाके तृतीयं सूक्तम्।

'इन्द्रस्य बाहू' इति चतुर्थं सूक्तम् अप्रतिरथसंज्ञकम्। तस्य '[2]गणावायुव्यवर्चस्यौ तथाऽप्रतिरथं स्मृतम्[2]' (शांक २३,२) इति शान्तिकल्पे, 'अप्रतिरथं जपित्वा' (तु. वैताश्रौ १३,११ अ१ ६,१,१५) इति वैतानपरिशिष्टादिषु च यत्रयत्र अप्रतिरथसंज्ञया विनियोगश्चोद्यते तत्र सर्वत्र अस्य विनियोगोऽवगन्तव्यः।

इन्द्रस्य बाहू स्थविरौ [3]वृषाणौ चित्रा इमा वृषभौ† पारयिष्णू‡[3]।
तौ योक्षे[4] प्रथमो[5] योग आगते याभ्यां जितमसुराणां स्व१र्यत्[6] ॥ १ ॥

इन्द्रस्य। बाहू इति। स्थविरौ। वृषाणौ। चित्रा[7]। इमा। वृषभौ। पारयिष्णू इति।
तौ। योक्षे। प्रथमः। योगे। आऽगते। याभ्याम्। जितम्। असुराणाम्। स्वः। यत् ॥

अस्मिन् सूक्ते शत्रुधर्षणसमर्थ इन्द्रः स्तूयते। स हि स्वबाहुभ्यामेव परान् हिनस्तीति तावेव प्रथमं स्तूयेते। स्थविरौ नाम[8] स्थूलौ पुष्टौ[9] महान्तौ वृषाणौ अभिमतफलवर्षकौ। 'आप्रयच्छ दक्षिणादोत सव्यात्' (अ ७,२७,८) इति हि मन्त्रान्तरम्। शस्त्रास्त्रवर्षकौ वा चित्रा चित्रौ चायनीयौ सर्वैः श्लाघनीयौ। चायृ पूजानिशामनयोः इत्यस्माद् उत्पन्नश्चित्रशब्द इति यास्को मन्यते (तु. नि १२,६)। [10]कटकाङ्गदादिभिराभरणैर्नानावर्णौ वा इमा इमौ परिदृश्यमानौ वृषभौ। लुप्तोपमम् एतत्। वृषभौ पुंगवाविव दुर्ललितौ पारयिष्णू प्रक्रान्तशत्रुहननकर्म समाप्तिं गमयन्तौ निःशेषं शत्रून् मर्दयन्तौ याविन्द्रस्य परमैश्वर्यसंपन्नस्य देवस्य बाहू विद्येते

---

१. कर्मधारये स्वरः? २. °वर्चस्यावृथा प्रतिरथं स्मृतिम् S'. ३. युवौनावना धृष्ण्यौ[1] सुप्रतीकाविसह्यौ[2] कौ २,१२१९. † वृषभो A,D,K,K^m,C_s. ‡ °यिष्णु B^b. ४. योक्ष्ये RW. पै ७,४,१; युञ्जीत कौ. ५. प्रथमौ RW. कौ. ६. स्व॒र्य॑त A,R,C, S; सेहो[2]महैत् कौ. ७. चित्रा > चित्राः P[1]. ८. ना नास्ति S'. ९. पुष्टा S'. १०. कटकांगनादि° S'.

तौ बाहू प्रथमः सर्वेभ्य उपासकेभ्यः पूर्वभावी सन् यक्षे[1] पूजयामि प्रोत्साहयामि। यजतेर्लेटि 'सिब्बहुलम्°' (पा ३,१,३४) इति सिप्। 'टित आत्मनेपदानाम्°' (पा ३,४,७९) इति टेरेत्वम्। किमर्थं यजनम्। योगे आगते च। अप्राप्तप्रापणं[2] योगः। प्राप्तस्य परिरक्षणं क्षेमः। अत्र आगतशब्देन क्षेम उच्यते। योगक्षेमार्थं यक्षे[3] इति संबन्धः। याभ्यां बाहुभ्याम् असुराणाम् देवविद्वेषिणां स्वर्यत्[4] स्वः स्वर्गं तत्र निवासिनो देवान् वा यत् गच्छत्[4] बाधकत्वेन प्राप्नुवत् बलं शारीरं सेनालक्षणं च वीर्यं जितम् पराजितम्। निरस्तम् इत्यर्थः।

आ॒शुः शिशा॑नो वृष॒भो न भी॒मो[5] घ॑नाघ॒नः[6] क्षोभ॑णश्चर्ष॒णी॒नाम्[7]।
सं॒क्रन्द॑नोऽनिमि॒ष ए॑कवी॒रः श॒तं सेना॑ अजयत् सा॒कमिन्द्रः॑ ॥ २ ॥

आ॒शुः। शिशा॑नः। वृ॒ष॒भः। न। भी॒मः। घ॒ना॒घ॒नः। क्षोभ॑णः[8]। च॒र्ष॒णी॒नाम्।
स॒म्ऽक्रन्द॑नः। अ॒नि॒ऽमि॒षः। ए॒क॒ऽवी॒रः। श॒तम्। सेनाः॑। अ॒ज॒य॒त्। सा॒कम्। इन्द्रः॑ ॥ २ ॥

आशुः शीघ्रकारी व्यापको वा। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' (पाउ १,१) इति उण्प्रत्ययः। शिशानः तीक्ष्णीभवन्मतिः[9] स्वाभिमतसंपादने व्यग्रः। शो तनूकरणे। व्यत्ययेन आत्मनेपदम्। 'बहुलं छन्दसि' (पा २,४,७६) इति शपः श्लुः। अभ्यासस्य च इत्त्वम्। श्यैङ् गतौ इत्यस्य वा। छान्दसो यलोपः। वृषभो न वृषभ इव भीमः भयंकरः घनाघनः हन्ता शत्रूणाम्। हन्तेः पचाद्यचि 'हन्तेर्घत्वं च' (पावा ६,१,१२) इति द्विर्वचनम्, अभ्यासस्य आगागमः, घत्वं च धात्वभ्यासयोः। चर्षणीनाम् मनुष्याणां क्षोभणः क्षोभयिता। 'कृत्यल्युटः°' (पा ३,३,११३) इति कर्तरि ल्युट्। प्रावृषि वर्षादिना कर्षकादीन् युद्धे परसेना वा विक्षोभयन् संक्रन्दनः युद्धे रिपूणाम् आह्वाता क्रन्दयिता वा स्तनयित्नूनां वा शब्दयिता अनिमिषः अनिमेषचक्षुः। मिषतेः 'घञर्थे कविधानम्' (पावा ३,३,५८) इति कः। ततो बहुव्रीहौ 'नञ्सुभ्याम्' (पा ६,२,१७२) इति अन्तोदात्तत्वम्। एकवीरः एकविक्रान्तः[10] असहाय एव कार्यसमर्थः ईदृश इन्द्रः शतम् बह्वीः सेनाः परकीयाः साकम् सहैव एकप्रकारेण अजयत् जयति। तस्मात् तमेवाश्रयत[11]। इष्टसिद्ध्यर्थम् इति शेषः।

सं॒क्रन्द॑नेनानिमि॒षेण॑ [12]जि॒ष्णुना॑यो॒ध्येन॑ दुश्च्यव॒नेन॑[12] धृ॒ष्णुना॑।
तदिन्द्रे॑ण जयत॒ तत्स॑हध्वं॒ युधो॑ नर॒ इषु॑हस्तेन॒ वृष्णा॑ ॥ ३ ॥

---

१. वैतु. संपा.	२. प्रापण° S′.	३. यजत S′.	४. अगच्छन् S′.
५. युध्मो तै ४,६,४,१ मै २,१०,४.	६. °घन A,B.	७. क्षोभन° A,C,D,S^m, मै.
८. क्षोभनः P,P².	९. तीक्ष्णभव° S′.	१०. एकविक्रीतः S′.	११. तमेवपमा
श्रत्य S′.	१२. जिष्णुनायोध्येन दुश्चवनेन A,D,R,S^m; जिष्णुनायोध्येन दुश्चवनेन B^b; जिष्णुनायोध्येन दुश्चवनेन C; जिष्णुनायोध्येन दुश्च्यवनेन Cs; जिष्णुना युत्कारेण° ऋ १०,१०३, मा १७,३३ तै. मं. कौ २,१२००.

सम्ऽक्रन्दनेन । अनिऽमिषेण । जिष्णुना । अयोध्येन । दुःऽच्यवनेन[1] । धृष्णुना ।
तत् । इन्द्रेण । जयत । तत् । सहध्वम् । युधः । नरः[2] । इषुऽहस्तेन । वृष्णा ॥ ३ ॥

संक्रन्दनेनानिमिषेण इति व्याख्यातौ । संक्रन्दयित्रा अनिमेषचक्षुषा[3] जिष्णुना जयशीलेन योध्येन[4] युद्धसंसक्तेन । युध संप्रहारे । 'ऋहलोर्ण्यत्' (पा ३,१,१२४)। 'शकि लिङ् च' ( पा ३,३, १७२) इति शक्यार्थे कृत्यप्रत्ययः । दुश्च्यवनेन दुःखेन च्यावयितुं शक्येन अविचाल्येन । 'छन्दसि गत्यर्थेभ्यः' (पा ३,३,१२९) इति युच् । धृष्णुना प्रसहनशीलेन इषुहस्तेन । इषवो बाणा हस्ते यस्येति बहुव्रीहौ 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' ( पावा २,२,३६ ) इति परनिपातः । वृष्णा वर्षित्रा कामानाम् इन्द्रेण यथोक्तगुणसंपन्नेन सहायेन हे युधः योद्धारः हे नरः मनुष्याः । 'विभाषितं विशेषवचने बहुवचनम्' ( पा ८,१,७४ ) इति पूर्वस्य आमन्त्रितस्य अविद्यमानवत्त्वनिषेधाद् द्वितीयं निहन्यते । योद्धारः शूराः यूयं[5] तज्जयत । जेतव्यम् इति सामर्थ्याल्लभ्यते । किं च तेनैव इन्द्रेण सहायेन तत् सहध्वम् अभिभवनीयम् अभिभवत इति ।

स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन[6] ।
संसृष्टजित् सोमपा बाहुशर्ध्यु१ग्रधन्वा[7] प्रतिहिताभिरस्ता[8] ॥ ४ ॥

सः । इषुऽहस्तैः । सः । निषङ्गिऽभिः । वशी । सम्ऽस्रष्टा[9] । सः । युधः । इन्द्रः । गणेन ।
संसृष्टऽजित् । सोमऽपाः[10] । बाहुऽशर्धी[11] । उग्रऽधन्वा । प्रतिऽहिताभिः । अस्ता[8] ॥ ४ ॥

इषुहस्तैः इषवो[12] हस्तेषु येषां तैरुपलक्षितः स इन्द्रः निषङ्गिभिः इषुधियुक्तै- र्धन्विभिः । निषङ्गशब्देन सर्वदा हस्ते[13] संबध्यमानो गृह्यमाणः खड्गादिरुच्यते । तद्वद्भिः सहितः स इन्द्रः वशी वशैः वश्यैर्वशवर्तिभिरनुचरैस्तद्वान् स च इन्द्रः संस्रष्टा संयोजनशीलः । केन संस्रष्टा । गणेन । सामर्थ्यात् परकीयो गणो विवक्ष्यते । परकीयेण सैन्येन एकीभवनशीलः । किं कुर्वन् । युधः युध्यमानः । इगुपधलक्षणः कः[14] । यद्वा युधः युद्धाद्धेतोः । 'सावेकाचः०' (पा ६,१,१६८) इति विभक्तेरुदात्तत्वम्[†] । न केवलं संस्रष्टा अपि तु संसृष्टजित् संसृष्टानां संघीभूतानाम् अभिमुखम् आगतानां वा जेता सोमपाः सोमस्य पाता बाहुशर्धी । शर्धो बलम् । बाहुबलवान् । मत्वर्थीय इनिप्रत्ययः । यद्वा शृधु प्रसहने । बाहुभ्यां शर्धयति अभिभवतीति

---

१. °च्यवनेन P,J. २. नरः P; नरः > नरः J. ३. अनिमेषे° S'. ४. वैतु. मंपा. ५. युधं S'. ६. संस्सृष्टासु युत्स्विन्द्रो गणेषु मै २,१०,४. † संसंष्टा A,B[h],C,K,K[m],S[m],V; संस्रष्टा > संसृष्टा Dc. ७. °शर्ध्यू° A; °शर्ध्यू° S[m]; शर्ध्यूर्ध्वधन्वा मै. तै ४,४,६,१; °धन्वाः C,B[h]. ८. तु. सा.; वैतु. मूको. 'स्तात्. ९. °संष्टा P,P[2],J. १०. सम्ऽपा P,P[2]; सोम्ऽपा J. ११. बहु° P. १२. इषु S'. १३. हस्त S'. १४. कप्रत्यये स्वरः ?.

बाहुशर्धी। 'सुप्यजातौ°' (पा ३,२,७८) इति णिनिः। उग्रधन्वा भयंकरधनुर्युक्तः। 'धनुषश्च' (पा ५,४,१३२) इति अनङ् समासान्तः। प्रतिहिताभिः परशरीरे प्रेरिताभिरिषुभिः अस्ता परेषां क्षेप्ता मारयिता। असु क्षेपणे। तृचि[1] 'रधादिभ्यश्च' (पा ७,२,४५) इति इड्विकल्पः। एतादृशगुणोपेत इन्द्रो वर्तते। तादृशेन इन्द्रेण जयत तत् सहध्वम् इति।

बलविज्ञायः[2] स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः।
अभिवीरो अभिषत्वा[3] सहोजिज्जैत्रमिन्द्र[4] रथमा तिष्ठ गोविदम्[5] ॥ ५ ॥

बलऽविज्ञायः। स्थविरः। प्रऽवीरः। सहस्वान्। वाजी। सहमानः। उग्रः।
अभिऽवीरः। अभिऽसत्वा। सहःऽजित्। जैत्रम्। इन्द्र। रथम्। आ। तिष्ठ। गोऽविदम्[5] ॥

बलविज्ञायः परस्य बलं विजानातीति। 'कर्मण्यण्' (पा ३,२,१)। यद्वा अयं मम बलम् इति सर्वैर्बलत्वेन विज्ञायत इति बलविज्ञायः। सर्वस्य बलभूत[6] इत्यर्थः। 'अकर्तरि च कारके संज्ञायाम्' (पा ३,३,१९) इति कर्मणि घञ्। स्थविरः महान् पुरातनो वा प्रवीरः प्रकर्षेण वीरः शूरः। यद्वा प्रगतान्[7] परागतबलानपि वीरयतीति[8] प्रवीरः सहस्वान् अभिभवनशक्तिमान् वाजी अश्ववान् वेगवान् वा सहमानः अभिभवन् शत्रून् उग्रः उद्गूर्णबलः अभिवीरः अभितो वीरा बलवन्तः अनुचरा यस्य सः अभिषत्वा अभिषदनशीलः शत्रुसेनाभिगमनशीलः। सदेः क्वनिप्। दकारस्य तकारः। 'सदिरप्रतेः' (पा ८,३,६६) इति षत्वम्। यद्वा सत्वनो वीरान् अभिभवतीति अभिसत्वा। सांहितिको मूर्धन्यादेशः। सहोजित् शात्रवीयबलस्य जेता गोविदन्[9] [10]गाः परकीया धेनूः[10] स्वकीयत्वेन जानन् परगवीः स्वाधीनाः कुर्वन्। वेत्तेः शतृप्रत्ययः। 'पूरणगुणसुहित°' (पा २,२,११) इति षष्ठीसमासप्रतिषेधो न भवति। छन्दसि सर्वविधीनां विकल्पितत्वात्। हे इन्द्र एवंगुणविशिष्ट स त्वं जैत्रम् जयशीलं रथम् आ तिष्ठ अस्मदर्थं रथम् आरोढुम् अर्हसि।

इमं वीरमनु हर्षध्वमुग्रमिन्द्रं सखायो[11] अनु सं रभध्वम्।
ग्रामजितं गोजितं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ॥ ६ ॥

इमम्। वीरम्। अनु। हर्षध्वम्। उग्रम्। इन्द्रम्। सखायः। अनु। सम्। रभध्वम्।
ग्रामऽजितम्। गोऽजितम्। वज्रऽबाहुम्। जयन्तम्। अज्म। प्रऽमृणन्तम्। ओजसा ॥ ६ ॥

---

१. तृच्प्र. स्वरः ?. २. °ज्ञाय A,D,R,Cs; °ज्ञाय > °ज्ञायः Dc. ३. अभिसत्वा A,C,D,S^m,Cs,R,W. ऋ १०,१०३,५ मा १७,३३ तै ४,६,४,२ मै २,१०,४ कौ २,१२०३; अभिसत्वा > अभिषत्वा Dc. ४. सहोजा जैत्र° ऋ. मा. तै. कौ.; सहोजा जैत्रायणो काठ १८,५. ५. द्र. RW.; वैद्य. शंपा. सात. °दम् (पपा. गोऽविदम्); गोविद > गोविदम् Cs; गोविद ऋ. मा. तै. मै. काठ. कौ. ६. °भूतम् S'. ७. प्र नास्ति S'. ८. उपपदसमासे स्वरः ?. ९. वैद्य. मंपा. १०. गोः परकीया धेनुः S'. ११. सखायो पै ७,४,६.

हे सखायः समानख्यानाः समानबुद्धिकर्माणो योद्धारो यूयम् इमं शत्रुधर्षणसमर्थं वीरम् विक्रान्तम् अत एव उग्रम् उद्गूर्णबलम् इन्द्रम् अनु हर्षध्वम् । एनं[1] वीरम् अग्रतः कृत्वा यूयं पश्चाद् उत्साहिनो भवत । हृष तुष्टौ । 'कर्तरि शप्' (पा ३,१,६८) इति शबेव जातः[2] । श्यनस्तस्यापवादत्वेऽप्यनुत्पत्तिश्छान्दसी[3] आत्मनेपदं च । तथा इन्द्रम् अनु सं रभध्वम् शत्रुहननाय संरब्धम् उद्योगवन्तम् इन्द्रम् अनु स्वयमपि उद्योगिनो भवत । रभ राभस्ये । इन्द्रं विशिनष्टि— ग्रामजितम् शत्रुसंघस्य जेतारम् । अथवा ग्रामस्य शत्रुपुरस्य[4] जेतारम् गोजितम् शत्रुगवीनां जेतारं वज्रबाहुम् वज्रं बाहौ यस्येति । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति (पावा २,२,३६) परनिपातः । जयन्तं शत्रून् अज्म अजनशीलम्[5] । सुपो लुक् । यद्वा अज्म अजन्ति अत्र योद्धार इति युद्धस्थानम् । अधिकरणे मनिन्प्रत्ययः । युद्धस्थानं जयन्तम् इति । ओजसा वीर्येण प्रमृणन्तम् प्रकर्षेण हिंसन्तं परसैन्यानि । मृण हिंसायाम् । तौदादिकः ।

अभि गोत्राणि सहसा गाहमानोदाय[6] उग्रः[7] शतमन्युरिन्द्रः ।
दुश्च्यवनः[8] पृतनाषाडयोध्योऽस्माकं[9] सेना अवतु प्र युत्सु ॥ ७ ॥

अभि । गोत्राणि । सहसा । गाहमानः । अदायः[10] । उग्रः । शतऽमन्युः । इन्द्रः ।
दुःऽच्यवनः । पृतनाषाट् । अयोध्यः[11] । अस्माकम् । सेनाः । अवतु । प्र । युत्ऽसु ॥ ७ ॥

गोत्राणि गोः उदकस्य [12]त्राणि त्रायकाणि[12] युद्धक्षेत्राणि वा सहसा बलेन अभि गाहमानः आभिमुख्येन प्रविशन् अदायः निर्दयो निग्राह्येष्वविद्यमानकरुणः । दय दानगतिरक्षणहिंसादानेषु । अस्माद् घञि बहुव्रीहौ 'नञ्सुभ्याम्' (पा ६,२,१७२) इति अन्तोदात्तत्वम् । उग्रः उद्गूर्णबलो वीरः शतमन्युः बहुविधक्रोधः दुश्च्यवनः च्यावयितुं युद्धाङ्गनाद् अपसारयितुम् अशक्यः । 'छन्दसि गत्यर्थेभ्यः' (पा ३,३,१२९) इति युच् । पृतनाषाट् परसेनानाम् अभिभविता । 'छन्दसि सहः' (पा ३,२,६३) इति ण्विः । 'सहेः साडः सः' (पा ८,३,५६) इति मूर्धन्यादेशः । अयोध्यः योद्धुं संप्रहर्तुम् अशक्यः ईदृश इन्द्रः युत्सु युद्धेषु । संपदादिलक्षणः क्विप् । अस्माकं सेनाः प्रावतु प्रकर्षेण रक्षतु ।

---

१. येन S'. २. जातः शबेवोत्पन्नः शंपा. ३. श्यनोनोत्पत्ति° S'. ४. शत्रुपरस्य S'. ५. जनन° S'. ६. °नोदुयो ऋ १०,१०३,७ मा १७,३९ काठ १८,५ कौ २,१२०५ RW.; मान आदायों मै २,१०,४. ७. वीरः ऋ. मा. तै ४,६,४,२ मै. काठ. कौ. ८. दुश्चवनः A,Bh,C,D; दुश्चवनः > दुश्च्यवनः Dc. ९. °ऽयुध्यो° ऋ. मा. तै. काठ. कौ.; °ध्योऽस्माकं K,D,V. १०. अदुयः J; अदुयः P. ११. अयोध्यः P,J, मै. पपा. १२. त्रायकाण्यत्राणि S'.

बृह॑स्पते॒ परि॑ दीया॒ रथे॑न[1] [2]र॒क्षोहा॒मित्राँ॑ अप॒बाध॑मानः[2] ।
[3]प्र॒भ॒ञ्जञ्छत्रू॑न् प्रमृ॒णन्न॒मित्रा॑न॒स्माक॑मेध्यवि॒ता[3] त॒नूना॑म्[4] ॥ ८ ॥

बृह॑स्पते । परि॑ । दी॒य॒ । रथे॑न । र॒क्षः॒ऽहा । अ॒मित्रा॑न्[5] । अ॒प॒ऽबाध॑मानः ।
प्र॒ऽभ॒ञ्जन् । शत्रू॑न् । प्र॒ऽमृ॒णन् । अ॒मित्रा॑न् । अ॒स्माक॑म् । ए॒धि॒ । अ॒वि॒ता । त॒नूना॑म् ॥ ८ ॥

हे बृहस्पते बृहतां देवानां पते पालक त्वं रथेन परि दीय । दीयतिर्गतिकर्मसु पठ्यते (तु. निघ २,१४) । छान्दसो धातुः । अथवा दीङ् क्षये अनेकार्थत्वाद् धातूनाम् अत्र गत्यर्थः[6] । युद्धभूमिं परितो गच्छ व्याप्नुहि । रक्षोहा रक्षसां हन्ता अमित्रान् शत्रून् । अम गत्यादिषु । अस्माद् इत्रप्रत्ययः । अपबाधमानः सर्वतो नाशयन् । लक्षणहेत्वोः०" (पा ३,२,१२६) इति हेत्वर्थे शानच् । बाधनेन हेतुना सर्वतो गच्छ । शत्रून् प्रभञ्जन् प्रकर्षेण मर्दयन् । भञ्जो आमर्दने । रौधादिकः । अमित्रान् शत्रून् प्रमृणन् प्रकर्षेण हिंसन् ईदृशस्त्वम् अस्माकं तनूनाम् शरीराणाम् अविता रक्षिता एधि भव । अस्तेर्लोटि 'घ्वसोरेद्धौ०" (पा ६,४,११९) इति हेध्यादेशः एत्वं च ।

इन्द्र॑ एषां[7] ने॒ता बृह॒स्पति॒र्दक्षि॑णा य॒ज्ञः पु॒र ए॑तु॒ सोमः॑ ।
दे॒व॒से॒नाना॑मभिभञ्ज॒ती॒नां जय॑न्तीनां म॒रुतो॑ [8]यन्तु॒ मध्ये॑[8] ॥ ९ ॥

इन्द्रः॑ । ए॒षाम् । ने॒ता । बृ॒ह॒स्पतिः॑ । दक्षि॑णा । य॒ज्ञः । पु॒रः । ए॒तु॒ । सोमः॑ ।
दे॒व॒ऽसे॒नाना॑म् । अ॒भि॒ऽभ॒ञ्ज॒तीना॑म् । जय॑न्तीनाम् । म॒रुतः॑ । य॒न्तु॒ । मध्ये॑ ॥ ९ ॥

अभिभञ्जतीनाम् अस्मदमित्रान् आभिमुख्येन भङ्क्तुं मर्दयितुम् । हेत्वर्थे शतृप्रत्ययः । 'ङ्याश्छन्दसि०" (पा ६,१,१७८) इति नाम उदात्तत्वम् । भञ्जनेन हेतुना जयन्तीनाम् जयनशीलानाम् । बहुलवचनाद्[9] जयन्तीनाम् इत्यत्र नाम उदात्तत्वं न भवति । एवम् अस्मदर्थं[10] प्रवर्तमानानाम् एषाम् । लिङ्गव्यत्ययः । आसाम् देवसेनानाम् इन्द्रो नेता अस्तु । बृहस्पतिः पुरः पुरस्ताद् एतु[11] दक्षिणा च यज्ञः च सोमः च पुर एतु । एतु[12] इति प्रत्येकविवक्षया एकवचनम् । दक्षिणा दक्षिणस्यां दिशि बृहस्पतिरेतु यज्ञः सोमश्च पुरस्ताद् एतु इति केचिद् व्याचक्षते । तदा दक्षिणशब्दाद् 'दक्षिणादाच्' (पा ५,३,३६) इति आचि कृते 'चितः' (पा ६,१,१६३) इति अन्तोदात्तत्वं प्राप्नोति । यथा

१. रथे॑न् C,R,Cs. २. °मित्रै॑ अप॒° R; °मि॒त्रैँ अप॒° D,Cs; °मित्राँ अप॒° A; °मित्राँ॑ अप॒° Bᵇ,C,Sᵐ. ३. प्र॒भ॒ञ्जन्त्सेनाः प्रमृ॒णो यु॒धा जय॑न्न॒स्माक॑° ऋ १०,१०३,४ मा १७,३६ तै ४,६,४,३ मै २,१०,४ काठ १८,५ कौ २,१२०२; प्र॒भञ्ज॒° A. ४. रथा॑नाम् ऋ. मा. तै. काठ. कौ. ५. मि॒त्रा॑न् P; मि॒त्रान् P¹,J. ६. गर्थः S'. ७. आसां ऋ १०,१०३,८ मा १७,४० तै. मै. कौ २,१२०६. ८. यु॒न्त्वग्र॑म् ऋ. मा. मै. कौ.; य॒न्त्वग्रे॑ ते. ९. क नास्ति S'. १०. °दर्थं° S'. ११. एतत् S'. १२. नास्ति मूको.

'सरस्वतीं यां पितरो हवन्ते दक्षिणा यज्ञम् अभिनक्षमाणा' ( ऋ १०,१७,९ ) इत्यत्र दक्षिणाशब्दः अन्तोदात्तः पठ्यते एवम् अत्रापि स्यात् । अतः यज्ञे दीयमाना गोरूपा दक्षिणा अत्र विवक्षिता । दक्ष वृद्धौ । 'द्रुदक्षिभ्यामिनन्' ( पाउ २,५० ) इति इनन्प्रत्यये कृते 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इति आद्युदात्तत्वं सिध्यति । दिगाख्याने वा व्यत्ययेन आद्युदात्तत्वं द्रष्टव्यम् । तथा मरुतो देवताश्च देवसेनानां मध्ये यन्तु गच्छन्तु ।

इन्द्र॑स्य॒ वृष्णो॒ वरु॑णस्य॒ राज्ञ॑ आ॒दि॒त्यानां॑ म॒रुतां॒ शर्ध॑ उ॒ग्रम् ।
म॒हाम॑नसां भुवनच्य॒वानां॒ घोषो॑ दे॒वानां॒ जय॑तामु॒द॑स्थात् ॥ १० ॥

इन्द्र॑स्य । वृष्णः॑ । वरु॑णस्य । राज्ञः॑ । आ॒दि॒त्याना॑म् । म॒रुता॑म् । शर्धः॑ । उ॒ग्रम् ।
म॒हाऽम॑नसाम् । भु॒व॒न॒ऽच्य॒वाना॑म् । घोषः॑ । दे॒वाना॑म् । जय॑ताम् । उत् । अ॒स्था॒त् ॥ १० ॥

वृष्णः कामानां वर्षितुः शस्त्रास्त्राणां वा सांतत्येन प्रक्षेप्तुः इन्द्रस्य राज्ञः राजनशीलस्य वरुणस्य शत्रुनिवारकस्य एतत्संज्ञकस्य देवस्यापि आदित्यानाम् अदितिपुत्राणां देवानां मरुतां च उग्रम् उद्गूर्णं शर्धः शत्रुप्रसहनसमर्थं[1] बलम् उद् अस्थात् उत्तिष्ठतु शत्रून् हन्तुम् आविर्भवतु । शृधु प्रसहने । अस्माद् असुन्प्रत्ययः । ततः महामनसाम् अदीनमनसां भुवनच्यवानाम् भुवनानि[2] च्यावयितुं समर्थानां भुवनेभ्यो लोकेभ्यो वा शत्रूंश्च्यावयितुं शक्तानाम् । च्यवतेरन्तर्भावितण्यर्थात् पचाद्यच् । जयताम् शत्रून् विनाशयतां देवानां सर्वेषामपि घोषः जयध्वनिः उद् अस्थात् उत्तिष्ठतु ।

अ॒स्माक॒मिन्द्रः॒ समृ॑तेषु ध्व॒जेष्व॒स्माकं॒ या इष॑व॒स्ता ज॑यन्तु ।
अ॒स्माकं॑ वी॒रा उत्त॑रे [3]भवन्त्व॒स्मान् दे॑वासोऽवता[3] ह॒वेषु[4] ॥ ११ ॥

अ॒स्माक॑म् । इन्द्रः॑ । सम्ऽऋ॑तेषु । ध्व॒जेषु॑ । अ॒स्माक॑म् । याः । इष॑वः । ताः । ज॒य॒न्तु॒ ।
अ॒स्माक॑म् । वी॒राः । उत्ऽत॑रे । भ॒व॒न्तु॒ । अ॒स्मान् । दे॒वा॒सः॒ । अ॒व॒त॒ । ह॒वेषु॑ ॥ ११ ॥

ध्वजेषु ध्वजवत्सु । अर्शआदित्वात् मत्वर्थीयः अच्प्रत्ययः । संग्रामेषु समृतेषु । अर्तेः 'गत्यर्थाकर्मक°' ( पा ३,४,७२ ) इति कर्तरि क्तप्रत्ययः । संप्राप्तेषु सत्सु अस्माकम् इन्द्र एव । रक्षिता भवत्विति शेषः । अस्माकं या इषवः इष्यमाणाः प्रेर्यमाणाः शराः ता जयन्तु शत्रून् । यद्वा इषुशब्देन इषुमन्तो योधा उच्यन्ते । लुप्तमत्वर्थीयो निर्देशः । इषुमन्तो [5]योधा जयन्तु[5] । अस्माकं संबन्धिनो वीराः

---

१. शत्रुप्रसहन° S'. २. नास्ति मूको. ३. °स्मानु ( °स्माँ उ ऋ. मा. कौ. ) देवा अवता ऋ १०,१०३,११ मा १७,४३ तै ४,६,४,४ मै २,१०,४ काठ १८,४ कौ २,१२०९. ४. भरेष्वा मै. ५. योजयन्तु S'.

विक्रान्तकर्माणः पुरुषा उत्तरे भवन्तु जयेन उत्कृष्टा भवन्तु। हे देवासः देवाः यूयमपि हवेषु। हूयन्ते आहूयन्ते परस्परं योद्धारो योद्धृभिरत्रेति हवः संग्रामः। तेषु अस्मान् अवत रक्षत। यथा जयिनो भवेम तथा अनुपालयत। 'अन्येषामपि दृश्यते' (पा ६,३,१३७) इति तिङन्तस्य दीर्घः।

इति द्वितीयेऽनुवाके चतुर्थं सूक्तम्।

'इदमुच्छ्रेयोऽवसानम्' इति एकर्चेन सूक्तेन साग्निपत्नीक आहिताग्निः प्रयाणे पर्यवसिते आज्यं जुहुयात्।

सैषा ऋग् एवम् आम्नायते—

[1]इदमुच्छ्रेयोऽवसानमागां[2] शिवे[3] मे[3] द्यावापृथिवी अभूताम्[4]।
[5]असपत्नाः प्रदिशो मे भवन्तु[5] न वै त्वा द्विष्मो[6] अभयं [7]नो अस्तु[7] ॥१॥

इदम्। उत्ऽश्रेयः[8]। अवऽसानम्[9]। आ। अगाम्। शिवे इति। मे। द्यावापृथिवी इति। अभूताम्। असपत्नाः। प्रऽदिशः। मे। भवन्तु। न। वै। त्वा। द्विष्मः[10]। अभयम्। नः। अस्तु॥

अवसानम्। अवस्यति परिसमाप्तं भवति प्रयाणम् अत्र स्थान इति अवसानम्। तद्रूपम् इदम्[11] इदानीं गम्यमानं श्रेयः[12] श्रेष्ठं फलम् उत्[12]। योग्यक्रियाध्याहारः। उद्दिश्य आगाम् प्राप्तवान् अस्मि। इणो लुङि गादेशः। द्यावापृथिवी द्यावापृथिव्यौ मे मम शिवे श्रेयःप्रदे अभूताम् भवताम्। भवतेश्छान्दसो लुङ्। तथा मे मम प्रदिशः प्रकृष्टा दिशः प्राच्यादिमहादिशः असपत्नाः। सपत्नीव सपत्नः। अकार उपमार्थीयः। 'यस्येति च' (पा ६,४,१४८) इति ईकारलोपः। एतत् सर्वं 'व्यन्तसपत्ने' (पा ४,१,१४५) इति निपातनात् सिद्धम्। सपत्नरहिता बाधकहेतुकोपद्रवरहिता भवन्तु। 'नञ्सुभ्याम्' (पा ६,२,१७२) इति अन्तोदात्तत्वम्। भयहेतौ विद्यमाने कथं तत्कृतोपद्रवराहित्यम् इत्यत आह— न वै त्वा द्विष्म इति। हे सपत्न त्वा[13] त्वां न द्विष्मः द्विष्टं मा कुर्मः। वैशब्दः प्रसिद्धौ। त्वद्विषये मया द्वेषो न क्रियत इति सर्वे जानन्तीत्यर्थः। अतो नः अस्माकम् अभयं भयराहित्यम् अस्तु। 'अव्यये नञ्कुनिपातानामिति वक्तव्यम्' (पावा ६,२,२) इति नञः प्रकृतिस्वरत्वम्।

इति द्वितीयेऽनुवाके पञ्चमं सूक्तम्।

---

१. मै २,१३,१० विशिष्टः पाभे. २. स्योने आपश्रौ ६,२९,१. ३. ते R, पै २०,२१,१०. ४. आभूताम् A. ५. अनमीवाः प्रदिशः सन्तु मह्यं आपश्रौ. ६. द्विष्मो Cs. ७. नोऽस्तु WM. ८. वैप १,८६७ b द्र. ९. अवसानम् P,P[a],J. १०. द्विष्मः P; द्विष्मः > द्विष्मः J. ११. इदम् इदम् S'. १२. वैतु. अंपा. १३. संस्वा S'.

'यत इन्द्र भयामहे' इत्यस्य सूक्तस्य अभयगणे पाठाद् 'अभयगणोऽभयायाम्' (शांक १८,८) इति, 'आयुष्यश्चाभयश्चैव तथा स्वस्त्ययनो गणः' (अप ५,३,५) इति, 'अभयेनोपतिष्ठते' (शांक १६?) इति च शान्तिकल्पपरिशिष्टादिषु गणप्रयुक्तो विनियोगोऽनुसंधेयः।

यत॑ इन्द्र भया॑महे॒ ततो॑ नो॒ अभ॑यं कृधि ।
मघ॑वंछ॒ग्धि तव॒ त्वं न॑ ऊ॒तिभि॒र्वि द्वि॒षो वि मृधो॑ जहि ॥ १ ॥

यत॑ः । इ॒न्द्र॒ । भया॑महे । तत॑ः । नः॒ । अभ॑यम् । कृ॒धि॒ ।
मघ॑ऽवन् । श॒ग्धि । तव॑ । त्वम् । नः॒ । ऊ॒तिऽभिः॑ । वि । द्वि॒षः॑ । वि । मृधः॑ । ज॒हि॒ ॥

हे इन्द्र अभयंकर यतः यस्माद्धेतोः भयामहे बिभीमः भीतिं प्राप्नुमः। बिभेतेः[3] सामान्यविहितः कर्तरि शबेवोत्पन्नः। यद्वा लेट्याडागमः। उभयत्र व्यत्ययेन आत्मनेपदम्। 'भीत्रार्थानां भयहेतुः' (पा १,४,२५) इति यत इत्यत्र अपादानत्वात् पञ्चमी। ततः तस्माद् भयहेतोः नः अस्माकम् अभयं भयराहित्यम् उपद्रवपरिहारं कृधि कुरु। करोतेर्लोटि विकरणस्य लुक्। 'श्रुशृणुपृकृवृभ्यः°' (पा ६,४,१०२) इति हेर्धिरादेशः। किं च हे मघवन् धनवन् इन्द्र त्वं तव त्वत्संबन्धिनीभिः ऊतिभिः रक्षाभिः नः अस्मान् रक्षितुम्[4] इति शेषः। शग्धि शकेर्लोटि विकरणस्य लुक् छान्दसः। झलन्तत्वात् हेर्धिरादेशः। शक्तः समर्थो भव। यद्वा शकेः प्राप्तकाले लोट्। भयहेतोः सपत्नात् सकाशाद् [5]बिभ्यतोऽस्मांस्त्वदीयैः[5] पालनैः पालयितुम् अयं प्राप्तः काल इत्यर्थः। अनन्तरं द्विषः द्वेष्टॄन् अस्मदीयान् शत्रून् वि जहि विशेषेण छिन्द्धि। मृधः शत्रुसंबन्धिनः संग्रामांश्च वि जहि विशेषेण नाशय। यद्वा द्विषो मृध इति बाह्याभ्यन्तररूपा द्विविधाः शत्रवो विवक्षिताः। संनिहिता असंनिहिताश्चेति वा।

इन्द्रं॑ व॒यम॑नूरा॒धं॑ हवाम॒हेऽनु॑ राध्यास्म द्वि॒पदा॒ चतु॑ष्पदा ।
मा नः॒ सेना॒ अर॑रुषी॒रुप॑ गु॒र्विषू॑चीरिन्द्र॑ द्रु॒हो वि ना॑शय ॥ २ ॥

इन्द्र॑म् । व॒यम् । अ॒नु॒ऽरा॒धम् । ह॒वा॒म॒हे॒ । अनु॑ । रा॒ध्या॒स्म॒ । द्वि॒ऽपदा॑ । चतुः॑ऽपदा ।
मा । नः॒ । सेनाः॑ । अर॑रुषीः । उप॑ । गुः॒ । विषू॑चीः । इ॒न्द्र॒ । द्रु॒हः॑ । वि । ना॒श॒य॒ ॥ २ ॥

---

१. तवं P³,M,RW. ऋ ८,५०,१३ कौ१,२७४; °म C,R,Sᵐ,Cs. २. द्वैतेवे° विष कौ. ३. बिभेदे S'. ४. रक्षतुम् S'. ५. बिभ्यतो नोस्मान्° S'. ६. °मनुराधं Bᵇ. ७. °चीरिन्द्रं Cs. ८. द्रुहो RW. ९. इन्द्रं P.

अनुराधम् अनुक्रमेण राधनीयं पूजनीयम् । सर्वेऽपि स्वस्वकार्यार्थम् इन्द्रम् एव प्रार्थयन्ते । तथा च दाशतय्याम् आम्नायते— 'इन्द्रं परेऽवरे मध्यमास इन्द्रं यान्तोऽवसितास इन्द्रम् । इन्द्रं क्षियन्त उत युध्यमाना इन्द्रं नरो वाजयन्तो हवन्ते' ( ऋ ४,२५,८ ) इति । अनुपूर्वाद् राधतेः कर्मणि घञि 'उपसर्गस्य घञ्यमनुष्ये°' ( पा ६,३,१२२ ) इति अनोः[1] सांहितिको दीर्घः । ईदृशाम् इन्द्रं वयं हवामहे स्वेष्टसिद्ध्यर्थम् आह्वयामः । इन्द्रप्रार्थनया वयं द्विपदा पादद्वयोपेतेन पुत्रभृत्यादिना चतुष्पदा पादचतुष्टयोपेतेन गवाश्वादिना च अनु राध्यास्म अनुक्रमेण संपन्ना भूयास्म । पुत्रभृत्यगवादिरूपाभिमतफलसमृद्धा[2] भवेम । राध साध संसिद्धौ । आशीर्लिङि रूपम् । किं च अररुषीः अदात्र्यः अभिमतफलप्रतिबन्धिकाः[3] सेनाः शात्रवीया नः अस्मान् मोप गुः मोपगच्छन्तु समीपं मा प्राप्नुवन्तु । अररुषीरिति । नञ्पूर्वाद् रातेः क्वसौ 'उगितश्च' ( पा ४,१,६ ) इति ङीपि 'वसोः[4] संप्रसारणम्' ( पा ६,४,१३१ ) । 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः । अव्ययपूर्वपदप्रकृतिस्वरत्वेन आद्युदात्तः । न केवलं समीपप्राप्त्यभावः किं तु हे इन्द्र विषूचीः विष्वगञ्चनाः सर्वतो व्याप्ता द्रुहः द्रुह्यन्तीस्ताः शत्रुसेना वि नाशय विशेषेण जहि ।

इन्द्र॑स्त्रा॒तोत वृ॑त्र॒हा प॑र॒स्फानो॑[5] वरे॑ण्यः ।
स र॑क्षि॒ता च॑रम॒तः[6] स म॑ध्य॒तः स प॒श्चात् स पु॒रस्ता॑न्नो अस्तु ॥ ३ ॥

इन्द्रः॑ । त्रा॒ता । उ॒त । वृ॒त्र॒ऽहा । प॒र॒स्फानः॑ । वरे॑ण्यः ।
सः । र॒क्षि॒ता । च॒र॒म॒तः[7] । सः । म॒ध्य॒तः । सः । प॒श्चात् । सः । पु॒रस्ता॑त् । नः॒ । अ॒स्तु ॥ ३ ॥

उत अपि च वृत्रहा वृत्रम् आवरकम् असुरं मेघं वा हतवान् इन्द्रः त्राता रक्षिता भवतु । सामान्येन उक्त्वा विशेषत आह— वरेण्यः वरणीय इन्द्रः नः[8] अस्माकं परस्पाः[9] परेभ्यः पाता रक्षिता । सकारोपजनश्छान्दसः । परः परस्ताद् वा पाता । उत्तरत्र प्राच्यादिदिग्भ्यो रक्षितेति वक्ष्यतीति तद्व्यतिरिक्ताभ्यो दिग्भ्यो रक्षितेत्यर्थः । पातेर्विच् । स एव इन्द्रः चरमतः अन्ते । सार्वविभक्तिकस्तसिः । तत्र रक्षिता मध्यतः मध्यदेशे । सर्वत्र स इत्युक्तिः अवश्यरक्षणीयत्वद्योतनार्थम् । पश्चात् पृष्ठभागे पुरस्तात् पुरोभागे नः अस्माकं रक्षिता अस्तु भवतु ।

उ॒रुं नो॑ लो॒कमनु॑ नेषि वि॒द्वान्त्स्व१॒र्यज्ज्योति॒रभ॑यं[10] स्व॒स्ति ।

---

१. मनोः S'. २. फल नास्ति S'. ३. °प्रबन्धिकाः S'. ४. क्वसोः S'.
५. परस्मानो ( परस्पानो ? [ द्रु. सा. ] ) S; प॑रु॒स्फानो॑ > प॑रु॒स्पानो॑ Km; °स्फा° > °स्पा° C; परस्पा नो V; प॑रु॒स्फानो॑ > प॑रि॒स्पानो॑ Dc; ग॑यु॒स्फानो॑ RW.; परस्पा नो वै ३,१५,२.
६. °म॒त WM. ७. च॒ । र॒म॒तः P,P², J. ८. वैतु. मंपा. ९. °स्पा S'; वैतु. मंपा.
१०. °स्व॑१॒र्यं° A,Bh,C,D,Sm; °स्व॒र्यंज्ज्यो° R,Cs; °स्व॑र्वं॒ज्ज्योति॒° ऋ ६,४७,८ वै ६,१५,४; सुव॑र्वं॒ज्ज्योति॒° तैब्रा २,७,१३,३.

उग्रा[1] त इन्द्र स्थविरस्य [2]बाहू उप[2] क्षयेम[3] शरणा बृहन्ता ॥ ४ ॥

उरुम् । नः । लोकम् । अनु । नेषि । विद्वान् । स्वः । यत् । ज्योतिः । अभयम् । स्वस्ति ।
उग्रा । ते । इन्द्र । स्थविरस्य । बाहू इति । उप । क्षयेम । शरणा । बृहन्ता ॥ ४ ॥

हे इन्द्र विद्वान् सर्वं जानानस्त्वं नः अस्मान् उरुम् विस्तीर्णं लोकम् इमम् अमुं च अनु नेषि अनुप्रापय । नयतिर्द्विकर्मकः । 'बहुलं छन्दसि' (पा २,४,७३) इति शपो लुक् । स्वर्यत्[4] स्वः स्वर्गं सर्वं वा यत् गच्छद् व्याप्नुवद् वा ज्योतिः आदित्याख्यं स्वस्ति । अविनाशिनाम । अभयम् भयरहितं क्षेमप्रदं च अस्तु । भयहेतुनिबन्धनोपद्रवपरिहारकं क्षेमादिसकलाभीष्टप्रदं च भवतु । हे इन्द्र स्थविरस्य महतः पुरातनस्य वा ते तव संबन्धिनौ उग्रा उग्रौ उद्‌गूर्णबलौ शरणा शरणौ शत्रुविशरणसमर्थौ । अथवा शरणशब्दो रक्षितृवाची । सर्वस्य रक्षकौ बृहन्ता बृहन्तौ महान्तौ बाहू उप क्षियेम[4] उपप्राप्नुयाम । शरणेति विधेयविशेषणम् । रक्षकत्वेन उपगच्छेम । क्षि निवासगत्योः । तौदादिकः । विधिलिङि रूपम् ।

अभयं नः करत्यन्तरिक्षमभयं द्यावापृथिवी उभे इमे ।
अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु ॥ ५ ॥

अभयम् । नः । करति । अन्तरिक्षम् । अभयम् । द्यावापृथिवी इति । उभे इति । इमे इति ।
अभयम् । पश्चात् । अभयम् । पुरस्तात् । उतऽतरात् । अधरात् । अभयम् । नः । अस्तु ॥५॥

अन्तरिक्षम् अन्तरा क्षान्तं मध्यमलोकः नः अस्माकम् अभयम् भयराहित्यं करति कुर्यात् । करोतेः पञ्चमलकारे अडागमः । इमे सर्वप्राणिनिवासस्थानभूते परिदृश्यमाने उभे द्यावापृथिवी द्यावापृथिव्यौ अभयम् । करतीति अनुषज्यमानं क्रियापदम् अत्र द्विवचनान्तत्वेन विपरिणमयितव्यम् । कुर्याताम् । तथा पश्चात् पश्चिमस्यां दिशि नः अस्माकम् अभयम् अस्तु । पुरस्तात् पूर्वस्यां दिशि उत्तरात् उदीच्यां दिशि अधरात् उत्तरप्रतियोगिकः अधरशब्दो दक्षिणदिग्वाची । दक्षिणस्यां दिशि नः अस्माकम् अभयम् अस्तु । 'उत्तराधरदक्षिणादातिः' (पा ५,३,३४) इति आतिप्रत्ययः ।

अभयं मित्रादभयममित्रादभयं[5] ज्ञातादभयं [6]पुरो यः[6] ।
अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ॥ ६ ॥

---

१. ऋग्वा ऋ ६,४७,८ तैब्रा २,७,१३,३. २. बाहूप C,V. ३. क्षियेम पै ३,३५,४; स्येयाम ऋ. तैब्रा. ४. वैद्ध. मंपा. ५. हु. सा.; वैद्ध. मूको. °भंबे. ६. पुरोयः> पुरोयः C; पुरोयः D; पुंरोयः Sm; परोक्षात् RW.; वैप १,२०३५ k इ.

अभयम् । मित्रात् । अभयम् । अमित्रात् । अभयम् । ज्ञातात् । अभयम् । पुरः । यः ।
अभयम् । नक्तम् । अभयम् । दिवा । नः । सर्वाः । आशाः । मम । मित्रम् । भवन्तु ॥ ६ ॥

मित्रात् सुहृदः अभयम् भयराहित्यम् अस्तु । सर्वदा हितकारी खलु पुरुषो मित्रं तस्माद् भयप्रसङ्ग एव नास्ति किमर्थं भयराहित्यम् आशास्यते । सत्यम् । अत्र भयराहित्यं[1] न प्रार्थ्यते किं तु भयव्यतिरिक्तं हितं फलं सर्वदा भवत्विति । अत्र नञस्तदन्यत्वम् अर्थः । तथा अमित्रात् । अमेरित्रप्रत्ययः । शत्रोः सकाशाद् अभयम् अस्तु । अत्र भयपरिहारः प्रार्थ्यते । अमित्रं विशिनष्टि — ज्ञातात् द्वेष्टृत्वेन परिज्ञाताद् अमित्रात् । यः परः[2] ज्ञाताद् अन्यः अपरिज्ञातः प्रकाशशत्रुर्न भवति किं तु गूढशत्रुः[3] तस्माच्च अभयम् अस्तु । नक्तम् रात्रौ दिवा अहनि नः अस्माकम् अभयम् अस्तु । अहोरात्रयोरभयप्रार्थनेन कालनिबन्धनभयपरिहारः । सर्वा आशाः सर्वा दिशः मम अभयकामस्य[4] मित्रम् मित्रवन्मित्रं सर्वदा हितकारिण्यो भवन्तु । अनेन सर्वतो भीतिनिवारणम् आशास्यते ।

इति द्वितीयेऽनुवाके षष्ठं सूक्तम् ।

'असपत्नं पुरस्तात्' इति सूक्तचतुष्कस्य रात्रौ पुरोहितकर्तव्ये राज्ञः शय्यागृहप्रवेशकर्मणि अभिमन्त्रितशर्करायाः प्रतिदिशं प्रदक्षिणं प्रक्षेपे विनियोगः । 'अथातो रात्रिसूक्तानां विधिम् अनुक्रमिष्यामः' इति प्रक्रम्य उक्तं परिशिष्टे— "'त्र्यायुषम्' (अ ५,२८,७) इति राज्ञे रक्षां कृत्वा । 'असपत्नम्' (अ १९,१६) इति शर्कराम् अभिमन्त्र्याङ्गुष्ठात् प्रदक्षिणं प्रतिदिशं क्षिपेत्" (अप ४,५,१;१२;१३) इति । असपत्नम् इत्येकेन प्रतीकेन समनन्तरं सूक्तत्रयं समानार्थत्वाद् गृह्यते । अत एव 'असपत्नम्' इति अर्थसूक्तम् आथर्वणा व्यवहरन्ति ।

असपत्नं पुरस्तात् पश्चान्नो अभयं कृतम्[5] ।
सविता मा दक्षिणत उत्तरान्मा शचीपतिः ॥ १ ॥

असपत्नम् । पुरस्तात् । पश्चात् । नः । अभयम् । कृतम्[5] ।
सविता । मा । दक्षिणतः । उत्तरात् । मा । शचीऽपतिः[6] ॥ १ ॥

पुरस्तात् पूर्वस्यां दिशि असपत्नम् सपत्नराहित्यं शत्रुबाधापरिहारं नः अस्माकं कृतम् कुरुतम् । सामर्थ्याद् उत्तरार्धे निर्दिष्टौ सवितृशचीपती संबोध्येते । पश्चात् च अभयं कुरुतम् । करोतेर्लुङि 'मन्त्रे घस०' (पा २,४,८०) इति च्लेर्लुक् । अमाङ्योगेऽपि छन्दसि अडभावः । करोतेर्लोटि वा शपो लुक् । अथ परोक्षवचनः । मा मां

१. °राहित्यमत्र S'. २. वैतु. मंपा. ३. गूढशत्रुः S'. ४. च नास्ति S'.
५. तु. R; वैतु. अन्ये मूको. कृतम्. ६. शची° P².

दक्षिणतः सविता सर्वस्य प्रेरको देवः । रक्षतु इति क्रियाध्याहारः । उत्तरात् उत्तरतः शचीपतिः शची इन्द्राणी तस्याः पतिरिन्द्रः मा मां रक्षतु ।

दि॒वो मा॑दि॒त्या र॑क्षन्तु॒ भूम्या॑ रक्षन्त्व॒ग्नयः॑ ।
इ॒न्द्रा॒ग्नी र॑क्षतां मा पु॒रस्ता॑द॒श्विना॑व॒भितः॒ शर्म॑ यच्छताम् ।
ति॒र॒श्चीन॒घ्न्या[1] र॑क्षतु जा॒तवे॑दा भूत॒कृतो॑ मे स॒र्वतः॑ सन्तु॒ वर्म॑ ॥ २ ॥

दि॒वः । मा॒ । आ॒दि॒त्याः । र॒क्षन्तु । भूम्याः॑ । र॒क्षन्तु । अ॒ग्नयः॑ ।
इ॒न्द्रा॒ग्नी इति॑ । र॒क्षता॑म् । मा॒ । पु॒रस्ता॑त् । अ॒श्विनौ॑ । अ॒भितः॑ । शर्म॑ । य॒च्छता॑म् ।
ति॒र॒श्चीन् । अ॒घ्न्या । र॒क्षतु[2] । जा॒तऽवे॑दाः । भू॒त॒ऽकृतः॑ । मे॒ । स॒र्वतः॑ । स॒न्तु॒ । वर्म॑ ॥ २ ॥

आदित्याः अदितेः पुत्राः सर्वे देवाः दिवः द्युलोकाद् मा मां रक्षन्तु । द्युलोकनिबन्धनेभ्योऽशन्यादिभ्यो दैवीभ्य आपद्भ्यो रक्षन्तु । अग्नयः अङ्गनशीला गार्हपत्यादयस्त्रयोऽग्नयो भूम्याः सकाशाद् रक्षन्तु भूमिहेतुकान् उपद्रवान् परिहरन्तु । दिवो भूम्या इत्युभयत्र 'भीत्रार्थानाम्०' ( पा १,४,२५ ) इति अपादानत्वात् पञ्चमी । तथा पुरस्तात् पूर्वस्या दिशो मा माम् इन्द्राग्नी रक्षताम् पालयताम् । इन्द्रः पूर्वदिगभिमानी । आहवनीयाग्निरपि पूर्वदिगभिमुख एव प्रणीयते[3] । अतस्तौ ततो रक्षितारौ भवताम् । तथा अश्विनौ सूर्यपुत्रौ देवानां भिषजौ नासत्यौ अभितः सर्वतः शर्म सुखं यच्छताम्[4] प्रयच्छताम् । 'पाघ्रा०' (पा ७,३,७८) इत्यादिना दाणो यच्छादेशः ।

तिरश्चीनित्यादि । सैषा द्विपदा ऋक् । जातवेदाः जातानां वेदिता जातैर्विद्यमानो वा अग्निः[5] तिरश्चीन् तिर्यगञ्चनान् अस्मान् रक्षतु । यद्वा तिरश्चीशब्देन विदिश उच्यन्ते । नकारोपजनश्छान्दसः । तिरश्चीः । पञ्चम्याः शसादेशः । तिरश्चीभ्यो दिग्भ्यो रक्षतु । तिरःपूर्वाद् 'अञ्चतेश्चोपसंख्यानम्' ( पावा ४,१,६ ) इति ङीप् । 'अचः' ( पा ६,४,१३८ ) इति अकारलोपे श्चुत्वेन शकारः । तिरश्चीनान् अस्मान् इति पक्षे तिर्यक्शब्दाद् 'विभाषाञ्चेरदिक्स्त्रियाम्' ( पा ५,४,८ ) इति खः । तस्य ईनादेशो तिरश्चीन इति भवति । अत्र अन्त्यलोपश्छान्दसः । अग्नी[5] रक्षतु इत्यत्र 'दूलोपे०' ( पा ६,३,१११ ) इति सांहितिको दीर्घः । भूतकृतः भवनवताम् उत्पत्तिमतां प्राणिनां कर्तारो निर्मातारो देवाः । यद्वा भूता ग्रहपिशाचादयः । तेषां निकर्तितारो हिंसितारो देवाः । कृती छेदने । क्विप् । तादृशा देवा मे मम सर्वतः सर्वत्र वर्म परैरभेद्यं सुरक्षकं कवचं सन्तु भवन्तु ।

इति द्वितीयेऽनुवाके सप्तमं सूक्तम् ।

---

१. तिरश्चीनघ्नी सा. V; °चीनाघ्न्या RW.; वैप १,१४८० j द्र. २. रक्षतु P,P¹,J.
३. प्रणीयन्ते S¹, ४. यच्छताम् प्रथम S¹. ५. वैतु. मैपा.

'अग्निर्मा पातु' इति सूक्तद्वयस्य रात्रौ राज्ञः शय्यागृहप्रवेशनार्थं पुरोहितेन कर्तव्ये पिष्टमयरात्रिप्रतिमादिसमर्चनकर्मणि प्रतिदिशं शर्कराचतुष्टयप्रक्षेपानन्तरं राजानम्[1] अधिष्ठापितायाः पञ्चम्याः शर्करायाः प्रतिदिशं प्रक्षेपे विनियोगः।

'अथ पिष्टमयीं रात्रिं चतुर्भिर्दीपकैः सह।
अर्चितां[2] गन्धमाल्येन स्थापयेत् तस्य चाग्रतः॥' (अप ४,३,१) इति

प्रक्रम्य उक्तं परिशिष्टे—"'[3]अभयम्' (अ १९,१५,५) इत्यृचा[3] चतस्रः शर्कराः प्रदक्षिणं प्रतिदिशं क्षिपेत्। 'एह्यश्मानम्[4] आ तिष्ठ' (अ २,१३,४) इति पञ्चमीम् अधिष्ठापयेत्। 'न तं यक्ष्माः' (अ १९,३८), 'ऐतु देवः' (अ १९,३९) इति गुग्गुलुकुष्ठधूपं दद्यात्। 'यस्ते गन्धः' (१२,१,२३-२५), 'त्र्यायुषम्' (अ ५,२८,७) इति भूमिं प्रयच्छेत्। 'दूष्या दूषिरसि' (अ २,११,१) इति प्रतिसरम्[5] आबध्य। [6]तां शर्कराम्[6] 'अग्निर्मा पातु वसुभिः पुरस्ताद्' (अ १९,१७) इति ×× प्रतिदिशं क्षिपेत्" (अप ४,४,५-१०) इति।

तत्र 'अग्निर्मा पातु' इति सूक्ते एकैकस्याः प्राच्यादिमहादिशो द्वौ द्वौ पर्यायौ ध्रुवाया ऊर्ध्वाया[7] दिशश्च एकैक इति दश पर्यायाः।

तत्र प्रथमपर्याये [8]एष मन्त्र आम्नायते[8]—

अग्निर्मा पातु वसुभिः पुरस्तात् तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि[9]।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा॥ १॥

अग्निः। मा। पातु। वसुऽभिः। पुरस्तात्। तस्मिन्। क्रमे। तस्मिन्। श्रये। ताम्। पुरम्। प्र। एमि। सः। मा। रक्षतु। सः। मा। गोपायतु। तस्मै। आत्मानम्। परि। ददे। स्वाहा॥१॥

अग्निः पृथिवीस्थानो देवः वसुभिः एतत्संज्ञकैर्देवैः सह पुरस्तात् पूर्वस्यां दिशि मा मां पातु रक्षतु। अग्नेर्वसुसाहित्यम् अन्यत्राम्नायते—'अग्निः प्रथमो वसुभिर्नो अव्यात्' (आश्रौ २,११,१२) इति। कुत्रस्थं पुरुषं रक्षतु इत्याकाङ्क्षायाम् आह—तस्मिन् क्रमे। क्रमणं क्रमः[10] पादप्रक्षेपः। भावे घञ्। 'नोदात्तोपदेशस्य' (पा ७,३,३४) इति वृद्ध्यभावः। तस्मिन् पादप्रक्षेपे। तस्मिन् श्रये। श्रयणं श्रयः[10] आश्रयः। 'श्रिणीभुवोऽनुपसर्गे' (पा ३,३,२४) इति विहितो घञ् व्यत्ययेन न प्रवर्तते। [11]'एरच्' (पा ३,३,५६) इति अच्प्रत्ययः[11]। तस्मिन् आश्रये अवस्थाने। पादप्रक्षेपप्रदेशे अवस्थानप्रदेशे चेत्यर्थः। यद्वा क्रमे श्रये इति तिङन्तं पदम्। तस्मिन् यस्मि-

---

१. राजम् S'.　२. मर्चितां S'.　३. ३. BN.; वैतु. S' अभयं सोम प्रतीत्य-न्यूचं.　४. एह्यश्मानम् S'.　५. प्रतिदिशम् S'.　६. नास्ति BN.　७. ऊर्ध्वायाश्च S'.　८. एवमत्रमाम्नायते S'.　९. प्रब्रवीमि पै ७,१६,१ एवमग्रेऽपि.　१०. वैतु. मंपा.　११. येनाजित्प्रत्ययः S'.

न्नुद्दिष्टे स्थाने क्रमे पादं प्रक्षिपामि। क्रमतेर्विंपूर्वत्वाभावेऽपि व्यत्ययेन आत्मनेपदम्। यद्वा वृत्त्याद्यर्थेषु अनुपसर्गात् आत्मनेपदम्। यद् गन्तव्यं स्थानम् उद्दिश्य उत्सहे तत्र[१]। तथा यत् स्थानं श्रये आश्रयामि तत्र। श्रिञ्[२] सेवायाम्। लटि ञित्त्वात् कर्त्रभिप्राये क्रियाफले[३] आत्मनेपदम्। तां पुरम् या उद्दिष्टा पूः शय्यागृहलक्षणा तां पुरं प्रैमि प्रगच्छामि। तत्र सर्वत्र अग्निर्मा पात्विति संबन्धः। यद्वा 'आपो मौषधीमतीः ××× तासु क्रमे तासु श्रये' इति षष्ठमन्त्रे स्त्रीलिङ्गनिर्देशेन आम्नानाद् अत्रापि तस्मिन् क्रमे इत्यत्र एवं व्याख्येयम्। तस्मिन्। सति सप्तमीयम्। तस्मिन् वसुमत्यग्नौ रक्षके सति क्रमे क्रमणं[४] करोमि। तस्मिन् रक्षके सति श्रये आश्रयामि। तां पुरं प्रैमीत्यादि पूर्ववत्। किं च स वसुमान् अग्निः मा मां रक्षतु। सः अग्निश्च मा मां गोपायतु। अत्र रक्षणगोपनयोः अहितनिवारणहितकरणरूपपालनभेदेन भेदो द्रष्टव्यः। गुपेः 'गुपूधूप°' (पा ३,१,२८) इति आयप्रत्ययः। तस्मै सर्वतोरक्षकाय वसुमते अग्नये आत्मानं परि ददे। रक्षणार्थं दानं परिदानम् इत्युच्यते। रक्षार्थं प्रयच्छामि। स्वाहा। तदधीनत्वद्योतनार्थं स्वाहाशब्दप्रयोगः यथा सुहुतं[५] हविस्तत्तद्देवताधीनं भवति एवम् आत्मापि रक्षणार्थम् अग्न्यधीनो भवत्वित्यर्थः।

एवम् [६]उत्तरे नव पर्याया[६] व्याख्येयाः। विशेषस्तु तत्रतत्र वक्ष्यते।

[७]द्वितीयपर्यायमन्त्रः—

वायुर्मान्तरिक्षेणैतस्या दिशः पातु तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥ २ ॥

वायुः। मा। अन्तरिक्षेण। एतस्याः। दिशः। पातु। तस्मिन्। क्रमे। तस्मिन्। श्रये। ताम्। पुरम्। प्र। एमि। सः। मा। रक्षतु। सः। मा। गोपायतु। तस्मै। आत्मानम्। परि। ददे। स्वाहा ॥ २ ॥

वायुः अन्तरिक्षस्थानो देवः अन्तरिक्षेण स्वाधिष्ठितेन[८] मध्यमलोकेन सह मा माम् एतस्याः पूर्वमन्त्रे पुरस्ताद् इति निर्दिष्टायाः प्राच्या दिशः पातु। 'भीत्रार्थानाम्°' (पा १,४,२५) इति अपादानत्वात् पञ्चमी। तस्मिन् क्रमे इत्यादि पूर्ववत्।

सोमो मा रुद्रैर्दक्षिणाया दिशः पातु तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥ ३ ॥

---

१. तत्रस्थ S'. २. श्रीञ् शंपा. ३. क्रियापदे S'. ४. क्रमेण S'. ५. सुहवं S'. ६. °रेयनवमप° S'. ७. °तीयः पर्या° S'. ८. स्वधि° S'.

सोमः । मा । रुद्रैः । दक्षिणायाः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ३ ॥

सोमो देवः रुद्रैः रोदयितृभिः एतत्संज्ञकैर्देवैः सह मा मां दक्षिणायाः दक्षिणस्या दिशः पातु । सोमस्य रुद्रसाहित्यम् अन्यत्राम्नायते—'सोमो रुद्रैरभिरक्षतु त्मना' ( आश्रौ २,११,१२ ) इति । शिष्टं पूर्ववज्ज्ञेयम् ।

वरुणो मादित्यैरेतस्यां दिशः पातु तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि । स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥ ४ ॥

वरुणः । मा । आदित्यैः । एतस्याः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ४ ॥

वरुणः वारको देवः आदित्यैः अदितिपुत्रैः एतत्संज्ञैर्देवैः सह । वरुणस्य आदित्यसाहित्यम् अन्यत्र श्रूयते — 'आदित्यैर्नो वरुणः शर्म यंसत्' ( आश्रौ २,११,१२ ) इति । एतस्या दक्षिणाया दिशः पातु । शिष्टं व्याख्यातम् ।

सूर्यो मा द्यावापृथिवीभ्यां प्रतीच्या दिशः पातु तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि । स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥ ५ ॥

सूर्यः । मा । द्यावापृथिवीभ्याम् । प्रतीच्याः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ५ ॥

सूर्यः सर्वस्य प्रेरक आदित्यः । 'राजसूयसूर्य°' ( पा ३,१,११४ ) इति सुवतेः सूयतेर्वा सूर्यशब्दः क्यबन्तत्वेन निपातितः । द्यावापृथिवीभ्यां सह । तत्प्रकाश्यत्वेन तत्साहित्यम् । प्रतीच्याः पश्चिमाया दिशः पातु । शिष्टं पूर्ववद् व्याख्येयम् ।

आपो मौषधीमतीरेतस्यां दिशः पान्तु तासु क्रमे तासु श्रये तां पुरं प्रैमि । ता मा रक्षन्तु ता मा गोपायन्तु ताभ्य आत्मानं परि ददे स्वाहा ॥ ६ ॥

आपः । मा । ओषधीऽमतीः । एतस्याः । दिशः । पान्तु[1] । तासु । क्रमे । तासु । श्रये ।

1. पातु P[1].

ताम् । पुरम् । प्र । एमि । ताः । मा । रक्षन्तु । ताः । मा । गोपायन्तु । ताभ्यः । आत्मानम् । परि । ददे । स्वाहा ॥ ६ ॥

ओषधीमतीः **ओषधीमत्यः । 'वा छन्दसि' ( पा ६,१,१०६ ) इति पूर्वसवर्णदीर्घः ।** आपः । **अपाम् ओषधीसाहित्यं संपोष्यत्वेन हेतुना ।** एतस्याः **प्रतिच्या** दिशः मा **मां** पान्तु । तासु **ओषधीमतीष्वप्सु रक्षिकासु सतीषु** क्रमे **गन्तव्यं स्थानं प्रति पादं प्रक्षिपामि ।** तासु **रक्षित्रीषु** श्रये **संश्रये अवतिष्ठे ।** तां पुरम् **शय्यागृहलक्षणां** प्रैमि **प्रगच्छामि । तत्र सर्वत्र आपः पान्तु इति संबन्धः । किं च** ता आपो मा **मां** रक्षन्तु । ताः **च** मा गोपायन्तु । ताभ्यः **अद्भ्यः** आत्मानं परि ददे **रक्षणार्थं प्रयच्छामि ।** स्वाहा**शब्दो व्याख्यातः ।**

**विश्वकर्मा मा सप्तऋषिभिरुदीच्या दिशः पातु तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि । स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥ ७ ॥**

विश्वऽकर्मा । मा । सप्तऋषिऽभिः । उदीच्याः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ७ ॥

विश्वकर्मा **विश्वं सर्वं कर्म कार्यं सृज्यं यस्माद् भवति स विश्वकर्मा विश्वजगत्कारणभूतः परमात्मा** सप्तर्षिभिः[1] **स्वमनःसृष्टैः सप्तसंख्याकैर्ऋषिभिः सह** मा **माम्** उदीच्या **उत्तरस्या** दिशः पातु । **विश्वकर्मणः सप्तर्षिसाहित्यं स्वकार्यत्वेन । उक्तं च भगवता गीतासु—**

'महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥' ( भगी १०,६ ) **इति ।**

तस्मिन् **सप्तर्षिसहिते विश्वकर्मणि रक्षितरि ।** क्रमे **इत्यादि पूर्ववद् व्याख्येयम् ।**

**इन्द्रो मा मरुत्वानेतस्या दिशः पातु तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि । स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥ ८ ॥**

इन्द्रः । मा । मरुत्ऽवान् । एतस्याः । दिशः । पातु । तस्मिन् । क्रमे । तस्मिन् । श्रये । ताम् । पुरम् । प्र । एमि । सः । मा । रक्षतु । सः । मा । गोपायतु । तस्मै । आत्मानम् । परि । ददे । स्वाहा ॥ ८ ॥

---

१. वैध. मंपा.

मरुत्वान् **मरुद्भिस्तद्वान्**। 'झयः' (पा ८,२,१०) **इति मतुपो वत्वम्**। **स इन्द्रः** एतस्याः **पूर्वमन्त्रोक्ताया उदीच्या** दिशः पातु। **इन्द्रस्य मरुत्साहित्यम् अन्यत्राम्नायते**— 'वृत्रस्य त्वा श्वसथाद् ईषमाणा विश्वे देवा अजहुर्ये सखायः। मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि' (ऋ ८,९६,७) **इति। अस्य मन्त्रस्य ऐतरेयक-ब्राह्मणम् एवम् आम्नायते**— 'इन्द्रो वै वृत्रं हनिष्यन्त्सर्वा देवता अब्रवीद् अनु मोपतिष्ठ-ध्वम् उप माह्वयध्वम् इति। तथेति तं हनिष्यन्त आद्रवन्। सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति हन्तेमान् भीषया इति। तान् अभि प्राश्वसीत्। तस्य श्वसथाद् ईषमाणा विश्वे देवा अद्रवन्। मरुतो हैनं नाजहुः। प्रहर भगवो जहि वीरयस्वेत्येवैनम् एतां वाचं वदन्त उपातिष्ठन्त' (ऐब्रा ३,२०) **इति।** तस्मिन् **मरुत्वति इन्द्रे रक्षितरि। शिष्टं पूर्ववद् व्याख्येयम्।**

प्रजापतिर्मा 'प्रजननवान्त्सह प्रतिष्ठया' ध्रुवाया दिशः पातु तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥ ९ ॥

प्रजाऽपतिः। मा। प्रजननऽवान्[1]। सह। प्रतिऽस्थया[2]। ध्रुवायाः। दिशः। पातु। तस्मिन्। क्रमे। तस्मिन्। श्रये। ताम्। पुरम्। प्र। एमि। सः। मा। रक्षतु। सः। मा। गोपायतु। तस्मै। आत्मानम्। परि। ददे। स्वाहा ॥ ९ ॥

प्रजननवान् **प्रजननं नाम सर्वजगदुत्पादनसाधनं तद्वान्। यद्वा प्रजननं पुंव्यञ्जनं स्त्रीपुंससृष्टेस्तद्धेतुत्वात्।** प्रजापतिः **प्रकर्षेण जायमाना मनुष्यादि-काश्चराचरात्मिकाः प्रजाः तासां पतिः स्रष्टा देवः।** सह। **सामर्थ्यात् प्रजननेन साकम् इत्यर्थः। यद्वा** प्रतिष्ठायाः[4]। **तृतीयार्थे षष्ठी। प्रतिष्ठया सहेति। प्रतिष्ठायाः[5] सर्वजगदाधारभूताया** ध्रुवायाः **स्थिराया भूमेः** दिशः। **भूमिरपि अधरदिक्त्वेनोच्यते।** **तस्याः** पातु। तस्मिन् क्रमे **इत्यादि शिष्टम् अविशिष्टम्।**

बृहस्पतिर्मा विश्वैर्देवैरूर्ध्वाया दिशः पातु तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥ १० ॥

बृहस्पतिः। मा। विश्वैः। देवैः। ऊर्ध्वायाः। दिशः। पातु। तस्मिन्। क्रमे। तस्मिन्। श्रये। ताम्। पुरम्। प्र। एमि। सः। मा। रक्षतु। सः। मा। गोपायतु। तस्मै। आत्मानम्। परि। ददे। स्वाहा ॥ १० ॥

---

१. प्रजनन° A,B^h,C,D,R,S^m, प्रजनन° Cs. २. तु. RW.; वैतु. शंपा. सात. प्रतिष्ठायाः (पपा. प्रतिऽस्थायाः); वैप १,२१५८ j अपि द्र. ३. प्रजननऽवान् P,J. ४. वैतु. मंपा. ५. प्रतिप्रतिष्ठाया S'.

बृहस्पतिः बृहतां महतां देवानां पतिर्देवो विश्वैः सर्वैः देवैः सह ऊर्ध्वायाः उपरिस्थिताया दिवो दिशः। द्यौरपि ऊर्ध्वदिक्त्वेन तत्रतत्रोच्यते। तस्याः पातु। तस्मिन् विश्वदेवसहिते बृहस्पतौ रक्षितरि क्रमे पादप्रक्षेपं करोमि। शिष्टं पूर्ववज्ञेयम्।

इति द्वितीयेऽनुवाके अष्टमं सूक्तम्।

'अग्निं ते वसुवन्तम्' इति सूक्तस्य पिष्टरात्रीसमर्चने कर्मणि शर्कराप्रक्षेपे पूर्वसूक्तेन सह उक्तो विनियोगः।

अत्र पूर्वसूक्ते प्राच्यादिदिग्भ्यो रक्षिका 'वसुमदग्न्यादिदेवताः तत्तद्दिगवस्थिताः[1] सत्यः शत्रुसकाशाद् रक्षन्तु इति प्रतिपाद्यते। अत्र तु तासु देवतासु तत्तद्दिश आगच्छन्तः स्वद्वेषिणः अनिष्टकारिणो नाशार्थं प्रविशन्तु इति प्रतिपाद्यते इत्येतावान् विशेषः। अत्रापि दश पर्यायाः। सर्वेपि अर्धर्चाः।

प्रथमपर्यायद्वयम् एवम् आम्नायते—

अ॒ग्निं ते॒ वसु॑वन्तमृच्छन्तु[2]। ये मा॑ऽघा॒यवः॒ प्राच्या॑ दि॒शो॑ऽभि॒दासा॑न्[3] ॥ १ ॥

अ॒ग्निम्। ते॑[4]। वसु॑ऽवन्तम्। ऋ॒च्छ॒न्तु॒। ये। मा॒। अ॒घ॒ऽयवः॑। प्राच्याः॑। दि॒शः। अ॒भि॒ऽदासा॑न्[3] ॥

वा॒युं ते॒ऽ३॒न्तरि॑क्षवन्तमृच्छन्तु[5]। ये मा॑ऽघा॒यव॑ ए॒तस्या॑ दि॒शो॑ऽभि॒दासा॑न्[3] ॥ २ ॥

वा॒युम्। ते॑[6]। अ॒न्तरि॑क्षऽवन्तम्। ऋ॒च्छ॒न्तु॒। ये। मा॒। अ॒घ॒ऽयवः॑। ए॒तस्याः॑। दि॒शः। अ॒भि॒ऽदासा॑न्[3] ॥ २ ॥

अघायवः अघं हिंसालक्षणं पापं परस्येच्छन्तः। अघशब्दात् 'छन्दसि परेच्छायामपि' (पावा ३,१,८) इति क्यच्। 'अश्वाघस्यात्' (पा ७,४,३७) इति आत्वम्। 'क्याच्छन्दसि' (पा ३,२,१७०) इति उप्रत्ययः। जिघांसवो ये शत्रवः प्राच्याः पूर्वस्या दिश आगत्य मा मां रात्रीसमर्चनकारिणं अभिदासान्[7] अभितः सर्वतो दासयेयुः उपक्षपयेयुः[8] हिंस्युः। दसु उपक्षये। अस्माण्ण्यन्ताद् अभिपूर्वात् पञ्चमलकारे 'लिङ्‌र्थे लेट्' भवन्ति' (पावा ७,१,३९) इति झेस्तिबादेशः। 'इतश्च लोपः'' (पा ३,४,९७) इति इकारलोपः। 'लेटोऽडाटौ' (पा ३,४,९४) इति आडागमः। 'छन्दस्युभयथा' (पा ३,४,११७) इति तिप आर्धधातुकत्वेन 'णेरनिटि' (पा ६,४,५१) इति णिलोपः। प्रत्ययलक्षणपरिभाषया 'अत उपधायाः'

---

१. दग्न्यादीर्देवताः तत्रादिग॰ S'. २. वसुमन्त॰ सा. पै ७,१७,१. ३. ०सु॰ RW. पै.; वैद्व. शंपा. सात. ॰सात्, एवमुत्तरत्रापि; दि॒शो॑ऽभि॒॰ Bʰ,D,R,Sᵐ,Cs,WM., एवमुत्तरत्रापि. ४. ते॒ P. ५. ते॒ऽ३ तरिक्ष॰ C; तेऽ॒न्तरिक्ष॰ D,RS,ᵐCs,WM.; तेऽन्तरिक्ष॰ > तेऽ॒न्तरिक्ष॰ Dc. ६. ते॒ P,J; ते > ते॒ P². ७. वैद्व. मंपा. ८. उपक्षयेयुः S'.

( पा ७,२,११६ ) इति वृद्धिः । ते अभिदासकाः शत्रवो वसुमन्तम्[1] वसुभिर्देवैस्तद्वन्तम् अग्निम् ऋच्छन्तु मरणार्थं प्राप्नुवन्तु । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । अस्मात् लोट् । एवम् उत्तरे नव पर्यायमन्त्रा व्याख्येयाः [१] । अन्तरिक्षवन्तम् अन्तरिक्षम् अधिष्ठेयत्वेन यस्यास्ति तं वायुं ते अघायवः शत्रवः ऋच्छन्तु प्रलयार्थं प्राप्नुवन्तु ये अघायवः शत्रवः एतस्याः प्राच्या दिशः सकाशाद् आगत्य मा माम् अभिदासात्[1] अभिदासयेयुः हिंस्युः [२] ।

तृतीयचतुर्थपर्यायमन्त्रौ—

सोमं॑ ते रु॒द्रव॑न्तमृच्छन्तु । ये मा॑ऽघा॒यवो॒ दक्षि॑णाया दि॒शो॑ऽभि॒दासा॑न्[1] ॥ ३ ॥

सोम॑म् । ते । रु॒द्रऽव॑न्तम् । ऋ॒च्छ॒न्तु॒ । ये । मा॒ । अ॒घ॒ऽयव॑: । दक्षि॑णायाः । दि॒शः । अ॒भि॒ऽदासा॑न्[2] ॥ ३ ॥

वरु॑णं त आ॒दि॒त्यव॑न्तमृच्छन्तु । ये मा॑ऽघा॒यव॑ ए॒तस्या॑ दि॒शो॑ऽभि॒दासा॑न्[1] ॥४॥

वरु॑णम् । ते । आ॒दि॒त्यऽव॑न्तम् । ऋ॒च्छ॒न्तु॒ । ये । मा॒ । अ॒घ॒ऽयव॑: । ए॒तस्याः॑ । दि॒शः । अ॒भि॒ऽदासा॑न्[2] ॥ ४ ॥

ते हिंसकाः शत्रवो रुद्रवन्तम् रुद्रैर्देवैस्तद्वन्तं सोमं देवम् ऋच्छन्तु नाशार्थं गच्छन्तु [३] । आदित्यवन्तम् आदित्यैरदितिपुत्रैः आदित्यसंज्ञकैर्वा देवैस्तद्वन्तं वरुणम् अरिष्टनिवारकं देवं ते शातयितारो रिपवः ऋच्छन्तु । एतस्या दक्षिणाया दिशः । शिष्टं पूर्ववत् [४] ।

पञ्चमषष्ठमन्त्रपाठस्तु[3]—

सूर्यं॑ ते द्यावापृथि॒वीव॑न्तमृच्छन्तु । ये मा॑ऽघा॒यव॑: प्र॒तीच्या॑: दि॒शो॑ऽभि॒दासा॑न्[1] ॥५॥

सूर्य॑म् । ते । द्यावा॑पृथि॒वीऽव॑न्तम् । ऋ॒च्छ॒न्तु॒ । ये । मा॒ । अ॒घ॒ऽयव॑: । प्र॒तीच्याः॑ । दि॒शः । अ॒भि॒ऽदासा॑न्[2] ॥ ५ ॥

अ॒पस्त ओष॑धीमतीर्ऋच्छन्तु । ये मा॑ऽघा॒यव॑ ए॒तस्या॑ दि॒शो॑ऽभि॒दासा॑न्[1] ॥६॥

अ॒पः । ते । ओष॑धीऽमतीः । ऋ॒च्छ॒न्तु॒ । ये । मा॒ । अ॒घ॒ऽयव॑: । ए॒तस्याः॑ । दि॒शः । अ॒भि॒ऽदासा॑न्[2] ॥ ६ ॥

द्यावापृथिवीवन्तम् द्यावापृथिव्यौ यस्य प्रकाश्यत्वेन स्त इति मतुप् । 'छन्दसीरः' ( पा ८,२,१५ ) इति तस्य वत्वम् [५] । ओषधीमतीरपः उदकानि कर्म । एतस्याः प्रतीच्या दिशः । शिष्टं निगदसिद्धम् [६] ।

---

१. वैद्. मैपा.　　२. पृ १८५४ टि ३ द्र.　　३. षष्ठपाठस्तु S'.

सप्तमाष्टमपर्यायमन्त्रपाठस्तु—

विश्वकर्माणं ते सप्तऋषिवन्तमृच्छन्तु ।
ये माऽघायव उदीच्या दिशोऽभिदासान्[1] ॥ ७ ॥

विश्वऽकर्माणम् । ते । सप्तऋषिऽवन्तम्[2] । ऋच्छन्तु ।
ये । मा । अघऽयवः । उदीच्याः । दिशः । अभिऽदासान्[1] ॥ ७ ॥

इन्द्रं ते मरुत्वन्तमृच्छन्तु । ये माऽघायव एतस्या दिशोऽभिदासान्[1] ॥ ८ ॥

इन्द्रम् । ते । मरुत्ऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । एतस्याः । दिशः ।
अभिऽदासान्[1] ॥ ८ ॥

सप्तऋषिवन्तम् सप्तसंख्याका ऋषयः स्तुज्यत्वेन यस्य सन्ति इति मतुप् । 'ऋत्यकः' ( पा ६,१,१२८ ) इति प्रकृतिभावः । 'छन्दसीरः' ( पा ८,२,१५ ) इति मतुपो वत्वम् [७] । मरुत्वन्तम् मरुद्भिस्तद्वन्तम् इन्द्रम् । एतस्या उदीच्या दिशः । शिष्टं व्याख्यातम् [८] ।

नवमदशमपर्यायौ एवमाम्नायेते—

प्रजापतिं ते प्रजननवन्तमृच्छन्तु । ये माऽघायवो ध्रुवाया दिशोऽभिदासान्[1] ॥९॥

प्रजाऽपतिम् । ते[3] । प्रजननऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । ध्रुवायाः ।
दिशः । अभिऽदासान्[1] ॥ ९ ॥

बृहस्पतिं ते विश्वदेववन्तमृच्छन्तु । ये माऽघायव ऊर्ध्वाया दिशोऽभिदासान्[1] ।१०।

बृहस्पतिम् । ते । विश्वदेवऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । ऊर्ध्वायाः ।
दिशः । अभिऽदासान्[1] ॥ १० ॥

प्रजननं नाम सर्वजगदुत्पादनसाधनं वस्तु । यद्वा प्रजननम् इति पुंव्यञ्जनम् उच्यते । स्त्रीपुंससृष्टेस्तन्निमित्तकत्वात् [९] । विश्वदेववन्तम् विश्वैर्देवैस्तद्वन्तम् । 'मादुपधायाः°' ( पा ८,२,९ ) इति मतुपो वत्वम् । बृहस्पतिम् बृहतां महतां देवानां पतिं देवम् । शिष्टम् अविशिष्टम्[4] [१०] ।

इति द्वितीयेऽनुवाके नवमं सूक्तम् ।

'मित्रः पृथिव्योदक्रामत्' इति सूक्तेन पुरोहितो रात्रौ राजानं शय्यागृहं प्रवेशयेत् । परिशिष्टं तु पूर्वमेव उदाहृतम् । राज्ञो नूतननगरप्रवेशनकर्मणि च विनियोगः ।

---

१. पृ १८५४ टि ३ द्र. २. सप्तऋषि° P,P². ३. ते P,P². ४. अवशि° S'.

मित्रः पृ॒थि॒व्योद॑क्राम॒त् तां पुरं॒ प्र ण॑यामि वः ।
तामा वि॑शत॒ तां प्र वि॑शत॒ सा व॒ः शर्म॑ च॒ वर्म॑ च यच्छतु ॥ १ ॥

मि॒त्रः । पृ॒थि॒व्या । उत् । अ॒क्रा॒म॒त् । ताम् । पुर॑म् । प्र । न॒या॒मि॒ । व॒ः । ताम् । आ । वि॒श॒त॒ । ताम् । प्र । वि॒श॒त॒ । सा । व॒ः । शर्म॑ । च॒ । वर्म॑ । च॒ । य॒च्छ॒तु॒ ॥ १ ॥

मित्रः । मित्रशब्देन अग्निरुच्यते । पृथिव्याः[1] साहचर्यात् पृथिवीस्थानत्वाद् अग्नेः 'सूर्यो दिवोदक्रामत्' (३) इति सूर्यस्य पृथग्वक्ष्यमाणत्वाच्च । मित्रः अग्निः मीयमानत्वाद्[2] आहवनीयादिस्वरूपेण प्रणीयमानत्वात् । डुमिञ् प्रक्षेपणे । अस्माद् औणादिकः क्त्रन्प्रत्ययः[3] । कित्त्वाद् गुणाभावः । पृथिव्या स्वनिवासस्थानभूतेन पृथिवीलोकेन सह उदक्रामत् उत्क्रान्तवान् । यां पुरं रक्षितुम् इति शेषः । तां पृथिवीलोकाभिमानिना अग्निना रक्षितां[4] पुरम् शय्यागृहलक्षणां प्रसिद्धां नगरीं वा वः युष्मान् राज्ञः । पूजायां बहुवचनम् । पुत्रमित्रामात्यावरोधस्त्रीविवक्षया वा बहुवचनम् । पुत्रयोषित्सहितान् युष्मान् प्र णयामि प्रकर्षेण नयामि प्रापयामि । ततः तां पुरम् आ विशत अभिमुखं प्रविशत प्रवेशोन्मुखा भवत । अनन्तरं तां पुरं प्र विशत अन्तःप्रविष्टा भवत । शय्यास्थाने स्वीयसौधे वा निविष्टा भवतेति वा । सा पूः शय्यागृहलक्षणा पुरी वा वः युष्मभ्यं प्रविष्टेभ्यः शर्म सुखं वर्म कवचं पुराभेद्यत्वलक्षणम् आवरणं वा यच्छतु प्रयच्छतु । दाणो यच्छादेशः । परस्परसमुच्चयार्थौ चकारौ । एवम् उत्तरे दश पर्यायमन्त्रा व्याख्येयाः । विशेषस्तु तत्रतत्र वक्ष्यते[5] । यथा अग्निः स्वाधिष्ठिते पृथिवीलोके सर्वोत्तरो वर्तते एवं त्वमपि इदं नगरम् अधिष्ठाय सर्वातिशायी वर्तस्वेति विवक्षितम् । यथा पृथिव्या सह अग्निरुत्क्रान्तवान् इत्युक्तः एवम् उत्तरयोर्वायुसूर्यमन्त्रयोस्तात्पर्यार्थः[6] उन्नेयः[7] ।

वा॒युर॒न्तरि॑क्षे॒णोद॑क्राम॒त् तां पुरं॒ प्र ण॑यामि वः ।
तामा वि॑शत॒ तां प्र वि॑शत॒ सा व॒ः शर्म॑ च॒ वर्म॑ च यच्छतु ॥ २ ॥

वा॒युः । अ॒न्तरि॑क्षेण । उत् । अ॒क्रा॒म॒त् । ताम् । पुर॑म् । प्र । न॒या॒मि॒ । व॒ः । ताम् । आ । वि॒श॒त॒ । ताम् । प्र । वि॒श॒त॒ । सा । व॒ः । शर्म॑ । च॒ । वर्म॑ । च॒ । य॒च्छ॒तु॒ ॥ २ ॥

वायुः वातो मातरिश्वा अन्तरिक्षेण अन्तरा क्षान्तेन स्वीयेन मध्यमलोकेन सह उदक्रामत् । यां पुरं रक्षितुम् इति शेषः । तां पुरम् इत्यादि पूर्ववद् व्याख्येयम् ।

---

१. पृथिव्या S'. २. मीयत्वात् S'. ३. क्त्रन्प्र. स्वरः ? क्त्रुः प्र. इ. (उणाउ ४,१६४) ४. रक्षितां तां S'. ५. वक्ष्यते S'. ६. °स्तात्पर्यो S'. ७. उन्नेयाः S'.

सप्तमाष्टमपर्यायमन्त्रपाठस्तु—

विश्वकर्माणं ते सप्तऋषिवन्तमृच्छन्तु ।
ये माऽघायव उदीच्या दिशोऽभिदासान्[1] ॥ ७ ॥

विश्वऽकर्माणम् । ते । सप्तऋषिऽवन्तम्[2] । ऋच्छन्तु ।
ये । मा । अघऽयवः । उदीच्याः । दिशः । अभिऽदासान्[1] ॥ ७ ॥

इन्द्रं ते मरुत्वन्तमृच्छन्तु । ये माऽघायव एतस्या दिशोऽभिदासान्[1] ॥ ८ ॥

इन्द्रम् । ते । मरुत्ऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । एतस्याः । दिशः । अभिऽदासान्[1] ॥ ८ ॥

सप्तऋषिवन्तम् सप्तसंख्याका ऋषयः सृज्यत्वेन यस्य सन्ति इति मतुप् । 'ऋत्यकः' ( पा ६,१,१२८ ) इति प्रकृतिभावः । 'छन्दसीरः' ( पा ८,२,१५ ) इति मतुपो वत्वम् [७] । मरुत्वन्तम् मरुद्भिस्तद्वन्तम् इन्द्रम् । एतस्या उदीच्या दिशः । शिष्टं व्याख्यातम् [८] ।

नवमदशमपर्यायौ एवमाम्नायेते—

प्रजापतिं ते प्रजननवन्तमृच्छन्तु । ये माऽघायवो ध्रुवाया दिशोऽभिदासान्[1] ॥९॥

प्रजाऽपतिम् । ते[3] । प्रजननऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । ध्रुवायाः । दिशः । अभिऽदासान्[1] ॥ ९ ॥

बृहस्पतिं ते विश्वदेववन्तमृच्छन्तु । ये माऽघायव ऊर्ध्वाया दिशोऽभिदासान्[1] ।१०।

बृहस्पतिम् । ते । विश्वदेवऽवन्तम् । ऋच्छन्तु । ये । मा । अघऽयवः । ऊर्ध्वायाः । दिशः । अभिऽदासान्[1] ॥ १० ॥

प्रजननं नाम सर्वजगदुत्पादनसाधनं वस्तु । यद्वा प्रजननम् इति पुंव्यञ्जनम् उच्यते । स्त्रीपुंससृष्टेस्तन्निमित्तकत्वात् [९] । विश्वदेववन्तम् विश्वैर्देवैस्तद्वन्तम् । 'मादुपधायाः'' ( पा ८,२,९ ) इति मतुपो वत्वम् । बृहस्पतिम् बृहतां महतां देवानां पतिं देवम् । शिष्टम् अविशिष्टम्[4] [१०] ।

इति द्वितीयेऽनुवाके नवमं सूक्तम् ।

'मित्रः पृथिव्योदक्रामत्' इति सूक्तेन पुरोहितो रात्रौ राजानं शय्यागृहं प्रवेशयेत् । परिशिष्टं तु पूर्वमेव उदाहृतम् । राज्ञो नूतननगरप्रवेशनकर्मणि च विनियोगः ।

---

१. पृ १८५४ टि ३ द्र. २. सप्तऋषि° P,P². ३. तेP,P². ४. अवशि° S'.

मित्रः पृथिव्योदक्रामत् तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥ १ ॥

मित्रः । पृथिव्या । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ १ ॥

मित्रः । मित्रशब्देन अग्निरुच्यते । पृथिव्याः[1] साहचर्यात् पृथिवीस्थानत्वाद् अग्नेः 'सूर्यो दिवोदक्रामत्' (३) इति सूर्यस्य पृथग्वक्ष्यमाणत्वाच्च । मित्रः अग्निः मीयमानत्वाद्[2] आहवनीयादिस्वरूपेण प्रणीयमानत्वात् । डुमिञ् प्रक्षेपणे । अस्माद् औणादिकः क्त्रन्प्रत्ययः[3] । कित्त्वाद् गुणाभावः । पृथिव्या स्वनिवासस्थानभूतेन पृथिवीलोकेन सह उदक्रामत् उत्क्रान्तवान् । यां पुरं रक्षितुम् इति शेषः । तां पृथिवीलोकाभिमानिना अग्निना रक्षितां[4] पुरम् शय्यागृहलक्षणां प्रसिद्धां नगरीं वा वः युष्मान् राज्ञः । पूजायां बहुवचनम् । पुत्रमित्रामात्यावरोधस्त्रीविवक्षया वा बहुवचनम् । पुत्रयोषित्सहितान् युष्मान् प्र णयामि प्रकर्षेण नयामि प्रापयामि । ततः तां पुरम् आ विशत अभिमुखं प्रविशत प्रवेशोन्मुखा भवत । अनन्तरं तां पुरं प्र विशत अन्तःप्रविष्टा भवत । शय्यास्थाने स्वीयसौधे वा निविष्टा भवतेति वा । सा पूः शय्यागृहलक्षणा पुरी वा वः युष्मभ्यं प्रविष्टेभ्यः शर्म सुखं वर्म कवचं पुराभेद्यत्वलक्षणम् आवरणं वा यच्छतु प्रयच्छतु । दाणो यच्छादेशः । परस्परसमुच्चयार्थौ चकारौ । एवम् उत्तरे दश पर्यायमन्त्रा व्याख्येयाः । विशेषस्तु तत्रतत्र वक्ष्यते[5] । यथा अग्निः स्वाधिष्ठिते पृथिवीलोके सर्वोत्तरो वर्तते एवं त्वमपि इदं नगरम् अधिष्ठाय सर्वातिशायी वर्तस्वेति विवक्षितम् । यथा पृथिव्या सह अग्निरुत्क्रान्तवान् इत्युक्तः एवम् उत्तरयोर्वायुसूर्यमन्त्रयोस्तात्पर्यार्थः[6] उन्नेयः[7] ।

वायुरन्तरिक्षेणोदक्रामत् तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥ २ ॥

वायुः । अन्तरिक्षेण । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ २ ॥

वायुः वातो मातरिश्वा अन्तरिक्षेण अन्तरा क्षान्तेन स्वीयेन मध्यमलोकेन सह उदक्रामत् । यां पुरं रक्षितुम् इति शेषः । तां पुरम् इत्यादि पूर्ववद् व्याख्येयम् ।

---

१. पृथिव्या S'. २. मीयत्वात् S'. ३. क्त्रन्प्र. स्वरः ? क्त्रः प्र. इ. ( उणाउ ४,१६४) ४. रक्षितां तां S'. ५. वक्ष्यते S'. ६. °स्तात्पर्यां S'. ७. उन्नेयाः S'.

सूर्यो दिवोदक्रामत् तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु ॥ ३ ॥

सूर्यः । दिवा । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ ।
विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ३ ॥

सूर्यः सर्वस्य प्रेरक आदित्यः दिवा स्वनिवासस्थानेन द्युलोकेन सह । उदक्रामत् इत्यादि पूर्ववत् ।

चन्द्रमा नक्षत्रैरुदक्रामत् तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु ॥ ४ ॥

चन्द्रमाः । नक्षत्रैः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ ।
विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ४ ॥

चन्द्रमाः चन्द्रम् आह्लादं माति निर्मिमीत इति चन्द्रमाः सर्वस्य लोकस्य आह्लादको हिमांशुः नक्षत्रैः । न क्षीयन्त इति नक्षत्राणि तारकाः । 'नभ्राण्नपात्' (पा ६,३,७५) इत्यादिना नक्षत्रशब्दो निपातितः । स्वोपभोग्यैरश्विन्यादिनक्षत्रैः सह नक्षत्राधिपतिश्चन्द्रमाः स्वपरिवारभूतैस्तैरेव सहितो यां पुरं रक्षितुम् उत्क्रान्तवान् तां पुरम् । युष्मान् प्रापयामीत्यादि गतम् ।

सोम ओषधीभिरुदक्रामत् तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु ॥ ५ ॥

सोमः । ओषधीभिः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् ।
आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ५ ॥

सोमः ओषधीनां रसप्रदानेन पोषको देवः ओषधीभिः ओषः पाको धीयत आस्विति ओषध्यः फलपाकान्ताः । उपलक्षणम् एतत् तरुगुल्मादीनाम् । तैः स्वपोष्यैः सहितः । उदक्रामत् इत्यादि गतम् । युष्माभिः प्रविश्यमाने पुरे ओषध्यादिसमृद्धिर्भवत्वित्यर्थः ।

यज्ञो दक्षिणाभिरुदक्रामत् तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु ॥ ६ ॥

यज्ञः । दक्षिणाभिः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ ।
विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ६ ॥

यज्ञः ज्योतिष्टोमादिः प्रकृतिविकृत्यात्मकः सर्वः क्रतुः दक्षिणाभिः विहिताभिर्यथोक्ताभिर्दक्षिणाभिः सह उत्क्रान्तवान् । यां पुरं रक्षितुम् इति शेषः । अत्र बहुदक्षिणाका यज्ञाः समृद्धा भवन्त्वित्यर्थः । तां पुरम् इत्यादि गतम् ।

समुद्रो नदीभिरुदक्रामत् तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥ ७ ॥

समुद्रः । नदीभिः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ७ ॥

नदीभिः नदनशीलाभिरापगाभिः समुद्रः समुद्द्रवन्ति अस्माद् आप इति अम्बुराशिः उदक्रामत् । तां पुरम् इत्यादि गतम् । रक्षोहननार्थं[1] नदीसहितसमुद्रोत्क्रान्त्या दांपत्यधर्मविशिष्टाः प्रजा अत्र संपद्यन्ताम् इति विवक्ष्यते ।

ब्रह्म ब्रह्मचारिभिरुदक्रामत् तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥ ८ ॥

ब्रह्म । ब्रह्मचारिऽभिः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ८ ॥

ब्रह्म साङ्गो वेदः ब्रह्मचारिभिः ब्रह्मणि वेदे वेदविहिते यज्ञादिकर्मणि चरितुं वर्तितुं शीलं येषां तैः सह उदक्रामत् । अनेन श्रौतस्मार्तकर्मनिष्णाताः साङ्गवेदाध्यायिनः अनूचाना ब्राह्मणा बहवः समृध्यन्ताम् इति विवक्ष्यते[2] । तां पुरम् इत्यादि पूर्ववत् ।

इन्द्रो वीर्येणोदक्रामत् तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥ ९ ॥

इन्द्रः । वीर्येण । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ९ ॥

इन्द्रः परमैश्वर्यसंपन्नः समस्तदेवाधिपतिः वीर्येण वीरकर्मणा स्वीयेन बाहुवीर्येण सेनालक्षणेन बलेन वा सह उद् अक्रामत् । इन्द्रो यथा स्ववीर्येण सर्वान् शत्रून् जितवान् एवम् अस्मिन् पुरे वर्तमानस्त्वमपि सर्वातिशायी सर्ववैरिक्षयी[3] भूया इत्यर्थः ।

---

१. रक्षोहणार्थं S'. २. °क्ष्यते S'. ३. सर्ववैरिक्षयी S'.

देवा अमृतेनोदक्रामंस्तां[1] पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥ १०॥

देवाः । अमृतेन । उत् । अक्रामन्[2] । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ १० ॥

देवाः द्योतनशीला अमरा अमृतेन अमरणसाधनेन सुधारसेन सह उदक्रामन्[3] । यां पुरं रक्षितुम् इति शेषः । तां पुरम् इत्यादि गतम् । अत्रत्याः प्रजा निर्भीका[4] दीर्घायुषश्च भवन्तु इत्यर्थं विवक्षितुं रक्षणार्थम् अमृतेन सह देवा उत्क्रान्तवन्त इत्युक्तम् ।

प्रजापतिः प्रजाभिरुदक्रामत् तां पुरं प्र णयामि वः ।
तामा विंशत तां प्र विंशत सा वः शर्म च वर्म च यच्छतु ॥ ११ ॥

प्रजाऽपतिः । प्रऽजाभिः । उत् । अक्रामत् । ताम् । पुरम् । प्र । नयामि । वः । ताम् । आ । विशत । ताम् । प्र । विशत । सा । वः । शर्म । च । वर्म । च । यच्छतु ॥ ११ ॥

प्रजापतिः प्रजानां पतिर्देवः प्रजाभिः प्रकर्षेण बहुत्वेन[5] जायमानाभिर्मनुष्यादिकाभिः सह उदक्रामत् । तां पुरम् इत्यादि पूर्ववद् व्याख्येयम् । उत्तरोत्तरप्रमविष्णुप्रजाभूयिष्ठत्वम्[6] अत्र नगरे भूयाद् इत्याशासितुम् इदं वचनम् ।

इति द्वितीयेऽनुवाके दशमं सूक्तम् ।

'अप न्यधुः पौरुषेयम्' इति सूक्तेन युद्धोद्यतं राजानं कवचेन पुरोहितः संनह्येत ।

अप न्यधुः[7] पौरुषेयं वधं यमिन्द्राग्नी धाता संविता बृहस्पतिः ।
सोमो राजा वरुणो अश्विना यमः पूषाऽस्मान् परि पातु मृत्योः ॥ १ ॥

अप । न्यधुः । पौरुषेयम् । वधम् । यम् । इन्द्राग्नी इति । धाता । सविता । बृहस्पतिः । सोमः । राजा । वरुणः । अश्विना । यमः । पूषा । अस्मान् । परि । पातु । मृत्योः ॥ १ ॥

पौरुषेयम् पुरुषैः शातयितृभिररिभिः कृतम् । 'पुरुषाद् वधविकारसमूहतेनकृतेष्विति वक्तव्यम्' ( पावा ५,१,१० ) इति ढञ् । 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इति

---

१. अमृतेणोद° A,B[h],C,K,D,S[m],V,Dc. २. अक्रामत् P[a]; अक्रमत् P; अक्रामन् > अक्रामत् J. ३. °क्रामत् S'. ४. निराभेका S'. ५. बहुभिः सत्वैन S'. ६. °प्रजाःभू° S'. ७. न्यधुः RW. वै १,१०८,१.

आद्युदात्तत्वम् । यं[1] वधम् वधसाधनम् । 'हनश्च वधः' (पा ३,३,७६) इति हन्तेरप् प्रत्ययः । वधश्चादेशः अन्तोदात्तः । अप न्यधुः अपाञ्चम् अपगूढं न्यधुः निहितवन्तः । वलगलक्षणं शस्त्रास्त्रादिरूपं वा हननसाधनं मायया परेषाम् अप्रकाशं हननसाधनम् अस्मान् हिंसितुम् अस्मदभिमुखं प्रेरितवन्त इत्यर्थः । यत्तदो-र्नित्यसंबन्धाद् उत्तरवाक्ये तच्छब्दाध्याहारः । तस्माद् अप्रकाशात् शत्रुभिः प्रहिताद् मृत्योः मृत्युसाधनाद् मृत्युरूपाद् वा वधाद् अस्मान् कवचधारिणः अस्मदीयान् राज्ञो वा इन्द्राग्न्यादयो देवताः परि पातु । प्रत्येकविवक्षया एकव-वचनम् । परितः सर्वतः पान्तु रक्षन्तु । 'भीत्रार्थानाम्०' (पा १,४,२५) इति अपादानत्वाद् मृत्योरित्यत्र पञ्चमी ।

यानि चकार भुवनस्य यस्पतिः प्रजापतिर्मातरिश्वा प्रजाभ्यः ।
प्रदिशो यानि वसते[2] दिशश्च तानि मे वर्माणि बहुलानि सन्तु ॥ २ ॥

यानि । चकार । भुवनस्य । यः । पतिः । प्रजाऽपतिः । मातरिश्वा । प्रऽजाभ्यः ।
प्रऽदिशः । यानि । वसते[3] । दिशः । च । तानि । मे । वर्माणि । बहुलानि । सन्तु ॥२॥

भुवनस्य भूतजातस्य पतिः पालको यः प्रजापतिः अस्ति स यानि वर्माणि कवचानि चकार । किमर्थम् । प्रजाभ्यः प्रकर्षेण जायमानाभ्यो मनुष्यपश्वादिभ्यः । तादर्थ्ये चतुर्थी । तद्रक्षणार्थं मातरिश्वा मातरि अन्तरिक्षे श्वसितीति मातरिश्वा वायुः सूत्रात्मा । प्रजापतेर्विशेषणम् एतत् । तथा प्रदिशः प्रकृष्टाः प्राच्यादिमहादिशः दिशः अवान्तरदिशः च यानि वर्माणि वसते आच्छादयन्ति स्वरक्षणार्थम्[4] । वस आच्छादने । आदादिकोऽनुदात्तेत् । तानि प्रजापतिना प्रजारक्षणार्थं निर्मितानि दिग्भिश्च स्वरक्षणार्थं वसितानि वर्माणि कवचानि मे मम युयुत्सोः बहुलानि प्रभूतानि सन्तु भवन्तु । यदायदाऽपेक्षते तदातदा लाभाय बहुलानीत्युक्तम् । अथवा स्वस्य परिवाराणां च अपेक्षया बहुलानीति । यस्य यद् अपेक्षितं तस्य तद् भवत्वित्यर्थः ।

'यत् ते[5] तनूष्वनह्यन्त 'देवा द्युराजयो देहिनः'[6] ।
इन्द्रो यच्चक्रे वर्म तदस्मान् पातु विश्वतः[7] ॥ ३ ॥

यत् । ते[8] । तनूषु । अनह्यन्त । 'देवाः । द्युऽराजयः । देहिनः'[9] ।
इन्द्रः । यत् । चक्रे । वर्म । तत् । अस्मान् । पातु । विश्वतः[7] ॥ ३ ॥

---

१. तं यं शंपा. २. वसते RW. पै १,१०८,२; वैप १,२७७६ अपि द्र. ३. वसते P[2],J. ४. स्वरक्षणार्थम् S'. ५. यत्ते A,B[h],C,D,K[m],S[m],R,V,Cs,Dc. ६. पाठः ?; द्र. सा.; वैतु. मूको. देवाधिराजयो धेहिन.; RW. देवा राज्याय योधिनः; PW.W. देवा आधिराज्याय योधिनः; वैप १६७४ f अपि द्र. ७. सर्वतः Cs, P,P[2],J. ८. ते P,J. ९. द्र. सा.; वैतु. P,P[2],J देवा । अधिऽराज । यः । धेहि । नः.

द्युराजयः दिवि द्युलोके राजमाना देहिनः शरीरिणः । 'कवचधारणं देहस्यैवेति[1] देहिनो देवा इत्युक्तम् । ते प्रसिद्धा देवाः तनूषु स्वशरीरेषु यद् वर्म अनह्यन्त धृतवन्तः । णह बन्धने । दैवादिकः । कर्त्रभिप्राये क्रियाफले आत्मनेपदम् । असुरयुद्धे स्वदेहरक्षणार्थं प्रतिमुक्तवन्तः । इन्द्रः च यद् वर्म कवचं[2] चक्रे शत्रुविजयार्थम् । करोतेः पूर्ववद् आत्मनेपदम् । तत् कवचं देवैरिन्द्रेण च स्वशरीरे धारितम् अस्मान् युद्धोद्यतान् विश्वतः सर्वतः परकृतप्रहारेभ्यः पातु रक्षतु ।

वर्म मे द्यावापृथिवी वर्माहर्वर्म[3] सूर्यः ।
वर्म मे विश्वे देवाः क्रन्[4] मा मा प्रापत् प्रतीचिका[5] ॥ ४ ॥

वर्म । मे । द्यावापृथिवी इति । वर्म । अहः । वर्म । सूर्यः ।
वर्म । मे । विश्वे । देवाः । क्रन्[6] । मा । मा । प्र । आपत् । प्रतीचिका[5] ॥ ४ ॥

द्यावापृथिवी द्यावापृथिव्यौ मे मम वर्म कवचं कुरुताम् । अग्निः[7] च वर्म करोतु । सूर्यः च विश्वे सर्वे देवाः इन्द्रादयश्च मे मम युयुत्सोर्मदीयस्य वा राज्ञः वर्म कवचं क्रन् कुर्वन्तु । करोतेश्छान्दसे लुङि 'मन्त्रे घस[8]' ( पा २,४,८० ) इति च्लेर्लुक् । झः सार्वधातुकस्य ङित्त्वाद् गुणप्रतिषेधे यण् आदेशः । 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा ६,४,७५ ) इति अडभावः । किं च प्रतीचिका प्रत्यगञ्चना प्रतीची । अज्ञातार्थे कप्रत्ययः । 'केऽणः' ( पा ७,४,१३ ) इति ह्रस्वत्वम् । शत्रुसेना अस्मत्प्रतिकूलाञ्चना सती मा मां कवचधारिणं युद्धोद्यतं मां[9] मैव प्रापत् प्राप्नोतु । आप्नोतेर्माङि लुङि लृदित्त्वाद् अङ् । कवचधारिणो ममाग्रतः शत्रुसेना प्रकाशैव आयातु । देवानुगृहीतकवचधारणेन हतामपि तां परसेनां हन्तुं शक्नोमीत्यर्थः ।

इति एकादशं सूक्तम् ।

इति एकोनविंशे काण्डे द्वितीयोनुवाकः ।

तृतीयेऽनुवाके षट् सूक्तानि । तत्र 'गायत्र्युष्णिक्' इति प्रथमसूक्तस्य 'गायत्रीं[10] छन्दोब्रह्मवर्चसकामस्य प्रयुञ्जीत' ( शांक १७,२ ) इति विहितायां गायत्र्याख्यायां[11] महाशान्तौ विनियोगः । उक्तं हि शान्तिकल्पे— 'छन्दोगणः ( अ १९,२१ ) गायत्र्याम् [10]समासः† ( अ १९,२२,२३ ) आङ्गिरस्याम्[10]' ( शांक १८,१ ) इति ।

---

१. °धारिणं देहस्ये° S'. २. चर्म S'. ३. वर्माग्निर्वर्म S, मा. आओ १,२,१. ४. क्रन् A,B^h,C,D,K,K^m,R,W M.,P,P^a,J. ५. प्रतीचिका B^a,D,S^m,W M.; प्रतिचिका > प्रतीचिका Dc. ६. प्रतीचिका J. ७. वैतु. मंपा. ८. गायत्री S'. ९. °ख्याख्यां S'. १०. समासमाङ्गि° S'. † 'समासस्वा' ( अ २,६ ) इति Bol.

तत्सूक्तपाठस्तु—

'गायत्र्यु१ष्णिगनुष्टुब् बृहती पङ्क्तिस्त्रिष्टुब्' जगत्यै' ॥ १ ॥

गायत्री । उष्णिक् । अनुऽस्तुप् । बृहती । पङ्क्तिः । त्रिऽस्तुप् । जगत्यै' ॥ १ ॥

"सप्तसु च्छन्दःसूक्तः[4] कल्पयित्वा गायत्र्यादि 'गायत्र्यै स्वाहा' इत्येवं यथाछन्दः" (शांक १८,१) इति[5] तत्रैव शान्तिकल्पे मन्त्राणाम् ऊहनप्रकारस्य दर्शितत्वात् 'गायत्र्यै स्वाहा', 'उष्णिहे स्वाहा', 'अनुष्टुभे स्वाहा', 'पङ्क्त्यै स्वाहा', 'त्रिष्टुभे स्वाहा', 'जगत्यै स्वाहा', इत्येवम् अस्मिन् सूक्ते सप्त मन्त्रा भवन्ति । सर्वे मन्त्राः स्पष्टार्थाः ।

इति तृतीयेऽनुवाके प्रथमं सूक्तम् ।

'आङ्गिरसानामाद्यैः' इत्यादिसूक्तद्वयस्य 'आङ्गिरसी संपत्कामस्य अभिचरतोऽभिचर्यमाणस्य च' (शांक १७,२) इति विहितायाम् आङ्गिरस्याख्यायां महाशान्तौ विनियोगः । उक्तं हि शान्तिकल्पे— "समासः[6] (१९,२२;२३) आङ्गिरस्याम् । 'इन्द्र जुषस्व' (अ २,५) इत्यैन्द्रयाम्[7]" (शांक १८,३;४) इति । अत्र समासशब्देन एतत् सूक्तद्वयम् उच्यते ।

तत्र 'आङ्गिरसानामाद्यैः' इति सूक्तम् एवमाम्नायते—

आङ्गिरसानामाद्यैः पञ्चानुवाकैः स्वाहा ॥ १ ॥

आङ्गिरसानाम् । आद्यैः । पञ्च । अनुऽवाकैः । स्वाहा ॥ १ ॥

षष्ठाय स्वाहा ॥ २ ॥

षष्ठाय । स्वाहा ॥ २ ॥

सप्तमाष्टमाभ्यां स्वाहा ॥ ३ ॥

सप्तमऽअष्टमाभ्याम् । स्वाहा ॥ ३ ॥

नीलनखेभ्यः स्वाहा ॥ ४ ॥

नीलऽनखेभ्यः । स्वाहा ॥ ४ ॥

हरितेभ्यः स्वाहा ॥ ५ ॥

हरितेभ्यः । स्वाहा ॥ ५ ॥

क्षुद्रेभ्यः स्वाहा ॥ ६ ॥

क्षुद्रेभ्यः । स्वाहा ॥ ६ ॥

पर्यायिकेभ्यः स्वाहा ॥ ७ ॥

पर्यायिकेभ्यः । स्वाहा ॥ ७ ॥

प्रथमेभ्यः शङ्खेभ्यः स्वाहा ॥ ८ ॥

प्रथमेभ्यः । शङ्खेभ्यः । स्वाहा ॥ ८ ॥

द्वितीयेभ्यः[8] शङ्खेभ्यः स्वाहा ॥ ९ ॥

द्वितीयेभ्यः[8] । शङ्खेभ्यः । स्वाहा ॥ ९ ॥

---

१. गायत्र्यु१° C; गायत्र्यू१° R,Cs; गायत्र्यु° K,K^m,B^s,D.V. २. °पङ्क्तिस्त्रिष्टुब्° S, सा. ३. जगत्यै, जगत्यै WM.; जगती P^s,WM.WI.; °जगत्यै RW. ४. छन्दस्सूक्तः S'. ५. इव S'. ६. 'समास्त्वा' (अ २,६) इति Bol. ७. इत्यैन्द्र्यायाम् S'. ८. द्वि° RW.; वैद्. मूको. शंपा. द्वितीयेभ्यः.

तृतीयेभ्यः[१] शङ्खेभ्यः स्वाहा ॥१०॥ उपोत्तमेभ्यः स्वाहा ॥ ११ ॥

तृतीयेभ्यः[१] । शङ्खेभ्यः । स्वाहा ॥१०॥ उपऽउत्तमेभ्यः । स्वाहा ॥ ११ ॥

उत्तमेभ्यः स्वाहा ॥१२॥ उत्तरेभ्यः[२] स्वाहा ॥ १३ ॥

उत्ऽतमेभ्यः । स्वाहा ॥१२॥ उत्ऽतरेभ्यः । स्वाहा ॥ १३ ॥

ऋषिभ्यः स्वाहा ॥ १४॥ शिखिभ्यः[४] स्वाहा ॥ १५ ॥

ऋषिऽभ्यः[३] । स्वाहा ॥१४॥ शिखिऽभ्यः[५] । स्वाहा ॥ १५ ॥

गणेभ्यः स्वाहा ॥ १६ ॥ महागणेभ्यः स्वाहा ॥ १७ ॥

गणेभ्यः । स्वाहा ॥ १६॥ महाऽगणेभ्यः । स्वाहा ॥ १७ ॥

सर्वेभ्योऽङ्गिरोभ्यो विदगणेभ्यः स्वाहा ॥ १८ ॥

सर्वेभ्यः । अङ्गिरःऽभ्यः । विदऽगणेभ्यः । स्वाहा ॥ १८ ॥

पृथक्सहस्राभ्यां स्वाहा ॥ १९ ॥ ब्रह्मणे[६] स्वाहा ॥ २० ॥

पृथक्ऽसहस्राभ्याम् । स्वाहा । १९॥ ब्रह्मणे । स्वाहा ॥ २० ॥

ब्रह्मज्येष्ठा[७] संभृता वीर्याणि ब्रह्माग्रे ज्येष्ठं दिवमा ततान ।

भूतानां ब्रह्मा प्रथमोत[८] जज्ञे[९] तेनार्हति ब्रह्मणा[१०] स्पर्धितुं कः ॥ २१ ॥

ब्रह्मऽज्येष्ठा[११] । समऽभृता । वीर्याणि । ब्रह्म । अग्रे । ज्येष्ठम्[१२] । दिवम् । आ । ततान । भूतानाम् । ब्रह्मा । प्रथमः[१३] । उत । जज्ञे[१४] । तेन । अर्हति । ब्रह्मणा । [१५]स्पर्धितुम् । कः[१५] ॥

अत्र विंशतिकाण्डात्मिकायाम् अस्यां शाखायां विद्यमानानुवाकसूक्तगण-विशेषादिसंज्ञारूपैः शब्दैः अनुवाकादिद्रष्टार एतन्नामान ऋषयः प्रतिपाद्यन्ते। नीलनखादिसूक्तविशेषाणां प्रसिद्धत्वात् तानि विशेषतो न प्रदर्शितानि। 'ब्रह्मणे स्वाहा' इति ब्रह्मशब्देन विंशतिकाण्डात्मकवेदवाचकेन तस्य द्रष्टा ब्रह्माख्य ऋषिः प्रतिपाद्यते। अन्यत् सर्वं निगदव्याख्यातम्। अन्त्ययर्चा पूर्वमन्त्रप्रतिपादि-

---

१. तु. D[२],L,RW.; वैतु. अन्ये मूको. शंपा. तृतीयेभ्यः. २. उत्तरेभ्यः RW. ३. ऋषिभ्यः D[२],L. ४. शिषिभ्यः A,B[b],C,S[m]; शिषि° > शिखि° Dc. ५. शिषिऽभ्यः J. ६. ब्रह्मणे RW. ७. °ज्येष्ठा B[b],C,D,R,Cs. ८. प्रथमो ह RW. ९. तु. सात[२]; वैतु. शंपा. जज्ञे १०. ब्रह्मणा RW. ११. ब्रह्म । ज्येष्ठा P,J; ब्रह्म । ज्येष्ठा P[२]. १२. ज्येष्ठम् P. १३. प्रथमा P,P[२],J. १४. जज्ञे P. १५. स्पर्धि । तुकः P,P[२],J.

तस्य ब्रह्मणः सर्वाभिभावकत्वं प्रतिपाद्यते । वीर्याणि वीरकर्माणि ब्रह्मज्येष्ठा ब्रह्मज्येष्ठानि ब्रह्मा पूर्वोक्तो ज्येष्ठः प्रशस्यतमो येषां तानि । यद्वा ज्येष्ठेन[1] ब्रह्मणा[1] । एकत्र शेर्लुक् अपरत्र तृतीयाया इनादेशाभावः । संभृता संभृतानि सर्वस्माद् अयमेव वीर्यवान् इत्यर्थः । अग्रे सृष्ट्यादौ ज्येष्ठं ब्रह्म दिवम् द्युलोकम् आ ततान विस्तारितवान् (?) । तथा ब्रह्मा भूतानां सृज्यमानानां प्रथमः पूर्वभावी जज्ञे उत्पन्नः । तेन कारणेन ब्रह्मणा स्पर्धितुम् स्पर्धां कर्तुं कः अन्यो देवो मनुष्यो वा अर्हति समर्थो भवति । अधिकतरवीर्यवत्त्वात् सर्वोत्कृष्टस्थाननिवासित्वात् सर्वेषाम् आदिभूतत्वाच्च ब्रह्मणः समानो नास्तीत्यर्थः ।

इति तृतीयेऽनुवाके द्वितीयं सूक्तम् ।

'आथर्वणानां चतुर्ऋचेभ्यः' इति सूक्तस्य समाससंज्ञकस्य आङ्गिरस्यां महाशान्तौ विनियोगः पूर्वसूक्तेन सह उक्तः । सूत्रं तु तत्रैवोदाहृतम् ।

तत् सूक्तम् एवम् आम्नायते—

आथर्वणानां चतुर्ऋचेभ्यः स्वाहा ॥ १ ॥

आथर्वणानाम् । चतुःऽऋचेभ्यः । स्वाहा ॥ १ ॥

पञ्चर्चेभ्यः स्वाहा ॥ २ ॥

पञ्चऽऋचेभ्यः । स्वाहा ॥ २ ॥

षळृचेभ्यः[2] स्वाहा ॥ ३ ॥

षट्ऽऋचेभ्यः[3] । स्वाहा ॥ ३ ॥

सप्तर्चेभ्यः स्वाहा ॥ ४ ॥

सप्तऽऋचेभ्यः । स्वाहा ॥ ४ ॥

अष्टर्चेभ्यः स्वाहा ॥ ५ ॥

अष्टऽऋचेभ्यः । स्वाहा ॥ ५ ॥

नवर्चेभ्यः स्वाहा ॥ ६ ॥

नवऽऋचेभ्यः । स्वाहा ॥ ६ ॥

दशर्चेभ्यः स्वाहा ॥ ७ ॥

दशऽऋचेभ्यः । स्वाहा ॥ ७ ॥

एकादशर्चेभ्यः स्वाहा ॥ ८ ॥

एकादशऽऋचेभ्यः । स्वाहा ॥ ८ ॥

द्वादशर्चेभ्यः स्वाहा ॥ ९ ॥

द्वादशऽऋचेभ्यः । स्वाहा ॥ ९ ॥

त्रयोदशर्चेभ्यः स्वाहा ॥ १० ॥

त्रयोदशऽऋचेभ्यः । स्वाहा ॥ १० ॥

चतुर्दशर्चेभ्यः स्वाहा ॥ ११ ॥

चतुर्दशऽऋचेभ्यः । स्वाहा ॥ ११ ॥

---

१. एवं स्वराद्यग्रहौ दुष्यतः　　२. हं. J, सा.; वैतु. A,B,C,D,K,K[m],R,S[m],Dc,Cs गोब्रा १,१,५ षड्र्चेभ्यः.　　३. षड्ऽऋ° P,P[2].

पञ्चदशर्चेभ्यः स्वाहा ॥ १२ ॥

पञ्चदशऽऋचेभ्यः । स्वाहा ॥ १२ ॥

षोडशर्चेभ्यः स्वाहा ॥ १३ ॥

षोडशऽऋचेभ्यः । स्वाहा ॥ १३ ॥

सप्तदशर्चेभ्यः स्वाहा ॥ १४ ॥

सप्तदशऽऋचेभ्यः । स्वाहा ॥ १४ ॥

अष्टादशर्चेभ्यः स्वाहा ॥ १५ ॥

अष्टादशऽऋचेभ्यः । स्वाहा ॥ १५ ॥

एकोनविंशतिः[1] स्वाहा ॥ १६ ॥

एकोनविंशतिः[1] । स्वाहा ॥ १६ ॥

विंशतिः[2] स्वाहा ॥ १७ ॥

विंशतिः[2] । स्वाहा ॥ १७ ॥

महत्काण्डाय स्वाहा ॥ १८ ॥

महत्ऽकाण्डाय । स्वाहा ॥ १८ ॥

तृचेभ्यः स्वाहा[3] ॥ १९ ॥

तृचेभ्यः । स्वाहा ॥ १९ ॥

एकर्चेभ्यः स्वाहा ॥ २० ॥

एकऽऋचेभ्यः । स्वाहा ॥ २० ॥

क्षुद्रेभ्यः स्वाहा[4] ॥ २१ ॥

क्षुद्रेभ्यः । स्वाहा ॥ २१ ॥

एकानृचेभ्यः स्वाहा[5] ॥ २२ ॥

एकऽअनृचेभ्यः । स्वाहा ॥ २२ ॥

रोहितेभ्यः[6] स्वाहा ॥ २३ ॥

रोहितेभ्यः । स्वाहा ॥ २३ ॥

सूर्याभ्यां स्वाहा ॥ २४ ॥

सूर्याभ्याम् । स्वाहा ॥ २४ ॥

व्रात्याभ्यां स्वाहा ॥ २५ ॥

व्रात्याभ्याम्[7] । स्वाहा ॥ २५ ॥

प्राजापत्याभ्यां स्वाहा ॥ २६ ॥

प्राजाऽपत्याभ्याम् । स्वाहा ॥ २६ ॥

विषासहै स्वाहा ॥ २७ ॥

विऽससहै । स्वाहा ॥ २७ ॥

मङ्गलिकेभ्यः[8] स्वाहा[9] ॥ २८ ॥

मङ्गलिकेभ्यः । स्वाहा ॥ २८ ॥

ब्रह्मणे[10] स्वाहा ॥ २९ ॥

ब्रह्मणे । स्वाहा ॥ २९ ॥

---

१. °विंशति > °विंशति Dc; °विशति Cs,S$^{m}$; °विंशति D; °विंशत्यै सा. K,V; °विंशतिः C,R; °विंशतिः P[1]; °विंशतिः P,J. २. विंशतिः A,B$^{b}$,R; विंशत्यै सा. K,V; विंशति D,Dc; विशतिः J. ३. स्वाहा। द्व्यृचेभ्यः स्वाहा S. ४. स्वाहा। पर्यायिकेभ्यः स्वाहा S. ५. एकद्व्यृचेभ्यः RW. ६. रोहितेभ्यः C,D[1],RW. ७. व्रात्याभ्याम् D[1],L. ८. माङ्गलि° S. ९. इतः परम् नक्षत्रकल्पाय स्वाहा। २९। वैतानकल्पाय स्वाहा। ३०। शान्तिकल्पाय स्वाहा। ३१। आङ्गिरसकल्पाय स्वाहा। ३२। संहिताविधये स्वाहा। ३३। इति पञ्चमन्त्रा अधिकाः I. १०. ब्रह्मणे A,C,R,RW.; तुलिब्रह्मणे I.

ब्रह्मज्येष्ठा संभृता वीर्याणि ब्रह्माग्रे ज्येष्ठं दिवमा ततान ।
भूतानां ब्रह्मा प्रथमोत[1] जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ॥ ३० ॥

ब्रह्मऽज्येष्ठा । सम्ऽभृता । वीर्याणि । ब्रह्म । अग्रे । ज्येष्ठम् । दिवम् । आ । ततान ।
भूतानाम् । ब्रह्मा । प्रथमः । उत । जज्ञे । तेन । अर्हति । ब्रह्मणा । [2]स्पर्धितुम् । कः[2] ॥३०॥

अत्र चतुर्ऋचादिदशर्चान्तैः[3] शब्दैस्तृचाद्येकर्चान्तैः शब्दैश्च तत्तत्संज्ञका[4] अथर्वाख्या ऋषयः प्रतिपाद्यन्ते । एकादशादिविंशत्यन्तैः शब्दैराथर्वणा आर्षेयाः प्रतिपाद्यन्ते । तथा च गोपथब्राह्मणे समाम्नायते— "तम् अथर्वाणम् ऋषिम् अभ्यश्राम्यत् । अभ्यतपत् । समतपत्[5] । तस्माच्छ्रान्तात् तप्तात् संतप्ताद् दशतयान् अथर्वण ऋषीन् निरमिमीत[6]— एकर्चान् द्व्यृचांस्तृचाश्चतुर्ऋचान्[7] पञ्चर्चान् षडृचान् सप्तर्चान् अष्टर्चान् नवर्चान् दशर्चान् इति । ××× दशतयान् आथर्वणान् आर्षेयान् निरमिमीत[6]— एकादशान् द्वादशांस्त्रयोदशांश्चतुर्दशान् पञ्चदशान् षोडशान् सप्तदशान् अष्टादशान् नवदशान् विंशान् इति[5]" (गोब्रा १,१,५) इति । "[8]महाकाण्डाय' इति शब्देन विंशतिकाण्डात्मककृत्स्नवेदवाचिना तद्द्रष्टैवैतन्नामा ऋषिरभिधीयते । 'क्षुद्रेभ्यः' इति यजुर्मन्त्रवाचिना[9] 'पर्यायिकेभ्यः[10]' इति पर्यायसूक्तवाचिना[9] 'एकानृचेभ्यः' इति अर्धर्चवाचकेन रोहितादिकाण्डवाचकैः शब्दैश्च तत्तत्संज्ञका ऋषयोऽभिधीयन्ते । अत्र रोहितादिप्रतिपादकाः काण्डाः सुप्रसिद्धाः । 'विषासहै स्वाहा' इति विषासहिशब्देम सप्तदशः काण्डोऽभिधीयते । 'ब्रह्मणे स्वाहा' इत्यादि व्याख्यातम् ।

इति तृतीयेऽनुवाके तृतीयं सूक्तम् ।

'येन देवं सवितारम्' इति सूक्तम् 'त्वाष्ट्रीं वस्त्रक्षये प्रयुञ्जीत[11]' ( शांक १७,५ ) इति विहितायां महाशान्तावावपेत् । 'अथावापिकाः[12] शान्तय इत्यमृतायाम्' इति प्रक्रम्य सूत्रितं हि शान्तिकल्पे— " 'प्राणाय नमः' ( अ ११,६ ) इति संतत्याम् 'येन देवं सवितारम्' इति त्वाष्ट्र्याम्" ( शांक १८,१;६ ) इति ।

येन देवं सवितारं परि देवा अधारयन्[13] ।
तेनेमं ब्रह्मणस्पते परि राष्ट्राय धत्तन ॥ १ ॥

येन । देवम् । सवितारम् । परि । देवाः । अधारयन्[14] ।
तेन । इमम् । ब्रह्मणः । पते । परि । राष्ट्राय । धत्तन ॥ १ ॥

१. प्रथमोथ S; प्रथमो ह RW. २. स्पर्धि । तुंकः P,P², J. ३. °दशर्चान्तैः नास्ति S'. ४. तत्संज्ञका S'. ५. नास्ति S'. ६. निरमिमत Ga. ७. °श्चतुर्ऋचा नास्ति S'. ८. वैद्. मंपा. ९. °वाचना S'. १०. पृ १८६६ टि ४ द्र. ११. नास्ति Bol. १२. अथ वापि° S'. १३. अंधारयन् A,D,K,Kᵐ,V,Cs; अधारयन् > अंधारयन् Dc; वियापयन् ? पै १५,५,८. १४. अधारयन् P.

देवाः द्योतमाना इन्द्रादयः देवम् द्योतमानं सवितारम् सर्वस्य प्रेरकम् आदित्यं येन हेतुना रक्षोहननरूपेण पर्यधारयन् परितः सर्वत आच्छादयन्। दर्शपूर्णमासादिषु रक्षोनिबन्धनयज्ञभ्रंशपरिहाराय आदित्यमेव परिधित्वेन कल्पितवन्त इत्यर्थः। अत एव तैत्तिरीयके समाम्नायते—'न पुरस्तात् परिदधाति । आदित्यो ह्येवोद्यन् पुरस्ताद् रक्षांस्यपहन्ति' ( तै २,६,६,३ ) इति। तेन कारणेन शत्रुनिर्हरणात्मना हे ब्रह्मणस्पते ब्रह्मणो वेदरूपस्य मन्त्रस्य पते पालक एतत्संज्ञक देव इमम् महाशान्तिप्रयोक्तारं यजमानं राष्ट्राय राज्याय। 'क्रियार्थोपपदस्य'[3] (पा २,३,१४) इति चतुर्थी। राज्यं रक्षितुं परि धत्तन परिधापय। रक्षकत्वेन धापय[1]। अस्य राज्यस्य परकृतबाधापरिहारार्थम् इमं साधकं राजानं रक्षकत्वेन कुर्वित्यर्थः। दधातेर्लोटि मध्यमबहुवचनस्य तस्य तनादेशः। 'तिङां तिङो भवन्ति' ( पावा ७,१,३९ ) इति एकवचनस्य बहुवचनम् आदेशः। यद्वा परि धत्तनेति लिङ्गाद् वस्त्ररक्षणार्थे[2] विहितायां त्वाष्ट्र्यां शान्तौ विनियोगाद् अयम् अर्थः—येन निमित्तेन देवाः सवितारम् आच्छादकम् अकुर्वन् तेन हे ब्रह्मणस्पते। वाससः सर्वदेवत्यत्वात् तदभिमानिदेवाः संबोध्यन्ते। वाससः सर्वदेवत्यं तैत्तिरीयकाः समामनन्ति —'तद् वा एतत् सर्वदेवत्यं यद् वासः' ( तै ६,१, १,४ ) इति। परि धत्तन हे वासोभिमानिनो देवाः यूयमपि एनं राष्ट्राय परिधत्तन। यथा देहस्य वास आच्छादकम् एवम् इमं साधकं राज्यस्य वस्त्रवत् परिधापयत आच्छादकं कुरुत इति बहुवचनोपपत्तिः।

परीममिन्द्रमायुषे[3] महे क्षत्राय[4] धत्तन[5]।
[6]यथैनं जरसे[7] नयाज्[7] ज्योक् क्षत्रेऽधि[8] जागरत्[9] ॥ २ ॥

परि। इमम्। इन्द्रम्। आयुषे। महे। क्षत्राय। धत्तन।
यथा। एनम्। जरसे। नयात्[7]। ज्योक्। क्षत्रे। अधि। जागरत् ॥ २ ॥

हे इन्द्र[10] परमैश्वर्यसंपन्न त्वम् इमम् साधकं मा[10] माम् आयुषे आयुर्लाभाय महे महते क्षत्राय क्षतात् त्रायत इति क्षत्रम् परकृतबाधापरिहारकं बलम्। तस्मै तल्लाभाय च परि धत्तन परिधापयत। अत्रापि पूर्ववत् पूजायां बहुवचनं वस्त्राभिमानिसर्वदेवापेक्षया[11] वा। उक्तम् अर्थं स्पष्टीकरोति—ज्योक् चिरकालं क्षत्रे बाधापरिहारके बले। निमित्ते सप्तमी। अधिः सप्तम्यर्थानुवादी। अधिकं वा जागरत् जागृयात् असौ शान्ति-

---

१. व्यापय S'. २. वस्त्रलक्षणार्थम् S'. ३. °ममिन्द्र > °ममिन्द्र° S'm; °ममिन्द्र ब्रह्मणे हिग्र १,४,८. ४. श्रोत्राय, राष्ट्राय, पोषाय हिग्र. ५. दध्मसि हिग्र. ६. अथैनं जरिमा हिग्र. ७. द्र· RW.; वैतु. मूको. शंपा. नयां (पपा. नयाम्); वै १५,५,९ सा. नय; णयेज् हिग्र. ८. श्रोत्रे, राष्ट्रे, पोषे हिग्र. ९. अधिजागरद् हिग्र. १०. वैतु. मंपा. ११. °सर्वदेवदेवा° S'.

कर्ता यजमानः । जागर्तेर्लेटि अडागमः । यथाशब्दो भिन्नक्रमः । यथा अयं साधकश्चिरकालं बलवान् शत्रुधर्षणसमर्थो जागृयात् अवहितो भवेत् । तथेत्यध्याहारः । एनं शान्तिकर्तारं जरसे जरायै जरापर्यन्तं नय[1] प्रापय । आयुष्मन्तं कुर्विति इन्द्रः संबोध्यः । विश्वदेवसंबोधनपक्षे प्रत्येकविवक्षया एकवचनम् । इदमोऽन्वादेशे एनादेशोऽनुदात्तः । 'जराया जरसन्यतरस्याम्' (पा ७,२,१०१) इति अजादौ जराया जरस् आदेशः ।

परीमं सोममायुषे महे श्रोत्राय[2] धत्तन ।
यथैनं जरसे नयाज्[3] ज्योक् श्रोत्रेऽधि जागरत् ॥ ३ ॥

परि । इमम् । सोमम् । आयुषे । महे । श्रोत्राय । धत्तन ।
यथा । एनम् । जरसे । नयात्[3] । ज्योक् । श्रोत्रे । अधि । जागरत् ॥ ३ ॥

हे सोम[1] वासोऽभिमानिदेव[4] इमं शान्तिकर्तारं मा[1] माम् आयुषे चिरकालजीवनाय महे महते श्रोत्राय । श्रोत्रशब्दः सर्वेषां चक्षुरादीनाम् उपलक्षणम् । इन्द्रियसाध्यरूपाद्युपलब्धये आदानादिकर्मणे च परि धत्तन परितः सर्वतो धत्त । पुष्टं कुरुत । पूर्ववद् बहुवचनम् । यद्वा श्रोत्रशब्देन श्रूयते श्लाघ्यते सर्वैः पुमान् अनेनेति[5] यश उच्यते । श्रु श्रवणे । करणे औणादिकस्त्रन्प्रत्ययः । महते यशसे च परिधत्त । यथैनम् इत्यादि पूर्ववत् । क्षत्रस्थाने श्रोत्रशब्दो विशेषः । यथा चिरकालं श्रोत्रादीन्द्रियशक्तिमान् यशस्वी वा जागृयात् तथा एनं जरसे जरापर्यन्तं नय[1] इति ।

परि धत्त धत्त नो वर्चसेमं जरामृत्युं कृणुत दीर्घमायुः ।
बृहस्पतिः प्रायच्छद् वास एतत् सोमाय राज्ञे परिधातवा उ ॥ ४ ॥

परि । धत्त । धत्त । नः । वर्चसा । इमम् । जराऽमृत्युम् । कृणुत । दीर्घम् । आयुः ।
बृहस्पतिः । प्र । अयच्छत् । वासः । एतत् । सोमाय । राज्ञे । परिऽधातवै । ऊं इति ॥ ४ ॥

एषा ऋक् द्वितीयकाण्डे तृतीयेऽनुवाके 'आयुर्दाः' (अ २,१३,२) इति सूक्ते व्याख्याता । संग्रहार्थस्तु— वाससः सर्वदेवत्यत्वात् तदभिमानिदेवानामेव संबोध्यत्वम् । तथात्वं च वाससः तैत्तिरीयके समाम्नायते— 'अग्नेस्तूषाधानम्'[6] इति प्रक्रम्य 'तद् वा एतत् सर्वदेवत्यं यद् वासः' (तै ६,१,१,३;४) इति । हे देवाः परि धत्त । अन्तर्भावितण्यर्थः । इमं माणवकं वासः परिधापयत । नः अस्मदीयम् इमं वर्चसा तेजसा धत्त पोषयत । तेजस्विनं कुरुतेत्यर्थः । किं च इममेव माणवकं जरामृत्युम्

१. वैद्ग. मंपा. २. श्रोत्राय Sm; श्रोत्रायं > श्रोत्रांय Dc. ३. द्र. RW.; वैद्ग. मूको. शंपा. नुयां (पपा. नुयाम्); पै १५,५,१० सा. नय; णयेज् हिगृ १,४,८. ४. °देवते S'. ५. °ति श्रोत्रशब्देन S'. ६. अस्तेस्तूषायामम् S'.

जरयैव मृत्युर्मृतिर्यस्य स तथोक्तः तथाविधं कुरुत । अकालमृतिर्मा भूद् इत्यर्थः । एतदेवाह — दीर्घम् इति । अस्य माणवकस्य दीर्घम् शतपरिमितम् आयुः अस्तु । तदेव वासः प्रशंसति — बृहस्पतिः बृहताम् इन्द्रादीनां पतिः एतन्नामा देवः । 'तद्बृहतोः करपत्योः°' ( पावा ६,१,१५७ ) इति सुट्तलोपौ । 'पत्यावैश्वर्ये ( पा ६,२,१८ ) इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'उभे वनस्पत्यादिषु युगपत्' ( पा ६,२,१४० ) इति उभयपद-प्रकृतिस्वरत्वम् । एतन्नामा देवः एतत् प्रकृतं वासः सोमाय राज्ञे ब्राह्मणानां स्वामिने । 'सोमोऽस्माकं[1] ब्राह्मणानां राजा' ( तै १,८,१०,२ ) इति श्रुतेः । परिधातवै परिधातुम् । 'तुमर्थे सेसेन्°' ( पा ३,४,९ ) इति तवैप्रत्ययः । 'तवै चान्तश्च युगपत्' ( पा ६,२,५१ ) इति उभयपदप्रकृतिस्वरत्वम् । प्रायच्छत् अददात् । दाण् दाने इत्यस्मात् लङि 'पाघ्रा°' ( पा ७,३,७८ ) इत्यादिना यच्छादेशः । उ इति पदपूरणः । अनेन वस्त्राणां सोमदेवताकत्वं[2] सूचितम् । तथा च श्रुत्यन्तरम् — 'सौम्यं वै वासः । स्वयैवैनद् देवतया प्रतिगृह्णाति' ( तैब्रा २,२,५,२ ) इति ।

जरां [3]सु गच्छ[3] परि धत्स्व वासो भवा [4]गृष्टीनामभिशस्तिपा उ[4] ।
शतं च जीव[5] शरदः पुरूची[6] [7]रायश्च पोषमुपसंव्ययस्व[7] ॥ ५ ॥

जराम् । सु । गच्छ । परि । धत्स्व । वासः । भव । गृष्टीनाम् । अभिशस्तिऽपाः । ऊं इति ।
शतम् । च । जीव । शरदः । पुरूचीः[8] । रायः । च । पोषम् । उपऽसंव्ययस्व ॥ ५ ॥

इयमपि ऋक् तत्रैव काण्डे ( अ २,१३,३ ) व्याख्याता । अत्र प्रथमपादो भिन्नः । हे शान्तिप्रयोक्तः त्वं जराम् वार्धकं सु गच्छ सम्यक् प्राप्नुहि । 'सुः पूजायाम्' ( पा १,४,९४ ) इति कर्मप्रवचनीयः । जरापर्यन्तम् आयुष्मान् भवेत्यर्थः । वासः एतत् परि धत्स्व आच्छादय । अनेन वासःपरिधानेन गृष्टीनाम् गवाम् अभिशस्तिपाः अभिशस्तिः अभितो विशसनं हिंसा तन्निमित्ताद् भयात् पाता पालको भव । तत्र अभूरिति पाठः अत्र भवेति विशेषः । गवाम् अभिशस्तिपात्वं तत्रैव शतपथब्राह्मणा-नुसारेण प्रपञ्चितं तत्[9] ततोऽवगन्तव्यम् । किं च पुरूचीः बहुकालम् अञ्चन्तीः बहु-विधान् पुत्रपौत्रादीन् वा व्याप्नुवतीः शतम् शतसंख्याकाः शरदः संवत्सरान् जीव । अपि च रायः धनस्य पोषम् पुष्टिं समृद्धिम् उपसंव्ययस्व परिधत्स्व । एतद्वासःपरि-धानेन धनादिसमृद्धिर्भवतीति भावः ।

---

१. °कं वा S'. २. °ताकं S'. ३. गच्छासि आपमं २,२,७ हिगृ ,४,२. ४. कृष्टीना° पै १५,६,२ आपमं. हिगृ. पागृ १,४,१२; °शस्तिपावा आपमं. हिगृ. पागृ. ५. जीवा-मि पागृ २,६,२०; जीवेम तैब्रा १,२,१,२ आश्रौ ५,१,७ मागृ १,९,२७; जीवन्तु ऋ १०,१८,४ मा ३५,१५; जीवन्तः अ १२,२,२३. ६. पुरूची A,B[b],C,R,C[s]; सुवर्चा पै. आपमं. पागृ. हिगृ. ७. रायश्च पोषमुप त्वा मदेम पै.; रयिं च पुत्राननु संव्ययस्व पागृ. ८. पुरूचीः P,J. ९. तत्तत् S'.

परीदं वासो अधिथाः[1] स्वस्तयेभूर्वापीनामभिशस्तिपा उ[2] ।
शतं च जीव शरदः[3] पुरूचीर्वसूनि[3] चारुर्वि[4] भजासि[5] जीवन् ॥ ६ ॥

परि । इदम् । वासः । अधिथाः । स्वस्तये । अभूः । वापीनाम् । अभिशस्तिऽपाः । ऊं इति । शतम् । च । जीव । शरदः । पुरूचीः[6] । वसूनि । चारुः । वि । भजासि । जीवन् ॥६॥

एषापि तत्रैव द्वितीयकाण्डे तृतीयेऽनुवाके ( अ २,१३,३ ) व्याख्याता । अत्र चरमपादो विभिन्नः । हे शान्तिकर्तः इदम् उक्तं वासो वस्त्रं स्वस्तये क्षेमाय पर्यधिथाः परिहितवान् असि । परिपूर्वाद् धाधातोर्लुङि 'स्थाघ्वोरिच्च' ( पा १,२,१७ ) इति इत्त्वकित्त्वे । 'ह्रस्वादङ्गात्' ( पा ८,२,२७ ) इति सिज्लोपः । तेन वासःपरिधानेन गृष्टीनाम्[7] गवाम् अभिशस्तिपाः । त्वगादानभीतिरत्र अभिशस्तिशब्देन विवक्षिता । तस्या अभिशस्तेः पाता अभूः भव । उशब्दः पूरणः । शतं च जीव इति तृतीयः पादः पूर्ववत् । जीवन् शतसंवत्सरजीवनवान् चारुः वाससा दीप्यमानस्त्वं वसूनि धनानि वि भजासि पुत्रमित्रदायादादिभ्यः विभक्तं कुरु । अर्थिभ्यो वा प्रयच्छ । भजतेर्लेटि आडागमः ।

योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥ ७ ॥

योगेऽयोगे । तवःऽतरम् । वाजेऽवाजे । हवामहे । सखायः । इन्द्रम् । ऊतये ॥ ७ ॥

अप्राप्तप्रापणं योगः । 'नित्यवीप्सयोः' ( पा ८,१,४ ) इति द्विर्वचनम् । योगेयोगे सर्वस्य अप्राप्यस्य फलस्य प्रापणविषये वाजेवाजे । वाजशब्दः अन्नवाची । उपलक्षणम् एतत् । अन्नादिलक्षणे फले लब्धे च । पूर्ववद् द्विर्वचनम् । [तवस्तरम्] । तुतमत्वर्थीयस्तव-शब्दः । अतिशयेन तवस्विनं समृद्धं तम् इन्द्रम् परमैश्वर्यसंपन्नं देवं सखायः समान-ख्यानाः[8] स्तोतारो वयम् ऊतये रक्षणार्थं च हवामहे आह्वयामः । अभिमतफललाभार्थं लब्धस्य परिपालनार्थं स्वरक्षणार्थं च इन्द्रमेव आह्वयाम इत्यर्थः ।

हिरण्यवर्णो अजरः[1] सुवीरो जरामृत्युः प्रजया सं विशस्व ।
तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः ॥ ८ ॥

१. °था A,C,D,Dc; अधिथाः पै १५,६,३ हिगृ १,४,२; अधिथा आपमं २,२,८. २. °भूरापीना° आपमं. हिगृ.; °भू वैशानां° RW.; °भूर्गृष्टीना° S, सा. अ २,१३,१; °शस्तिपावा हिगृ.; वैप १,२८२० i द्र. ३. पुरुची° A,Bb,C,D; सुवर्चा वसूनि मंब्रा १,१,६. ४. चार्ये वि मंब्रा.; चार्यो वि आपमं.; चाय्यो वि हिगृ. ५. भजा स हिगृ. ६. पुरुचीः P,J. ७. वैद्र. मंपा. ८. समानसख्याः S'. ९. अजयः पै १५,६,४.

हिरण्यऽवर्णः । अजरः । सुऽवीरः । जराऽमृत्युः । प्रऽजया । सम् । विशस्व ।
तत् । अग्निः । आह । तत् । ऊं इति । सोमः । आह । बृहस्पतिः । सविता । तत् । इन्द्रः ॥८॥

हिरण्यवर्णः हितरमणीयशरीरकान्तिः हिरण्यसमानवर्णो वा अजरः जरारहितः सुवीरः । वीराः कर्मणि कुशलाः पुत्राः । शोभनपुत्रादियुक्तो जरामृत्युः । जरयैव मृत्युर्मृतिर्यस्य । अकालमरणरहितश्च सन् प्रजया प्रकर्षेण जायमानया पुत्रादिकया भृत्यादिरूपया वा सह सं विशस्व । संवेशशब्देन अत्र निर्वेशो विवक्ष्यते । निर्विश । एवं हिरण्यवर्णादिविहितफलोपपन्नः सन् चिरकालं सुखयेत्यर्थः । यद्वा सं विशस्व सम्यग्विश प्रविश । उक्तगुणोपेतः सन् स्वगृहम् अधितिष्ठेत्यर्थः । विशतेर्व्यत्ययेन आत्मनेपदम् । उक्तेऽर्थे विप्रतिपत्त्यभावं वासोऽभिमानिसर्वदेवतावचनेन समर्थयते उत्तरार्धेन — अग्निः अङ्गनादिगुणयुक्तो देवः तत् अस्मिन् सूक्ते प्रतिपादितम् अर्थजातम् आह ब्रवीति । उशब्दः अवधारणे । तत् एव सोमो देव आह । तत् एव अर्थजातम् इन्द्रबृहस्पतिसवितार आहुः । एतदादयः सर्वेऽपि देवा इमम् उक्तम् अर्थम् आहुः । अस्मिन्नर्थे विप्रतिपत्तिर्नास्तीत्यर्थः ।

इति तृतीयेऽनुवाके चतुर्थं सूक्तम् ।

'अश्रान्तस्य त्वा' इति एकर्चं सूक्तं 'गान्धर्वीम् अश्वक्षये प्रयुञ्जीत'[1] (शांक१७.५) इति विहितायां गान्धर्व्याख्यायां[2] महाशान्तावावपेत् । उक्तं हि शान्तिकल्पे — "'अश्रान्तस्य त्वा मनसा युनज्मि' इति गान्धर्व्याम् । आयुष्यः शान्तिः स्वस्तिगण ऐरावत्याम्" (शांक १८,७;८) इति ।

सैषा ऋग् एवम् आम्नायते—

अश्रान्तस्य त्वा मनसा युनज्मि प्रथमस्य च ।
उत्कूलमुद्वहो[3] भवोदुह्य[4] प्रति धावतात् ॥ १ ॥

अश्रान्तस्य । त्वा । मनसा । युनज्मि । प्रथमस्य । च ।
उत्ऽकूलम् । उत्ऽवहः । भव । उत्ऽउह्य । प्रति । धावतात् ॥ १ ॥

अत्र अश्वः संबोध्यः । हे गान्धर्वाश्व त्वा त्वाम् अश्रान्तस्य श्रमरहितस्य परसेनाभिगमनेऽपि शरीरायासरहितस्य तुरंगमस्य मनसा शत्रुधर्षणोत्सुकेन स्वाधिरोहसादिप्रोत्साहकेन[5] वा मनसा मानसेन प्रथमस्य सृष्ट्यादौ उत्पन्नस्य अश्वजातेः पूर्वस्य अश्वस्य च मनसा युनज्मि योजयामि । जितश्रमस्य उच्चैःश्रवसः

१. नास्ति Bol. २. गन्धर्वाख्यायां S'. ३. उत्कूल° C,R,S^m; उत्कूलं° RW. वैप १,८८० f द्र. ४. भवोदुह्य Bh,C,D,K^m,S^m,V; भवोदुह्य > भवोदुह्य Dc; भवोदुह्य RW.; भवो दुहीय S, सा. ५. °रोहवासादि° S'.

अश्वश्रेष्ठस्य च मनउपलक्षितां[1] सर्वेन्द्रियशक्तिं शरीरदार्ढ्यम् आशुत्वं परसेनाभिभवनसामर्थ्यं च अस्मिन् शान्तिफलत्वेन काम्यमाने तुरंगमे योजयामीत्यर्थः। एवंसामर्थ्योपेतस्त्वम् उत्कूलमुद्वहो[2] भवः[2]। अतिद्रुतो[3] भवेति तात्पर्यार्थः। पदार्थस्तु — नदी परावांची तीरे प्रभूतेन जलप्रवाहेण उत्क्रम्य ऊर्ध्वं प्रवहति एवं त्वमपि युद्धाय संनद्धं परसैन्यं स्वसामर्थ्येन अतिक्रम्य विक्षोभयेति अश्वः प्रोत्साह्यते। वह प्रापणे। 'उदि कूले रुजिवहोः' (पा ३,२,३१) इति खच्प्रत्ययः। 'खित्यनव्ययस्य' 'अरुर्द्विषदजन्तस्य मुम्' (पा ६,३,६६;६७) इति कूलशब्दस्य मुम् आगमः[2]। भवतेर्लेटि अडागमः। 'भूसुवोस्तिङि' (पा ७,३,८८) इति गुणनिषेधाभावश्छान्दसः[4]। यद्वा छान्दसे लङि अमाङ्योगेऽपि अडभावः। दुहीय[2] एतादृशसामर्थ्योपेतेन अश्वेन भवता एषणीयानि शत्रुजयलक्षणानि फलानि लभेय। दुह प्रपूरणे। अस्माद् विधिलिङि कर्त्रभिप्राये क्रियाफले आत्मनेपदम्। उत्तमैकवचनम् इट्। अतः अश्व त्वं प्रतिधावतात्[2] जेतव्यं स्थानं प्रति शीघ्रं गच्छ। प्रतिपूर्वात् सर्तेर्वेगितायां गतौ धाव् आदेशः। 'तुह्योस्तातङ्' (पा ७,१,३५) इति मध्यमपुरुषस्य हेस्तातङ् आदेशः।

इति तृतीयेऽनुवाके पञ्चमं सूक्तम्।

'अग्नेः प्रजातम्' इति सूक्तेन 'आग्नेयीम् अग्निभये सर्वकामस्य च' (शांक १७,१) इति विहितायाम् आग्नेय्याख्यायां महाशान्तौ हिरण्यनिर्मितं कुण्डलादिकम् अभिमन्त्र्य बध्नीयात्। उक्तं हि शान्तिकल्पे — "'अग्नेः प्रजातं परि यद्धिरण्यम्' इति कर्णे[5] हिरण्यम् आग्नेय्याम्" (शांक १९,११) इति। कर्णमध्ये छिद्रवद्धिरण्यकुण्डलम् इत्यर्थः।

तथा अनेन सूक्तेन तुलापुरुषे शान्तिकलशे हुत्वा संपातान् आनयेत्। 'अथातस्तुलापुरुषविधिं व्याख्यास्यामः' इति प्रक्रम्य उक्तं परिशिष्टे — "'अग्ने गोभिः' (पै १,३९,१), 'अग्नेभ्यावर्तिन्' (पै १,४१,१), 'अग्नेः प्रजातम्' (अ १९,२६) इति संपातान् [6]उदपात्र आनीयाभिषेककलशेषु[6] निनयेत्" (अप ११,१,६) इति।

अ॒ग्नेः प्रजा॑तं॒ परि॒ यद्धिर॑ण्यम॒मृतं॑ द॒ध्रे[7] अधि॒ मर्त्ये॑षु ।
य 'ए॑नद् वेद॒'[8] स इदे॑नमर्हति ज॒रामृ॑त्युर्भवति॒ यो बि॒भर्ति॑[9] ॥ १ ॥

अ॒ग्नेः। प्रऽजा॑तम्। परि॑। यत्। हिर॑ण्यम्। अ॒मृत॑म्। द॒ध्रे। अधि॑। मर्त्ये॑षु।
यः। ए॒नत्[10]। वेद॑। सः। इत्। ए॒नम्। अ॒र्ह॒ति। ज॒राऽमृ॑त्युः। भ॒वति॒। यः। बि॒भर्ति॑ ॥१॥

---

१. °लक्षितं S'. २. नेह. संपा. ३. अतिद्रुतो S'. ४. गतिनिषेधा° S'. ५. कर्णे S'; नास्ति शंपा. ६. °पात्रानीया° Bol. ७. तुल्ये खि ४,६,५; पुले खिसा २७,५. ८. एनद्वेद A,B[b],C,D,R,S[m],Cs; एनद्वेद > एनद्वेद Dc. ९. बिभर्ति K,K[m],RW.; बिभर्ति > बिभर्ति Dc. १०. एनत् J.

अग्नेः परि अग्नेः सकाशात्। परिशब्दः पञ्चम्यर्थानुवादी। प्रजातम् प्रकर्षेण उत्पन्नं यत् हिरण्यम् सुवर्णं विद्यते। आग्नेयाद् रेतसः सुवर्णम् उत्पन्नम् इति तैत्तिरीयाः समामनन्ति—'अग्ने रेतश्चन्द्रं हिरण्यम्। अद्भ्यः संभूतम् अमृतं प्रजासु' ( तैब्रा १,२,१,४ ) इति। यच्च हिरण्यं मर्त्येषु मरणधर्मसु मनुष्येषु अधि। अधिशब्दः सप्तम्यर्थानुवादी अधिकृत्येति[1] वा। अमृतम् अमरणसाधनं सत् दध्रे अवतिष्ठते। धृङ् अवस्थाने। तौदादिकः। अकर्मकः। आत्मनेपदी। मरणधर्मणां[2] मनुष्याणां मरणनिर्हरणसाधनत्वेन यत् हिरण्यं तिष्ठति। यद्वा धृञ् धारणे। सकर्मकः। छान्दसो लिट्। मर्त्येषु अमरणसाधनत्वेन देवैर्दध्रे। चक्रे इति यावत्। एनत्। 'इदमो नपुंसकैकवचने एनदादेशो वक्तव्यः' ( पावा २,४,३४ ) इति इदम एनदादेशः। एनत् उक्तं हिरण्यं यः पुमान् वेद उक्तस्वरूपं हिरण्यं जानाति स इत्। इद् अवधारणे। स एव पुमान् एनम् अन्वादिष्टं हिरण्यरूपं पदार्थम् अर्हति। धारयितुम् इति शेषः। यः पुमान् बिभर्ति धारयति स्वशरीरे मणिकुण्डलाङ्गुलीयादिरूपं स पुरुषो हिरण्यधारी जरामृत्युः। जरयैव मृत्युर्मृतिर्यस्य। अकालमृतिरहितो भवति।

यद्धिरण्यं सूर्येण सुवर्णं प्रजावन्तो [3]मनवः पूर्व ईषिरे।
तत् त्वा चन्द्रं वर्चसा सं सृजत्यायुष्मान्[4] भवति यो बिभर्ति[5] ॥ २ ॥

यत्। हिरण्यम्। सूर्येण। सुऽवर्णम्। प्रजाऽवन्तः। मनवः। पूर्वे[6]। ईषिरे[7]।
तत्। त्वा। चन्द्रम्। वर्चसा। सम्। सृजति[8]। आयुष्मान्। भवति। यः। बिभर्ति[9] ॥ २ ॥

प्रजावन्तः प्रकर्षेण जायमानाभिः पुत्रभृत्यादिभिस्तद्वन्तो मनवः। कार्ये कारणशब्दः। मनोः पुत्रा मनुष्याः पूर्वे हिरण्यधारिणां[10] प्रथमभाविनः सन्तः[11] पूर्वे सृष्ट्यादावुत्पन्ना मनवो वा।

'महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।

मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥' ( भगी १०,६ ) इति हि भगवद्वचनम्। सुवर्णम् शोभनवर्णं यद्धिरण्यम् हितरमणीयं हेम सूर्येण सर्वस्य प्रसवित्रा स्वकारणेन आदित्येन सह ईषिरे प्राप्तवन्तः। लब्धवन्त इत्यर्थः। सूर्येण प्रेरिता वा

---

१. अकृत्येति S'. २. °धर्माणां S'. ३. मनवः पूर्व इषिरे K,K$^m$,V,WM.; मनवः पूर्व ईषिरे B$^h$,D,R,S$^m$,Cs; मनवः पूर्वं ईषिरे C; मनवः पूर्व ईषिरे > मनवः पूर्व इषिरे Dc. ४ संजात्या° RW.; सृजस्वायु° P$^3$,M. ५. बिभर्ति K,K$^m$,V,RW.; बिभर्ति > बिभर्ति Dc. ६. पूर्वे P,J,WM. ७. इषिरे P,P$^1$,J,WM. ८. सृजाति P. ९. बिभर्ति P$^2$. १०. °धारिणे S'. ११. संतः S'.

**मनवो हिरण्यम् ईषिरे । ईष गत्यादिषु । भौवादिकः । आत्मनेपदी ।** 'इजादेश्च गुरुमतोऽनृच्छः' ( पा ३,१,३६ ) **इति विहित आम्प्रत्ययोऽत्र मन्त्रत्वाद् न प्रवर्तते** 'कास्प्रत्ययादाममन्त्रे लिटि' ( पा ३,१,३५ ) **इति निषेधात् । इषु इच्छायाम् इत्यस्माद् वा व्यत्ययेन आत्मनेपदम् ।** तत् **मनुभिर्धारितं** चन्द्रम् **आह्लादकं हिरण्यं कर्तृ** त्वा **त्वां हिरण्यधारकं** वर्चसा **तेजसा शरीरकान्त्या** सं सृजतु[1] **संयोजयतु ।** यः **पुरुषो** बिभर्ति **धारयति हिरण्यं स पुमान्** आयुष्मान् **चिरकालजीवनवान्** भवति । **भूमार्थे मतुप्प्रत्ययः ।**



आयु॑षे त्वा॒ वर्च॑से त्वौज॑से च॒ बला॑य च ।
यथा॑ हिरण्य॒तेज॑सा[2] वि॒भासा॑सि॒ जनाँ॒[3] अनु॑ ॥ ३ ॥

आयु॑षे । त्वा॒ । वर्च॑से । त्वा॒ । ओज॑से । च॒ । बला॑य । च॒ ।
यथा॑ । हि॒र॒ण्य॒ऽतेज॑सा । वि॒ऽभासा॑सि[4] । जना॑न् । अनु॑ ॥ ३ ॥

**हे हिरण्यधारक पुरुष** त्वा **त्वाम्** आयुषे **चिरकालजीवनाय । तच्चन्द्रं सं सृजतु इत्यनुषङ्गः । तथा** त्वा **त्वां तद्धिरण्यं** वर्चसे **वर्चोलाभाय सं सृजतु ।** ओजसे **शारीरबलाय । शरीरधारकोऽष्टमो धातुर्वा ओजः । तदर्थं** बलाय **भृत्यादिसंपत्तिरूपाय बाह्याय बलाय तदर्थं** च **हिरण्यं त्वां सं सृजतु । समुच्चयार्थौ चकारौ ।** यथा हिरण्यम्[1] **सुवर्णं** तेजसा[1] **शुक्लभास्वररूपेण विशेषेण भासते । यत्तदोर्नित्य-संबन्धात् तथेत्यध्याहारः । तथा त्वमपि च** जनान् अनु **लक्षीकृत्य । लक्षणादि-ष्वर्थेषु अनुः कर्मप्रवचनीयः । तेजसा वर्चसा उज्ज्वलरूपेण** विभासासि **विशेषेण भासेथाः । तृतीयार्थे वा अनुः कर्मप्रवचनीयः । जनैः सह विशेषेण भासस्व । भासृ दीप्तौ । लेटि आडागमः । व्यत्ययेन परस्मैपदम् ।**

यद् वेद॒ राजा॒ वरु॑णो॒ वेद॑[5] 'दे॒वो बृह॒स्पति॑ः'[6] ।
इन्द्रो॒ यद् वृ॑त्र॒हा वेद॒[7] 'तत् त॑ आयु॒ष्यं॑ भुव॒त् तत् ते॑ वर्च॒स्यं॑ भुवत्'[8] ॥४॥

यत् । वेद॑ । राजा॑ । वरु॑णः । वेद॑ । दे॒वः । बृ॒ह॒स्पति॑ः । इन्द्र॑ः । यत् । वृ॒त्र॒ऽहा ।
वेद॑ । तत् । ते॒ । आ॒यु॒ष्य॑म् । भु॒व॒त् । तत् । ते॒ । व॒र्च॒स्य॑म् । भु॒व॒त् ॥ ४ ॥

यत् **हिरण्यं** राजा **राजमानो** वरुणो **देवः** वेद **अग्नेरुत्पन्नम् इति मनुष्याणां मरणनिर्हरणोपाय इति जानाति । तथा** बृहस्पतिः **बृहतां महतां देवानां पतिः**

---

१. वैतु. मंपा. २. स्वरः ?; हिरण्यं तेजसा S, सा. ३. जनैं Cs,R; जनैं > जनाँ Sm. ४. °भासंसि J. ५. यदु खि ४,६,६ पै २०,५१,९. ६. देवी सरस्वती खि. ७. वेदु A,Sm,Cs. ८. तन्मे वर्चसु आयुषे खि. † भवत् C.

पालकः एतत्संज्ञको देवः यत् हिरण्यम् उक्तस्वरूपं वेद । वृत्रहा वृत्रं हतवान् इन्द्रः अपि यत् हिरण्यम् उक्तलक्षणं वेद । तत् वरुणादिभिर्देवैर्ज्ञातप्रभावं धारितं वा हिरण्यं ते तव हिरण्यधारक पुरुष आयुष्यम् चिरकालजीवनाय हितम् आयुष्कारि भुवत् भवतु । तथा तद् हिरण्यं ते तव वर्चस्यम् वर्चसे हितं तेजस्कारि भुवत् भवतु । 'तस्मै हितम्' (पा ५,१,५) इति उभयत्र यत्प्रत्ययः । भुवदिति । भवतेर्लेटि 'भूसुवोस्तिङि' (पा ७,३,८८) इति गुणप्रतिषेधः । अडागमः । 'इतश्च लोपः०' (पा ३,४,९७) इति तिप इकारलोपः ।

एकोनविंशे काण्डे षष्ठं सूक्तम् ।

इति तृतीयोऽनुवाकः समाप्तः ।

चतुर्थेऽनुवाके सप्त सूक्तानि । तत्र 'गोभिष्ट्वा पातु' इति प्रथमं सूक्तम् । अनेन 'प्राजापत्यां प्रजापश्वन्नकामस्य प्रजाक्षये च' (शांक १७,२) इति विहितायां प्राजापत्याख्यायां महाशान्तौ सुवर्णरजतलोहमयमणिबन्धनं कुर्यात् । उक्तं हि शान्तिकल्पे— " 'गोभिष्ट्वा पात्वृषभः' इति त्रिवृतं प्राजापत्यायाम् 'अक्षितास्ते' (अ ६,१४२,३) इति यवमणिं[1] सावित्र्याम्" (शांक १९,२;३) इति ।

गोभिष्ट्वा पात्वृषभो वृषा त्वा पातु वाजिभिः ।
वायुष्ट्वा ब्रह्मणा पात्विन्द्रस्त्वा पात्विन्द्रियैः ॥ १ ॥

गोभिः । त्वा । पातु । ऋषभः । वृषा । त्वा । पातु । वाजिऽभिः ।
वायुः । त्वा । ब्रह्मणा । पातु । इन्द्रः । त्वा । पातु । इन्द्रियैः ॥ १ ॥

हे त्रिवृन्मणिधारक पुरुष त्वा त्वां ऋषभः[2] सेक्ता प्रबलः पुंगवो[3] यूथपतिः गोभिः स्वयूथ्याभिः सह पातु रक्षतु । गोषु बहून्यपत्यानि उत्पाद्य तत्समृद्धिकरणद्वारा त्वां समृद्धं करोत्वित्यर्थः । अथवा वृषभो वृषभदेवता[4] स्वीयाभिर्गोभिर्देवताभिः सह स्वयम् अरिष्टेभ्यः पातु । गोभिष्ट्वेत्यत्र 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' (पा ८,३,१०३) इति मूर्धन्यादेशः । तथा वृषा प्रजननसमर्थोऽश्वः वाजिभिः वेजनवद्भिः शीघ्रगतिभिरश्वैः सह त्वा त्वां पातु । पूर्ववद् अश्वपुष्टिद्वारेणेति मन्तव्यम् । एवं वायुः अन्तरिक्षचरो देवः ब्रह्मणा परिवृढेन कर्मणा यज्ञलक्षणेन सह त्वा त्वां पातु । 'वाताद् यज्ञः प्रयुज्यताम्' (तैब्रा ३,७,४,१) इति श्रुतेः वायोर्यज्ञाख्यब्रह्मणा संबन्धः । यद्वा वायुः ब्रह्मणा परिवृढेन व्याप्तेन सूत्रात्मलक्षणेन सह पातु । अथवा ब्रह्मशब्देन परिवृढम् अन्तरिक्षं स्वाश्रयम् उच्यते तेन सह पातु । एवम् इन्द्रो देवः इन्द्रियैः । 'इन्द्रियम् इन्द्रलिङ्गम् इन्द्रदृष्टम् इन्द्रसृष्टम्' (पा ५,२,९३) इत्यादिना इन्द्रियशब्दो निपातितः । अतः इन्द्रि-

---

१. योमणिं S'. २. वैतु. मंपा. ३. पुंगौः शंपा. ४. °देवताकः S'.

याण्यत्र इन्द्रसृष्टानि इन्द्रजुष्टानि वा परिगृह्यन्ते तैः सह त्वा त्वां पातु । यद्वा 'तद् यद् एनं प्राणैः समैन्धंस्तद् इन्द्रस्येन्द्रत्वम्' (नि १०,८) इत्यादिश्रुतेः (तु. माश ६,१,१,२) इन्द्र आत्मा । स च इन्द्रियैः इतरैर्वागादिभिः सह पातु ।

सोमस्त्वा पात्वोषधीभिर्नक्षत्रैः पातु सूर्यः ।
'माद्भ्यस्त्वा चन्द्रो वृत्रहा वातः प्राणेन रक्षतु ॥ २ ॥

सोमः । त्वा । पातु । ओषधीभिः । नक्षत्रैः । पातु । सूर्यः ।
मात्ऽभ्यः । त्वा । चन्द्रः । वृत्रऽहा । वातः । प्राणेन । रक्षतु ॥ २ ॥

सोमो वल्ल्यात्मक ओषधीनां राजा देवः ओषधीभिः इतराभिर्व्रीह्यादिभिः सह त्वा त्वां पातु रक्षतु । एवं सूर्यो देवो नक्षत्रैः । नक्षान्नाशात् पतनात् त्रायन्त[2] इति नक्षत्राणीति अत्र नक्षत्रशब्देन ग्रहाः परिगृह्यन्ते । तैः सह त्वां पातु । एवं चन्द्रः सर्वपदार्थप्राण्याह्लादकारी देवः माद्भिः[3] मासैः सह त्वा त्वां पातु । 'पद्दन्' (पा ६,१,६३) इत्यादिना मासशब्दस्य मास्भावः । 'झलां जशोन्ते' (पा ८,२,३९) इति जश्त्वेन दकारः । मस्यन्ते परिमीयन्ते सकला वृद्धिह्रासैरिति मासा इति तद्व्युत्पत्तिः । स विशेष्यते वृत्रहेति । वृत्रः आवरकोन्धकारः तस्य हन्तेति वृत्रहा । एवं वातो वायुः प्राणेन स्वकीयेन शरीरगतेन पञ्चवृत्त्यात्मकेन वायुना सहितः सन् त्वां रक्षति[3] रक्षतु ।

तिस्रो [4]दिवस्तिस्रः पृथिवीस्त्रीण्यन्तरिक्षाणि[4] चतुरः समुद्रान् ।
त्रिवृतं[5] स्तोमं त्रिवृत[5] आप आहुस्तास्त्वा रक्षन्तु [6]त्रिवृता त्रिवृद्भिः[6] ॥३॥

तिस्रः । दिवः । तिस्रः । पृथिवीः । त्रीणि । अन्तरिक्षाणि । चतुरः । समुद्रान् । त्रिऽवृतम् । स्तोमम् । त्रिऽवृतः । आपः । आहुः । ताः । त्वा । रक्षन्तु । त्रिऽवृता[7] । त्रिवृत्ऽभिः ॥३॥

दिवः द्युलोकान् तिस्रः त्रीन् त्रिगुणान् । आहुरिति सर्वत्र संबन्धः । अभिज्ञाः कथयन्ति । दिवस्त्रिवृत्त्वं[8] चन्द्रार्कनक्षत्राणाम् आश्रयस्थानभेदाद् अवगन्तव्यम् । यद्वा तज्जिगमिषूणाम् उत्तममध्यमाधमभेदेन गन्तव्यस्यापि द्युलोकस्य त्रैविध्यम् अवगन्तव्यम् । एवं पृथिव्याः अन्तरिक्षस्य च गन्तृभेदेन त्रैविध्यं द्रष्टव्यम् । तथा तिस्रः पृथिवीः पृथिवीरपि तिस्र आहुः । निकृष्टप्राणिभोगाश्रया पृथिव्येका । मध्यमप्राणिभोगाश्रया पृथिव्यपरा । उत्तमप्राणिभोगाश्रया पृथिव्यन्या । इति

---

१. माद्भिस्त्वा S, सा. २. एवं स्वरः ?; वैप १,१७६१ b द्र. ३. वैतु. मंपा.
४. दिवस्तिस्रः पृथिवी° RW. ५. तृवृ° B[h],C,D,R,S[m],V,Cs. ६. °तास्त्रिवृद्भिः K,K[m],S[m],V; °तास्तृवृद्भिः R,Cs; त्रिवृतस्त्रिवृद्भिः S, सा. ७. °ताः P[s], पै २०,७,३.
८. त्रिवृतस्त्रिवृत्त्वं S'.

तिस्रः पृथिवीरित्युच्यते[1] । तृणौषधिवनस्पतिभिर्वा[2] त्रिवृत्त्वं पृथिव्याः । अन्तरिक्षाणि अपि त्रीणि आहुः । अत्रापि सुकृतिनां त्रैविध्याद् गन्तव्यस्यापि अन्तरिक्षस्य त्रैविध्यम् । अथवा 'यक्षगन्धर्वाप्सरोगणसेवितम् अन्तरिक्षम्' ( नृपू १,२ ) इति वचनात् तेषाम् आवासभेदेन त्रैविध्यम् । चतुरः समुद्रान् आहुः । यद्यप्यत्र त्रिवृन्मणिस्तुतिसाधनत्वेन त्रित्वम् अपेक्षितं तथापि चतुर्षु त्रयाणां संभवात् चत्वारः समुद्रा इति प्रसिद्धयनतिलङ्घनाय चतुरः समुद्रान् इत्युक्तम् । एवं स्तोमं त्रिवृतम् आहुः । त्रिवृदाख्ये स्तोमे त्रयाणां तृचानां संभवाद् ऋचां गानस्य च त्रिरावृत्तेश्च स्तोमम् स्तोत्रं त्रिवृतम् आहुः । तथा आपः अपः त्रिवृत आहुः दिव्यान्तरिक्षभौमभेदेन । ताः त्रिवृतः[3] । द्युपृथिव्यादिकाः त्रिवृत्त्वधर्मवत्यः त्रिवृन्मणिना सह अभेदम्[4] आपन्नाः सत्यः त्रिवृद्भिः स्वकीयैस्त्रिभिः प्रकारैः मणिगतहिरण्यरजतलोहलक्षणेन त्रिवृता सह अभेदम् आपन्नैः त्वा त्वां रक्षन्तु ।

त्रीन्नाकांस्त्रीन्[5] समुद्रांस्त्रीन् ब्र॒ध्नांस्त्रीन्[6] वैष्टपान् ।
त्रीन् मा॑त॒रिश्व॑न॒स्त्रीन्त्सूर्यान्[7] गो॒प्तॄन्[8] कल्पयामि ते ॥ ४ ॥

त्रीन् । नाकान्[9] । त्रीन् । स॒मु॒द्रान् । त्रीन् । ब्र॒ध्नान्[10] । त्रीन् । वै॒ष्ट॒पान् ।
त्रीन् । मा॒त॒रिश्व॑नः[11] । त्रीन् । सूर्यान् । गो॒प्तॄन् । क॒ल्प॒या॒मि॒ । ते॒ ॥ ४ ॥

हे हिरण्यरजतलोहात्मकत्रिवृन्मणिधारक पुरुष त्रीन् नाकान्[12] । उक्तप्रकारेण गन्तृत्रैविध्याद् गन्तव्यस्य नाकस्य स्वर्गस्यापि त्रैविध्यम् । नास्मिन् अकं दुःखम् अस्तीति तद्व्युत्पत्तिः । 'पुण्यकृतो ह्येव तत्र गच्छन्ति' इति वचनात् । तान् ते गोप्तॄन् कल्पयामि त्रिवृन्मणिद्वारा रक्षकान् करोमि । एवम् उत्तरत्रापि द्रष्टव्यम् । त्रीन् समुद्रान् । समुद्द्रवन्ति अस्माद् आप इति समुद्राः अन्तरिक्षविशेषाः । तान् त्रीन् । अथवा प्रसिद्धा एव समुद्राः परिगृह्यन्ते । उत्तरसमुद्रस्य दुरन्तत्वात् त्रीन् इत्यभिहितम् । तान् ते गोप्तॄन् कल्पयामि । त्रीन् बध्नान्[?] बध्नः सर्वस्य बन्धः आधारभूत आदित्यः । तस्य त्रैविध्यं प्रकाश्यपुस्थानत्रैविध्याद् द्रष्टव्यम् । त्रीन् वैष्टपान् । विष्टपान् इत्यर्थः । बध्नस्य त्रित्वाभिधानात् तदाश्रयविष्टपानामपि त्रैविध्यम् । यद्वा विष्टपशब्दो भुवनसामान्यवचनः 'विष्टपं

१. °च्यंते S'. २. °षधिभिर्वन° S'. ३. वैतु. मंपा. ४. अ नास्ति S'. ५. °नाकुंस्त्री° B,C,D,K,K[m],R,S[m],V,Dc,Cs. ६. ब्रध्नं° B[b], C,R,Cs; बु्ध्नां° S,WM. सा. ७. मातरिश्व° A,B[b],C,D,R,S[m],Cs; मातरिश्व°> मा॑तुरिश्व° Dc. ८. गोप्त्रीन् A,B[h],D,S[m],V. ९. नाकम् P,P[2],J. १०. ब्रध्नान् P; ब्रध्नान्>ब्रध्नन् J; ब्रध्नन्>ब्रध्नान् P[2]. ११. मातरिश्वनः P,J. १२. लोकान् S'.

भुवनं जगत्' (अको २,१,६) इत्यभिधानात्। विष्टपानां त्रैविध्यात् तत्रत्याः [1]प्राणिनोऽपि देवमनुष्यपित्रात्मकत्वेन[1] त्रिविधास्तान्[2]। त्रीन् मातरिश्वनः ऊर्ध्वाधस्तिर्यग्गतिभेदेन वा संचाराश्रयभूतलोकानां त्रित्वेन वा [3]मातरिश्वाऽपि त्रिविधः[3] तान्। मातरि अन्तरिक्षे श्वसिति चेष्टते इति मातरिश्वा इति तच्छब्दव्युत्पत्तिः। त्रीन् सूर्यान् प्रकाश्यानां लोकानां[4] त्रित्वात् सूर्या अपि त्रय इत्युच्यन्ते। यद्वा रश्मिमण्डल-तदधिष्ठातृदेवताभेदेन सूर्यस्य त्रित्वम्। त्रिवृन्मणि योजयन् अहं ये ये त्रैविध्योपपन्ना नाकाद्याः सन्ति तान् सर्वान् ते तव गोप्तॄन् कल्पयामि।

घृतेन त्वा समुक्षाम्यग्न[5] आज्येन वर्धयन्।
अग्नेश्चन्द्रस्य सूर्यस्य मा प्राणं मायिनो दभन् ॥ ५ ॥

घृतेन। त्वा। सम्। उक्षामि। अग्ने। आज्येन। वर्धयन्।
अग्नेः। चन्द्रस्य। सूर्यस्य। मा। प्राणम्। मायिनः। दभन् ॥ ५ ॥

हे अग्ने त्वा त्वाम् आज्येन होमसाधनेन वर्धयन् अभिवृद्धं कुर्वन् कर्तुम् इच्छन् अहं घृतेन सम् उक्षामि सम्यक् सिञ्चामि। बह्वीभिर्घृतधाराभिरक्तं करोमि। अग्नेः घृतेन समुक्षितस्य चन्द्रस्य ओषधिवनस्पत्याद्याह्लादकारिणः सूर्यस्य देवस्य च अनुग्रहात् हे मणिं बिभ्रत् पुरुष तव प्राणं मायिनः मायावन्तोऽसुरा मा दभन् दम्भनं मा कुर्वन्तु। मापहरन्तु इत्यर्थः। दम्भु दम्भे। अस्य लुङि[6] अङि रूपम्।

मा वः प्राणं मा वोऽपानं मा हरो मायिनो दभन्।
भ्राजन्तो विश्ववेदसो[7] देवा[8] दैव्येन धावत[9] ॥ ६ ॥

मा। वः। प्राणम्। मा। वः। अपानम्। मा। हरः। मायिनः। दभन्।
भ्राजन्तः। विश्वऽवेदसः। देवाः। दैव्येन। धावत ॥ ६ ॥

अत्र राज्ञो मणिबन्धने विनियोगाद् राजनि पूजार्थं बहुवचनस्य युक्तत्वात् अत्र व इति बहुवचननिर्देशः। यद्वा राज्ञः पुत्रभृत्यादिकम् अपेक्ष्य बहुवचनम्। हे राजादयः वः युष्माकं प्राणं मायिनो मायावन्तोऽसुरा मा दभन् हिंसां मा कुर्वन्तु। तथा वः अपानम् अपि मा दभन्। एवं हरः शत्रुबलापहारकं तेजो मा दभन्। तदर्थम् हे[10] देवाः अग्निचन्द्रसूर्याः भ्राजन्तः दीप्यमाना विश्ववेदसः विश्वस्य सर्वस्य वेत्तारो विश्वधना वा। वेद इति धननाम। यूयं दैव्येन देवसंबन्धिना रथा-

---

१. देवमनुष्यपित्रात्मकत्वेन प्राणिनोपि S'.　२. त्रिविधान् S'.　३. °रिश्वात्रित्रि° S'.　४. लोकान् S'.　५. समुक्ष्याम्य° D,R,S^m,Cs; समुक्ष्युाम्य° B^b.　६. चङि S'.　७. विश्ववेदुसो C.　८. °सो देवा सा. W.　९. मावत पै १०,७,६.　१०. वैह. मैपा.

दिना साधनेन वेगेन वा धावत । प्राणरक्षार्थम् इति शेषः । दैव्येनेति । 'देवाद्यञञौ' ( पावा ४,१,८५ ) इति यञ् ।

प्राणेनाग्निं सं सृजति[1] वातः प्राणेन संहितः ।
प्राणेन विश्वतोमुखं सूर्यं देवा अजनयन् ॥ ७ ॥

प्राणेन । अग्निम् । सम् । सृजति[2] । वातः । प्राणेन । सम्ऽहितः ।
प्राणेन । विश्वतःऽमुखम् । सूर्यम् । देवाः । अजनयन् ॥ ७ ॥

प्राणरक्षाम् आशास्य इदानीं तस्य माहात्म्यं वर्णयति । प्राणेन मुखस्थेन वायुना अग्निं सं सृजति संयोजयति समिन्धनकर्ता पुरुषः । यत एवम् अतः प्राणो रक्षितव्यः किं च वातः बाह्यो वायुः प्राणेन मुखस्थेन सह संहितो भवति । अनेन तयोरेकत्वम् उक्तं भवति । अपि च प्राणेन सूत्रात्मरूपेण ब्रह्मणा विश्वतोमुखम् । सर्वत्र प्रकाशकत्वात् सूर्यो विश्वतोमुख[3] इत्युच्यते । यद्वा मां प्रत्युदगात् इति प्रतिपुरुषम् आभिमुख्यबुद्धिसंभवाद् विश्वतोमुखत्वव्यवहारः । तादृशं सूर्यं देवा इन्द्राद्या अजनयन् पुरा उदपादयन् । स्वस्वप्रयोजनाय लब्धवन्त इत्यर्थः । एवं-महानुभावः प्राण इति प्राणस्य अवश्यरक्षणं युक्तम् इत्यभिप्रायः ।

आयुषायुःकृतां[4] जीवायुष्मान्[5] जीव मा मृथाः ।
प्राणेनात्मन्वतां[6] जीव[7] मा [8]मृत्योरुदगा वशम्[8] ॥ ८ ॥

आयुषा । आयुःऽकृताम् । जीव । आयुष्मान् । जीव । मा । मृथाः ।
प्राणेन । आत्मन्ऽवताम्[9] । जीव[10] । मा । मृत्योः । उत् । अगाः । वशम्[11] ॥ ८ ॥

हे राजन् मणिधारक त्वम् आयुष्कृताम्[12] । परेषाम् आयुरभिवृद्धिकर्तारः आयुष्कृतः । यद्वा तपआदिना दीर्घम् आयुः कुर्वन्ति संपादयन्तीति आयुष्कृतः चिरकालजीविनः पूर्वे महर्षयः आयुष्कृतः । तेषाम् आयुषा । तेषां यादृग् आयुस्तादृशेनायुषेत्यर्थः । अथवा तैर्दत्तेन आयुषा त्वं जीव । तस्माद् आयुष्मान् । भूमार्थे मतुप् । [13]दीर्घायुष्यः । भवेति[13] शेषः । उक्तवैपरीत्यं निराकरोति । जीव

---

१. संजन्ति RW.; दधाति पै १०,७,७. २. सृजाति P. ३. मुख S'.
४. °युष्कृतां V,S, सा. पै १०,७,८. ५. °युष्मां RW. ६. °त्मत्वतां A,D,K$^{m}$,V,Dc, Cs, C,WM.; °त्मन्वतां ( °त्मत्वतां ? ) B$^{h}$,R,S$^{m}$; °त्मत्वतां S. ७. जीव A,B$^{h}$, C,D,K,K$^{m}$,R,S$^{m}$,V. ८. °रुप गा वशम् RW. पै.; °रुदगा वशं A,B$^{h}$,C,S$^{m}$,Cs; गा वशन् D,R; °गा वशं > °गा वशं Dc. ९. आत्मन्ऽत्वताम् P,P$^{1}$ J,WM.
१०. जीव P,J. ११. वशाम् P; वशाम् J. १२. वैतु. मंपा. १३. °ष्यो मतुपो भवेति S'.

मा मृथाः **मृतिं मा प्राप्नुहि। मृङ् प्राणत्यागे।** 'माङि लुङ्' (पा ३,३,१७५)। 'ह्रस्वाद् अङ्गात्' (पा ८,२,२७) **इति सिचो लोपः।** आत्मन्वताम्[1] **स्थिरेण आत्मना तद्वन्तः तेषाम् आत्मन्वताम्**[2]। 'अनो नुट्' (पा ८,२,१६) **इति मतुपो नुडागमः। तेषां** प्राणेन **त्वं** जीव। **किं च** मृत्योः **मारकस्य देवस्य** वशं मा उद् अगाः **मोद्गच्छ मा प्राप्नुहि।**

देवानां निर्हितं निधिं 'यमिन्द्रोऽन्वविन्दत्' पथिभिर्देवयानैः।
आपो हिरण्यं जुगुपुस्त्रिवृद्भिस्तास्त्वा रक्षन्तु 'त्रिवृता त्रिवृद्भिः' ॥ ९ ॥

देवानाम्। निऽहितम्। निऽधिम्। यम्। इन्द्रः[5]। अनुऽअविन्दत्। पथिऽभिः। देवऽयानैः। आपः। हिरण्यम्। जुगुपुः। त्रिवृत्ऽभिः। ताः। त्वा। रक्षन्तु। त्रिऽवृता[6]। त्रिवृत्ऽभिः ॥९॥

यं **प्रसिद्धं** निहितम् **निक्षेपत्वेन संगोप्य स्थापितं हिरण्याख्यं** देवानां निधिम् इन्द्रो **देवः** देवयानैः **देवमार्गैः देवा यैर्मार्गैर्गत्वा निधिं निहितवन्तस्तैः** पथिभिः **मार्गैः स्वयमपि गत्वा** अन्वविन्दत्[7] **अन्विष्य लब्धवान्। यद् देवनिधिरूपं** हिरण्यं **त्रिवृतः उक्तप्रकारेण त्रिविधा** आपः त्रिवृद्भिः **साधनैः** जुगुपुः **अरक्षन्** ताः त्रिवृतः[8] **आपः** त्रिवृद्भिः **हिरण्यरजतलोहरूपेण त्रिविधैः स्वरूपैः** त्वा त्वां रक्षन्तु **पालयन्तु।**

त्रयस्त्रिंशद् देवतास्त्रीणि च वीर्याणि प्रियायमाणा[9] जुगुपुरप्स्वन्तः[10]।
अस्मिंश्चन्द्रे अधि यद्धिरण्यं तेनायं कृणवद् वीर्याणि ॥ १० ॥

त्रयःऽत्रिंशत्। देवताः। त्रीणि। च। वीर्याणि। प्रियऽयमाणाः[11]। जुगुपुः। अप्ऽसु। अन्तः। अस्मिन्। चन्द्रे। अधि। यत्। हिरण्यम्। तेन। अयम्। कृणवत्। वीर्याणि ॥ १० ॥

**त्रयस्त्रिंशद् देवताः** 'अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च' (ऐब्रा १,१०) **इति ऐतरेयब्राह्मणे समाम्नाताः। बृहदारण्यके तु 'अष्टौ वसव एकादश** रुद्रा द्वादशादित्याः' **इत्यभिधाय** 'इन्द्रश्च[12] प्रजापतिश्च' (बृआ ३,९,२) **इति वषट्कारस्थाने इन्द्र आम्नातः। ता अत्र** त्रयस्त्रिंशद् देवताः **इत्यनेन परिगृह्यन्ते। ता देवताः** त्रीणि च वीर्याणि। **अत्र चशब्दः पूर्वमन्त्रोक्तम्** 'आपो हिरण्यं जुगुपुः'

---

१. आत्मस्वताम् S'. २. आत्मतां वा S'. ३. तु. RW. सा.; वैतु. V यमिन्द्रो°; A,B^h,C,D,K,K^m,S^m यमिंद्रा°; R,Dc यमिंद्रा°; Cs यनिंद्रा°; WM. यमिन्द्राम्व°; °विंदन् S. ४. तृवतां तृ° B^h,C; त्रिवृतास्त्रि° K,K^m,Dc; तृवृतास्त्रि° D,R,Cs; तृवृतास्तृ° S^m,V; त्रिवृतस्त्रि° पै १०,७,९. ५. तु. सा.; वैतु. P,P^2,J,WM. इन्द्रः. ६. त्रिऽवृतात् P,J; त्रिऽवृताः P^2. ७. अन्वविन्दन् S'. ८. वैतु. मंपा. ९. प्रियायमाणां A,B^h, C,D,K,K^m,R,S^m,V,Dc,Cs. १०. °प्स्वंऽन्तः A,B^h,C,D,R,Cs. ११. प्रियायऽमाणां P,P^2,J. १२. इन्द्रश्चैव निसा.

इत्युक्तं हिरण्यं समुच्चिनोति । त्रीणि वीर्याणि च कायिकवाचिकमानसभेदेन त्रिविधानि च सामर्थ्यानि प्रियायमाणाः प्रियमिव आचरन्त्यः[1] । तेषु अत्यर्थं प्रियं कुर्वाणा इत्यर्थः । अप्स्वन्तर्जुगुपुः उदकेषु मध्ये यथा अन्ये नापहरेयुस्तथा उदकेषु मध्ये गोपनम् अकुर्वन् । अस्मिन् परिदृश्यमाने चन्द्रे अधि आह्लादके उदके यत् हिरण्यम् अस्ति । अप्सु हिरण्यावस्थानं पूर्वमन्त्रे 'आपो हिरण्यं जुगुपुः' इत्याम्नानात् सिद्धम् । तेन अवस्थितेन हिरण्येन स्वमुख्यांशभूतेन अयं मणिः वीर्याणि स्वेन सह अवस्थितानि वीर्याणि त्रयस्त्रिंशद्देवतानां त्रिविधानि सामर्थ्यानि कृणवत् मणिधारके पुरुषे करोतु । यद्वा हिरण्यरजतलोहानां त्रयाणां यानि आयुर्वर्धनैश्वर्यकरत्वशत्रुजयाख्यानि अनन्यसाधारणानि त्रीणि वीर्याणि सन्ति तानि अन्येषां मा भूवन्निति बुद्ध्या प्रियायमाणाः अप्सु अन्तः गोपनम् अकुर्वन् । तानि अस्मिंश्चन्द्रे प्रसिद्धे चन्द्रमसि चन्द्रस्य अम्मयत्वात् तत्र यद्धिरण्यं निहितं तेन हिरण्येन अयं मणिः उक्तविधानि त्रीणि वीर्याणि कृणवत् इति । प्रियायमाणा इति । 'कर्तुः क्यङ् सलोपश्च' (पा ३,१,११) इति क्यङ् । 'अकृत्सार्वधातुकयोः°' (पा ७,४,२५) इति दीर्घः ।

ये दे॒वा[2] दि॒व्येका॑दश॒ स्थ ते दे॑वासो[3] ह॒विरि॒दं[4] जु॑षध्वम् ॥ ११ ॥

ये । दे॒वाः । दि॒वि । एका॑दश । स्थ । ते । दे॒वा॒सः[5] । ह॒विः । इ॒दम् । जु॒ष॒ध्व॒म् ॥ ११ ॥

ये दे॑वा अ॒न्तरि॑क्ष॒ एका॑दश॒ स्थ ते दे॑वासो ह॒विरि॒दं जु॑षध्वम् ॥ १२ ॥

ये । दे॒वाः । अ॒न्तरि॑क्षे । एका॑दश । स्थ । ते । दे॒वा॒सः । ह॒विः । इ॒दम् । जु॒ष॒ध्व॒म् ॥ १२ ॥

ये दे॑वाः पृथि॒व्यामेका॑दश॒ स्थ ते दे॑वासो ह॒विरि॒दं जु॑षध्वम् ॥ १३ ॥

ये । दे॒वाः । पृ॒थि॒व्याम् । एका॑दश । स्थ । ते । दे॒वा॒सः । ह॒विः । इ॒दम् । जु॒ष॒ध्व॒म् ॥ १३ ॥

ये देवा दिव्याः[2] दिवि भवाः । 'भवे छन्दसि' (पा ४,४,११०) इति यः । दिवि द्युलोके आदित्याख्या गणा एकादश स्थ भवथ । यद्यपि ते द्वादश तथापि एकादशत्वाभिधानं न विरुध्यते । अधिकसंख्यायां[6] न्यूनसंख्यायाः संभवात् । ते देवासः देवाः इदं हविः हूयमानम् आज्यं जुषध्वम् सेवध्वम् [११] । एवं ये देवा अन्तरिक्षे एकादश स्थ रुद्राभिधानाः ते देवासः देवाः इदं हविर्जुषध्वम् [१२] । तथा ये देवाः पृथिव्याम् एकादश स्थ भवथ । अत्रापि त्रयाणां न्यूनताम् अनादृत्य एवम् उक्तम् । गतम् अन्यत् [१३] ।

---

१. आचरन्तः S'. २. देवा दिव्या S, सा.; देवासो ऋ १,१३९,११ मा ७,१९. ३. देवा तै १,४,१०,१. ४. यज्ञमिमं ऋ. मा. तै. मै १,३,१३ काठ ४,५. ५. देवासः P. ६. °संख्याया S'.

असपत्नं पुरस्तात् पश्चान्नो अभयं कृतम्[1] ।
सविता मा दक्षिणत उत्तरान्मा शचीपतिः ॥ १४ ॥

असपत्नम् । पुरस्तात् । पश्चात् । नः । अभयम् । कृतम्[1] ।
सविता । मा । दक्षिणतः । उत्तरात् । मा । शचीऽपतिः ॥ १४ ॥

अत्र यद्यपि पुरस्तात्[2] पश्चाच्च रक्षाविषये देवते न निर्दिष्टे तथापि कृतम् इति द्विवचनसामर्थ्याद् उत्तरार्धे वक्ष्यमाणौ सवितृशचीपती परिगृह्येते । हे उक्ते देवते युवां मे[3] मह्यं पुरस्तात् पूर्वस्यां दिशि पश्चात् प्रतीच्यां च अभयम् भयराहित्यम् असपत्नं यथा भवति तथा कृतम् कृणुतम् । अथ वा पुरस्ताद् असपत्नम् सपत्नाभावं कृतं पश्चात् अभयं च कृतम् । जिगीषोः पुरतः शत्रूणाम् अभाव आशास्यः पश्चाच्च पार्ष्णिग्राहाद् भयाभावाय अभयम् आशास्यम् । अतः पुरस्ताद् असपत्नं कृणुतं पश्चाद् अभयं [4]कृणुतम् इति विभागः[4] । तथा सविता मा[5] मां दक्षिणतः दक्षिणदिक्सकाशाद् दक्षिणदिग्गताद् भयात्[6] रक्षतु इत्यध्याहर्तव्यम् । उत्तरमन्त्रे भूम्या रक्षन्त्वग्नय इति रक्षणक्रियासंबन्धात् । एवम् उत्तरात् उत्तरदिग्गताद् भयात् । 'उत्तराधरदक्षिणाद् आतिः' (पा ५,३,३४) इति आतिप्रत्ययः । [7]मा मां[7] शचीपतिः रक्षतु ।

दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नयः ।
इन्द्राग्नी रक्षतां मा पुरस्तादश्विनावभितः शर्म यच्छताम् ।
तिरश्चीनघ्न्या[8] रक्षतु जातवेदा भूतकृतो मे सर्वतः सन्तु वर्म ॥ १५ ॥

दिवः । मा । आदित्याः । रक्षन्तु । भूम्याः । रक्षन्तु । अग्नयः ।
इन्द्राग्नी इति । रक्षताम् । मा । पुरस्तात् । अश्विनौ । अभितः । शर्म । यच्छताम् ।
तिरश्चीन् । अघ्न्या । रक्षतु[9] । जातऽवेदाः । भूतऽकृतः । मे । सर्वतः । सन्तु । वर्म ॥१५॥

आदित्यानां द्युस्थानत्वाद् दिवः सकाशाद् रक्षणम् उचितम् । अग्नीनां च पृथिव्यायतनत्वात् तस्याः सकाशाद् रक्षणप्रार्थना[10] । अथ वा 'असपत्नम्' इत्यारभ्य 'रक्षन्त्वग्नयः' इत्यन्त एको मन्त्रः । तथा सति [11]रक्षन्त्विति पदम् अर्थानुसारेण[11] रक्षत्विति विपरिणमयितुं सुशकम्[12] । उत्तरत्र छन्दोऽन्तरत्वाद् नायम् अर्धर्चस्तत्र संबध्यते ।

---

१. पृ १८४७ टि ५ द्र. २. तत्पुरस्तात्तत्पुरस्तात् S'. ३. वैशु. मैपा. ४. कृणुतविभागः S'. ५. मा मा S'. ६. भयात् सविता S'. ७. यम्मां S'. ८. पृ १८४८ टि १ द्र. ९. रक्षन्तु P,P², J. १०. रक्षणा° S'. ११. °न्त्वित्यपयमर्थानु° S'. १२. सुशकः S'.

इन्द्राग्नी मा **मां** पुरस्ताद् रक्षताम् **पालयताम्। तथा** अश्विनौ **देवौ** अभितः **सर्वतः सर्वासु दिक्षु** शर्म **सुखं** यच्छताम्। **एवं** तिरश्चीन् **तिर्यगञ्चनान् अस्मान्।** [1]**तिरःपूर्वाद् अञ्चतेः क्विन्।** 'अञ्चतेश्चोपसंख्यानम्' ( पावा ४,१,६ ) **इति ङीप्।** 'अचः' ( पा ६,४,१३८ ) **इति अकारलोपः। यद्वा तिरश्चीः तिर्यग्दिशो** जातवेदाः **जातप्रज्ञो रक्षाविषयप्रज्ञावान्** अग्निः[2] रक्षतु। **तिर्यक्प्रदेशेभ्यो रक्षत्वित्यर्थः। अग्नी**[2] **रक्षतु इत्यत्र** 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' ( पा ६,३,१११ ) **इति सांहितिको दीर्घः। एवं** भूतकृतः **भूतानां पृथिव्यादीनां कर्तारः पञ्चभूताभिमानिदेवा अग्न्यादयो** मे सर्वतः वर्म **वारकं कवचं** सन्तु **भवन्तु।**

**इत्येकोनविंशे काण्डे चतुर्थेऽनुवाके प्रथमं सूक्तम्।**

'इमं बध्नामि ते मणिम्' **इति सूक्तत्रयम्** 'ऐन्द्रीं [3]जयबलवृष्टिपशुकामस्य परचक्रागमे च' ( शांक १७,२ ) **इति विहितायाम् ऐन्द्र्याख्यायां महाशान्तौ दर्भमणिबन्धने विनियुक्तम्। सूत्रितं हि शान्तिकल्पे—** "'इमं बध्नामि ते मणिं दीर्घायुत्वाय तेजसे' इति दर्भमणिम् ऐन्द्र्याम् 'अभीवर्तेन' ( अ १,२९ ) इति रथनेमिमणिं माहेन्द्र्याम्" ( शांक १९,४ ) **इति।**

**इमं बध्नामि ते मणिं दीर्घायुत्वाय तेजसे**[4] **।**
**दर्भं सपत्नदम्भनं**[5] **द्विषतस्तपनं हृदः ॥ १ ॥**

इमम्। बध्नामि। ते। मणिम्। दीर्घायुऽत्वाय। तेजसे।
दर्भम्[6]। सपत्नऽदम्भनम्। द्विषतः। तपनम्। हृदः ॥ १ ॥

**हे विजयबलादिकाम** ते **तव** इमं मणिं **दर्भमयं** बध्नामि। **किमर्थम्।** दीर्घायुष्ट्वाय[*] **यथा त्वं दीर्घायुर्भवसि तथाभावाय** तेजसे **अतिशयिततेजोलाभाय। मणिं विशिनष्टि—** दर्भम्। **विकारे प्रकृतिशब्दः। दर्भनिर्मितं**[7] **मणिं** सपत्नदम्भनम् **शत्रूणां हिंसकं सपत्नीवत् सपत्नः।** 'व्यन्सपत्ने' ( पा ४,१,१४५ ) **इति निपातनात् साधुः। दम्भनम् इति।** 'कृत्यल्युटो बहुलम्' ( पा ३,३,११३ ) **इति कर्तरि ल्युट्।** द्विषतः **द्वेषं कुर्वतः शत्रोः** हृदः **हृदयस्य** तपनं **तापकम्।**

**द्विषतस्तापयन्**[8] **हृदः**[9] **शत्रूणां तापयन् मनः।**
[10]**दुर्हार्दः सर्वांस्त्वं**[10] **दर्भ घर्म इवाभीन्त्संतापयन्**[11] **॥ २ ॥**

---

१. अ १९,१६,२ भाष्यं द्र. २. वैतु. मंपा. ३. विजय° Bol. ४. वर्चसे पै १३,११,१. ५. दर्भं स° A,B^h,C,D,K,K^m,R,S^m,Cs,WM; दर्भासपत्न° > दर्भं संपत्न° Dc; सपत्नजम्भनं पै. ६. दर्भम् P,J,WM. ७. °निर्मित S'. ८. °तस्तपनं RW. ९. हृदः D,S^m,Dc,Cs. १०. °सर्वास्त्वं > °सर्वस्त्वं A; °सर्वस्त्वं D; दुरिहादर्दुः सर्वांस्तं R,Cs; दुर्हार्दः सर्वस्त्वं S; दुर्हार्दुः इत्यत्र स्वरः? ११. °भीत्सं°, °भीत्सं° WM.; इवाभिसंतापय RW.

द्विषतः । तापयन् । हृदः । शत्रूणाम् । तापयन् । मनः ।
दुःऽहार्दः । सर्वान् । त्वम् । दर्भ । घर्मःऽइव । अभीन्[1] । सम्ऽतापयन् ॥ २ ॥

हे दर्भमणे त्वं द्विषतः द्वेषं कुर्वतः शत्रोः हृदः हृदयं तापयन् संततं कुर्वन् तथा शत्रूणां मनः च तापयन् एवं दुर्हार्दः दुष्टहृदयस्य । हृद्[2] इदं हार्दम् । 'तस्येदम्' ( पा ४,३,१२० ) इति अण् । हार्दं करोति । 'तत् करोति०' ( पावा ३,१,२६ ) इति णिच् । हार्दयतेः क्विपि 'णेरनिटि' ( पा ६,४,५१ ) इति णिलोपः । तस्य सर्वम्[3] गृहक्षेत्रपश्वादिकं घर्म इव आदित्य इव । यद्वा 'यद् [4]घ्राऽऽ इत्यपतत् तद् घर्मस्य घर्मत्वम्' ( तैआ ५,१,५ ) इति श्रुतेः घर्मः प्रवर्ग्यः । स इव अभीन् अभयान् संतापयन् भिन्द्धीति संबन्धः ।

घर्म इवाभितपन्[5] दर्भ द्विषतो नितपन्[6] मणे ।
हृदः[7] सपत्नानां भिन्द्धीन्द्र[8] इव विरुजं[9] बलम्[10] ॥ ३ ॥

घर्मःऽइव । अभिऽतपन् । दर्भ । द्विषतः । निऽतपन्[11] । मणे ।
हृदः[7] । सऽपत्नानाम्[12] । भिन्द्धि । इन्द्रःऽइव । विऽरुजन्[13] । बलम् ॥ ३ ॥

हे दर्भ । दर्भविकारे दर्भशब्दः । हे दर्भनिर्मित[14] मणे त्वं घर्म इव । उक्तो घर्मशब्दार्थः निदाघकालो वा । स इव द्विषतः द्वेषं कुर्वतः शत्रोर्हृदयम् । यद्वा । कर्मणि षष्ठी । द्विषन्तम् शत्रुम् अभितपन् अभितः संतापं कुर्वन् तथा नितपन् नितरां संतापयन् भिन्द्धि भेदं कुरु । दार्ढ्याय उक्तमेवार्थम् पुनराह — सपत्नानाम् राष्ट्रादिविषये समानः पतिर्येषां ते सपत्नाः । राष्ट्रविषये स्वेषामपि पतित्वं कामयमाना इत्यर्थः । सपत्नीव सपत्नः । 'व्यन्सपत्ने' ( पा ४,१,१४५ ) इति निपातनात् साधुः । तेषां बलम् शारीरं बाह्यं च इन्द्र इव विरुजन् स यथा शत्रूणां बलं विरुजति एवं विरुजन् नाशयन् तेषां हृदः [15]हृदयानि भिन्द्धि[15] विदारय । भिदिर् विदारणे ।

भिन्द्धि दर्भ सपत्नानां हृदयं द्विषतां मणे ।
उद्यन् त्वचमिव[16] भूम्याः शिर एषां वि[17] पातय[18] ॥ ४ ॥

---

१. वैप १,३७० c द्र. २. हृदय S'. ३. सर्वं. मंपा. ४. घ्रं S'.
५. °तर्प B,D; °तर्प K,K^m,V,Cs. ६. निशोचन् पै १३,११,३. ७. हृदः D,R,Dc, Cs,P,P², J. ८. सुपत्नानाभि° A,B^h,C,D,R,Cs,RW.; सुपत्नानां° > सुपत्नानां° Dc; सपत्नान् भि° S^m. ९. वीरुजं R,Cs; विरुजन् > विरुजं Dc; विरुजन् S,RW. १०. बलम् RW. ११. °तर्पयन् P. १२. सुऽपत्नानाम् O,D²,L; सुऽपत्नान् । आ P,J. १३. विऽरुजम् P,P¹,J. १४. °निमित्त° S'. १५. हृदयाद्विनिर्भिन्धि S'. १६. त्वचं इव Cs. १७. नि S,S'; नि वि V. १८. पातयः D.

भिन्द्धि । दर्भ । सऽपत्नानाम् । हृदयम् । द्विषताम् । मणे ।
उत्ऽयन् । त्वचम्ऽइव । भूम्याः । शिरः । एषाम् । वि । पातय ॥ ४ ॥

हे दर्भ मणे द्विषताम् द्वेषं कुर्वतां सपत्नानां हृदयं भिन्द्धि । हृदयभेदनमात्रेण अपरितुष्यन्नाह[1]—उद्यन् ऊर्ध्वं गच्छन् भुजादिप्रदेशम् अधितिष्ठन् त्वं भूम्यास्त्वचम् इव तृणगुल्मौषध्याद्यधिष्ठानभूतां यथा तक्षणेन[2] निपातयति गृहादिनिर्माणार्थं लोके एवम् एषां सपत्नानां शिरः । जात्येकवचनम् । शिरांसि वि पातय अधःपतितानि कुरु ।

भिन्द्धि दर्भ सपत्नान् मे भिन्द्धि मे पृतनायतः ।
भिन्द्धि मे सर्वान् दुर्हार्दो भिन्द्धि मे द्विषतो मणे ॥ ५ ॥

भिन्द्धि । दर्भ । सऽपत्नान् । मे । भिन्द्धि । मे । पृतनाऽयतः ।
भिन्द्धि । मे । सर्वान् । दुःऽहार्दः । भिन्द्धि । मे । द्विषतः । मणे ॥ ५ ॥

पृतनायतः पृतना सेना । ताम् आत्मन इच्छन्तः पृतनायन्तः । 'सुप आत्मनः क्यच्' ( पा ३,१,८ ) इति क्यच् । सर्वविधीनां छन्दसि विकल्पितत्वाद् 'कव्यध्वरपृतनस्यार्चि लोपः' ( पा ७,४,३९ ) इति आकारलोपाभावः[3] । तान् भिन्द्धि । भिदिर् विदारणे । दुर्हार्दः दुष्टहृदयान् । हृद इदं हार्दम् । 'तस्येदम्' ( पा ४,३,१२० ) इति अण् । हार्दं करोति । 'तत् करोति' ( पावा ३,१,२६ ) इति णिच् । हार्दयतेः क्विपि 'णेरनिटि' ( पा ६,४,५१ ) इति णिलोपः । स्पष्टम् अन्यत् ।

छिन्द्धि दर्भ सपत्नान् मे छिन्द्धि मे पृतनायतः ।
छिन्द्धि मे सर्वान् दुर्हार्दश्[4] छिन्द्धि मे द्विषतो मणे ॥ ६ ॥

छिन्द्धि । दर्भ । सऽपत्नान् । मे । छिन्द्धि । मे । पृतनाऽयतः ।
छिन्द्धि । मे । सर्वान् । दुःऽहार्दः[5] । छिन्द्धि । मे । द्विषतः । मणे ॥ ६ ॥

छिन्द्धि । छिदिर् द्वैधीकरणे । शिष्टं समानम्[6] ।

वृश्च दर्भ सपत्नान् मे वृश्च मे पृतनायतः ।
वृश्च मे सर्वान् दुर्हार्दो वृश्च मे द्विषतो मणे ॥ ७ ॥

---

१. परितु° S'. २. लक्षणेन S'. ३. अकार° S'. ४. तु. R,Cs,RW-S, पै १३,११,६ सूक्तस्य मन्त्रान्तराणि च; वैतु. शंपा. सात. °र्दान्; A दुर्हार्दो > दुर्हार्दो $B^{b}$,C,D,$K^{m}$,$S^{m}$ दुर्हार्दो; Dc दुर्हार्दं > दुर्हार्दो; R,Cs दुर्हार्दो; S दुर्हार्दः. ५. तु. मंपा.; वैतु. शंपा. °र्दान्; P,$P^{2}$ °हार्दान्; J °हार्दम्. ६. समाम्नातम् S'.

वृ॒श्च । द॒र्भ॒ । स॒ऽपत्ना॑न् । मे॒ । वृ॒श्च । मे॒ । पृ॒त॒ना॒ऽय॒तः ।
वृ॒श्च । मे॒ । सर्वा॑न् । दुः॒ऽहार्दः॑ । वृ॒श्च । मे॒ द्वि॒ष॒तः । म॒णे॒ ॥ ७ ॥

वृश्च । ओव्रश्चू[1] छेदने इति धातुः ।

कृ॒न्त द॑र्भ स॒पत्ना॑न् मे कृ॒न्त मे॑ पृतना॒य॒तः ।
कृ॒न्त मे॒ सर्वा॑न् दु॒र्हार्दः॑[2] कृ॒न्त मे॑ द्वि॒ष॒तो म॑णे ॥ ८ ॥

कृ॒न्त । द॒र्भ॒ । स॒ऽपत्ना॑न् । मे॒ । कृ॒न्त । मे॒ । पृ॒त॒ना॒ऽय॒तः ।
कृ॒न्त । मे॒ । सर्वा॑न् । दुः॒ऽहार्दः॑[3] । कृ॒न्त । मे॒ । द्वि॒ष॒तः । म॒णे॒ ॥ ८ ॥

कृन्त । कृती छेदने । 'शे मुचादीनाम्' ( पा ७,१,५९ ) इति नुम् आगमः

पिं॒श द॑र्भ स॒पत्ना॑न् मे पिं॒श[4] मे॑ पृतना॒य॒तः ।
पिं॒श मे॒ सर्वा॑न् दु॒र्हार्दः॑[5] पिं॒श[4] मे॑ द्वि॒ष॒तो म॑णे ॥ ९ ॥

पिं॒श । द॒र्भ॒ । स॒ऽपत्ना॑न् । मे॒ । पिं॒श । मे॒ । पृ॒त॒ना॒ऽय॒तः ।
पिं॒श । मे॒ । सर्वा॑न् । दुः॒ऽहार्दः॑ । पिं॒श । मे॒ । द्वि॒ष॒तः । म॒णे॒ ॥ ९ ॥

पिंश । पिश अवयवे । मुचादित्वाद् नुम् ।

'वि॒ध्य॑ द॑र्भ'[6] स॒पत्ना॑न् मे॒ वि॒ध्य॑ मे पृतना॒य॒तः ।
वि॒ध्य॑ मे॒ सर्वा॑न् दु॒र्हार्दो॑[7] वि॒ध्य॑ मे द्वि॒ष॒तो म॑णे ॥ १० ॥

वि॒ध्य॑ । द॒र्भ॒ । स॒ऽपत्ना॑न् । मे॒ । वि॒ध्य॑ । मे॒ । पृ॒त॒ना॒ऽय॒तः ।
वि॒ध्य॑ । मे॒ । सर्वा॑न् । दुः॒ऽहार्दः॑ । वि॒ध्य॑ । मे॒ । द्वि॒ष॒तः । म॒णे॒ ॥ १० ॥

विध्य । व्यध ताडने । दैवादिकः । 'ग्रहिज्या' (पा ६,१,१६ ) इत्यादिना संप्रसारणम् ।

इत्येकोनविंशे काण्डे चतुर्थेऽनुवाके द्वितीयं सूक्तम् ।

'निक्ष दर्भ' इत्यादिकं तृतीयं सूक्तम् । अस्य ऐन्द्र्यां महाशान्तौ दर्भमणिबन्धने विनियोगः पूर्वसूक्तेन सह उक्तः ।

---

१. ओ॰ नास्ति S'. २. दु. R,Cs,RW.S. पै १३,११,७; वैतु. शंपा °र्दो; A दुहार्दो > दुर्हार्दो. ३. पृ १८८६ टि ५ द्र. ४. पींष > पिंश Dc. ५. दुर्हार्दो Bh,D,Cs; दुर्हार्दो > दुर्हार्दः Dc. ६. विध्य दर्भं A,C,D,Sm,Cs; विध्य दर्भ > विध्यं दर्भं Dc. ७. दुर्हार्दो Bh.

[1]निक्ष दर्भ[1] सपत्नान् मे [2]निक्ष मे[2] पृतनायतः ।
[3]निक्ष मे[3] सर्वान् दुर्हार्दो [2]निक्ष मे[2] द्विषतो मणे ॥ १ ॥

निक्ष[4] । दर्भ । सऽपत्नान् । मे । निक्ष । मे । पृतनाऽयतः ।
निक्ष । मे । सर्वान् । दुःऽहार्दः । निक्ष । मे । द्विषतः । मणे ॥ १ ॥

निक्ष चुम्ब । निक्ष चुम्बने इति धातुः । शिष्टं पूर्ववत् ।

तृन्द्धि दर्भ सपत्नान् मे तृन्द्धि मे पृतनायतः ।
तृन्द्धि मे सर्वान् [5]दुर्हार्दस्तृन्द्धि[5] मे द्विषतो मणे ॥ २ ॥

तृन्द्धि । दर्भ । सऽपत्नान् । मे । तृन्द्धि । मे । पृतनाऽयतः ।
तृन्द्धि । मे । सर्वान् । दुःऽहार्दः[6] । तृन्द्धि । मे । द्विषतः । मणे ॥ २ ॥

तृन्द्धि नाशय । उतृदिर् हिंसानादरयोः । 'श्नसोरल्लोपः' (पा ६,४,१११) इति अकारलोपः ।

रुन्द्धि[7] दर्भ सपत्नान् मे रुन्द्धि[8] मे पृतनायतः ।
रुन्द्धि[8] मे सर्वान् दुर्हार्दो रुन्द्धि[8] मे द्विषतो मणे ॥ ३ ॥

रुन्द्धि । दर्भ । सऽपत्नान् । मे । रुन्द्धि । मे । पृतनाऽयतः ।
रुन्द्धि । मे । सर्वान् । दुःऽहार्दः । रुन्द्धि । मे । द्विषतः । मणे ॥ ३ ॥

रुन्द्धि आवृणु निरोधं कुरु । रुधिर् आवरणे ।

मृण[9] दर्भ सपत्नान् मे मृण[9] मे पृतनायतः ।
मृण[9] मे सर्वान् दुर्हार्दो मृण[9] मे द्विषतो मणे ॥ ४ ॥

मृण । दर्भ । सऽपत्नान् । मे । मृण । मे । पृतनाऽयतः ।
मृण । मे । सर्वान् । दुःऽहार्दः । मृण । मे । द्विषतः । मणे ॥ ४ ॥

मृण । मृण हिंसायाम् ।

---

१. निक्ष दर्भ A,B^h,C,D,R,S^m,Cs,WM.; निक्ष दर्भ > निक्षं दर्भ Dc. २. निक्ष मे A,B^h,C,D,R,S^m,Cs. ३. निक्ष मे A,B^h,C,D,R,S^m,Cs. ४. निक्ष P,J. ५. दुर्हार्दो तृन्धि A,B^h,C,K^m,S^m,V; दुर्हार्दो तृन्धि D,Cs; दुर्हार्दो° > दुर्हार्दो° Dc. ६. °हार्दम् P,P^2; °हार्दस् J. ७. मकृन्धि पै १३,११,१२; रुन्धि WM. ८. मकृन्धि पै. ९. मृद पै १३,११,१३.

[1]मन्थ दर्भ सपत्नान् मे मन्थ मे[1] पृतनायतः ।
[2]मन्थ मे सर्वान् दुर्हार्दो मन्थ मे[2] द्विषतो मणे ॥ ५ ॥

मन्थ[3] । दर्भ । सऽपत्नान् । मे । मन्थ[3] । मे । पृतनाऽयतः ।
मन्थ[3] । मे । सर्वान् । दुःऽहार्दः । मन्थ[3] । मे । द्विषतः । मणे ॥ ५ ॥

मन्थ । मन्थ विलोडने । गतम् अन्यत् ।

पिण्ड्ढ दर्भ सपत्नान् मे पिण्ड्ढ मे पृतनायतः ।
पिण्ड्ढ मे सर्वान् दुर्हार्दः पिण्ड्ढ मे द्विषतो मणे ॥ ६ ॥

पिण्ड्ढ । दर्भ । सऽपत्नान् । मे । पिण्ड्ढ । मे । पृतनाऽयतः ।
पिण्ड्ढ । मे । सर्वान् । दुःऽहार्दः । पिण्ड्ढ । मे । द्विषतः । मणे ॥ ६ ॥

पिण्ड्ढ । पिष्लृ संचूर्णने । रौधादिकः । 'हुझल्भ्यो हेर्धिः' ( पा ६,४,१०१ ) इति धिः । ष्टुत्वं जश्त्वं च ।

ओषं दर्भ सपत्नान् मे[4] ओषं मे पृतनायतः ।
ओषं मे सर्वान् दुर्हार्द ओषं मे द्विषतो मणे ॥ ७ ॥

ओषं । दर्भ । सऽपत्नान् । मे । ओषं । मे । पृतनाऽयतः ।
ओषं[5] । मे । सर्वान् । दुःऽहार्दः । ओषं । मे । द्विषतः । मणे ॥ ७ ॥

ओष । उष प्लुष दाहे । भौवादिकः । लघूपधगुणः[6] ।

[7]दह दर्भ[7] सपत्नान् मे दह मे पृतनायतः ।
दह मे सर्वान् दुर्हार्दो दह मे द्विषतो मणे ॥ ८ ॥

दह[8] । दर्भ । सऽपत्नान् । मे । दह[8] । मे । पृतनाऽयतः ।
दह[8] । मे । सर्वान् । दुःऽहार्दः । दह[8] । मे । द्विषतः । मणे ॥ ८ ॥

स्पष्टम् ।

---

१. मुन्थ दर्भ सुपत्नान्मे मुन्थ में A,D,S^m,Cs; मुन्थ द° > मन्थ द° Dc. २. मुन्थ मे सर्वान् दुर्हार्दो मुन्थ में A,C,D,S^m; मुन्थ मे सर्वान् दुर्हार्दो मुन्थ में > मन्थ मे सर्वान् दुर्हार्दो मन्थ मे Dc. ३. मुन्थ P,J. ४. मु K^m,V,WM., मे > मु Dc. ५. ओष P. ६. °गुणाभावः S'. ७. दुह दर्भ B^h,C,D,R,S^m,Cs; दुह दर्भ > दह दर्भ Dc. ८. दुह P,WM.

जहि दर्भ सपत्नान् मे [1]जहि मे पृतनायतः ।
जहि मे सर्वान्[2] दुर्हार्दो जहि मे द्विषतो मणे ॥ ९ ॥

जहि । दर्भ । सऽपत्नान् । मे । जहि । मे । पृतनाऽयतः ।
जहि । मे । सर्वान् । दुःऽहार्दः । जहि । मे । द्विषतः । मणे ॥ ९ ॥

जहि । हन हिंसागत्योः । लोटि 'हन्तेर्जः' ( पा ६,४,३६ ) इति जादेशः । आभाच्छास्त्रीयस्य असिद्धत्वाद् 'अतो हेः' ( पा ६,४,१०५ ) इति हेर्लुक् न भवति ।

इति चतुर्थेनुवाके तृतीयं सूक्तम् ।

'यत् ते दर्भ' इति चतुर्थं सूक्तम् । तस्य ऐन्द्र्याख्यायां महाशान्तौ दर्भमणिबन्धने विनियोगः पूर्वसूक्तेन सह उक्तः ।

यत् ते दर्भ [3]जरामृत्युः शतं वर्मसु[†] वर्म[4] ते ।
तेनेमं वर्मिणं कृत्वा सपत्नाञ् जहि वीर्यैः ॥ १ ॥

यत् । ते । दर्भ । जराऽमृत्युः । शतम् । वर्मऽसु । वर्म । ते ।
तेन । इमम् । वर्मिणम् । कृत्वा । सऽपत्नान् । जहि । वीर्यैः ॥ १ ॥

हे दर्भ ते तव मर्मसु[4] ग्रन्थिषु यत् जरामृत्युशतम्[4] जरसां मृत्यूनां च शतम् । वर्तत इति शेषः । शतशब्दः अपरिमितवचनः । परुषाम् अपरिमितत्वात् । प्रतिपर्वविच्छेदस्य सुकरत्वात् जरामृत्युशतास्पदत्वं दर्भस्य[5] । यच्च ते तव वर्म जरामृत्युपरिहारकं कवचम् अस्ति तेन मर्मगतजरामृत्युशतपरिहारकेण वर्मणा इमं तव धारकं रक्षाजयादिकामं पुरुषं वर्मिणम् आमुक्तवर्माणं कृत्वा वीर्यैः परकृतोपद्रवपरिहारशत्रुविजयकरणादिलक्षणैः सामर्थ्यैः सपत्नान् अमुष्य राज्ञः शत्रून् जहि पराभव नाशय ।

शतं ते दर्भ वर्माणि[6] सहस्रं वीर्याणि ते ।
तमस्मै[7] विश्वे त्वां देवा जरसे भर्तवा अदुः ॥ २ ॥

शतम् । ते । दर्भ । वर्माणि । सहस्रम् । वीर्याणि । ते ।
तम्[8] । अस्मै । विश्वे[9] । त्वाम् । देवाः । जरसे । भर्तवै[10] । अदुः ॥ २ ॥

---

१. द्विः P. २. तु. मन्त्रान्तराणि पपा.; वैतु शंपा. सात. °र्वा. ३. °मृत्युशतं° S, सा. °मृत्यु शतवर्म सुवर्म W. †. वर्मसु B[k]. ४. वैतु. मंपा. ५. दर्भस्य······अस्ति रिक्ते स्थाने S' शीर्णा उपषोडशा वर्णाः शंगा. न्यस्ताः. ६. मर्माणि S, सा. ७. त्वमस्मै A,B[b],C,R,V,Cs, पै १३,११,२० ( मूको. ); त्वमस्मै > तमस्मै Dc. ८. त्वम् P,P,J. ९. विश्वे P. १०. भर्त्तवै P.

हे दर्भ मणिरूप ते तव मर्माणि[1] पर्वाणि परकृतपीडाविषयभूतानि शतं सन्ति। तत्परिहाराय ते तव वीर्याणि सामर्थ्यान्यपि सहस्रम् सहस्रसंख्याकानि सन्ति। तं तादृशं मर्मशताच्छादनसाधनवीर्योपेतं त्वाम् अस्मै रक्षादिकामाय राज्ञे विश्वे सर्वे देवाः जरसे जरानिमित्तम्[2] अस्य जरापरिहाराय भर्तवै भरणाय पोषणाय प्रयोजनाय अदुः दत्तवन्तः। अतः अमुष्य जरां परिहृत्य भरणं कुर्वित्यर्थः। भर्तवै। तवैप्रत्ययः।

त्वामा॑हुर्दे॒ववर्म॑[3] "त्वां द॑र्भ॒[4] ब्रह्म॑ण॒स्पति॑म् ।
त्वामिन्द्र॑स्याहु॒र्वर्म॒ त्वं रा॒ष्ट्राणि॑ रक्षसि ॥ ३ ॥

त्वाम् । आ॒हुः । दे॒व॒ऽवर्म॑[5] । त्वाम् । द॒र्भ॒ । ब्रह्म॑णः । पति॑म् ।
त्वाम् । इन्द्र॑स्य । आ॒हुः । वर्म॑ । त्वम् । रा॒ष्ट्राणि॑ । र॒क्ष॒सि॒ ॥ ३ ॥

हे दर्भ मणे त्वां देववर्म आहुः देवानां रक्षणार्थं कवचम् आहुः। तथा त्वां ब्रह्मणस्पतिम् वेदस्य पालयितारम् एतन्नामानं देवम् आहुः वेदविदितस्यापि रक्षाकारित्वात्। किं च त्वाम् इन्द्रस्य देवाधिपतेरपि वर्म कवचम् आहुः। देवा बृहस्पतिर् (? ब्रह्मणस्पतिर्) इन्द्रश्च त्वां स्वस्वरक्षार्थं धारयन्ति इत्यभिप्रायः। यत एवम् अतः त्वं राष्ट्राणि त्वां धारयतो राज्ञो राज्यानि रक्षसि पालयसि पालय।

स॒प॒त्न॒क्षय॑णं दर्भ द्वि॒ष॒तस्तप॑नं हृ॒दः ।
म॒णिं क्ष॒त्रस्य॒ वर्ध॑नं[6] तनू॒पानं॑ कृणोमि ते ॥ ४ ॥

स॒प॒त्न॒ऽक्षय॑णम् । द॒र्भ॒ । द्वि॒ष॒तः । तप॑नम् । हृ॒दः[7] ।
म॒णिम् । क्ष॒त्रस्य॑ । व॒र्ध॑नम् । त॒नू॒ऽपान॑म् । कृ॒णो॒मि॒ । ते॒ ॥ ४ ॥

हे दर्भ ते त्वा त्वां सपत्नक्षयणम् शत्रूणां नाशकम्। 'कृत्यल्युटो बहुलम्' (पा ३,३,११३) इति कर्तरि ल्युट्। तथा द्विषतः द्वेष्टुः हृदः हृदयस्य तपनम् संतापकं क्षत्रस्य "बलस्य वर्धनम् वर्धकम्"[8]। तथा तनूपानम् तन्वाः शरीरस्य पातारं रक्षितारम् एवंमहानुभावं मणिं कृणोमि करोमि। अथवा रक्षाकामः पुरुषः संबोध्यते— हे राजन् दर्भमणिं[9] सपत्नक्षयणादिसामर्थ्योपेतं ते तुभ्यं क्षत्रस्य वर्धनं तनूपानं च कृणोमीति संबन्धनीयम्।

यत् स॑मु॒द्रो[10] अ॒भ्यक्र॑न्दत् प॒र्जन्यो॑ वि॒द्युता॑ स॒ह ।
ततो॑ [11]हिर॒ण्ययो॑ बिन्दु॒स्ततो॑[11] द॒र्भो अ॑जायत ॥ ५ ॥

---

१. वैतु. मंपा.	२. जरामित्त S'.	३. °वैंबवर्म A,Bh,C,D,R,Sm,Cs,WM.
४. त्वामाहुर् S.	५. देवऽवर्म P,J.	६. वृबस्य पै १३,११,२२.	७. हृदः Pᵉ.
८. बलवर्धनं वधवर्धकम् S'.	९. ते दर्भं° S'.	१०. संमुद्रे RW.	११. हिरुण्ययो बिंदु° A,Bh,C,D,R,Sm,Cs,WM.; हिरुण्ययो बिंदु° > हिरुण्ययों बिंदु° Dc.

यत् । सुमुद्रः । अभिऽअक्रन्दत् । पर्जन्यः । विऽद्युता । सह ।
ततः । हिरण्ययः । बिन्दुः[1] । ततः । दर्भः । अजायत ॥ ५ ॥

यत् **यस्मिन् स्थाने** समुद्रः **समुद्द्रवन्ति अस्माद् आप इति समुद्रः। तादृशः** पर्जन्यः **मेघो** विद्युता सह अभ्यक्रन्दत् **अभिक्रन्दनं स्तननम् अकार्षीद् वृष्ट्युत्पादनाय**[2] ततः **अभिक्रन्दतो मेघात्** हिरण्ययो **हिरण्मयो** बिन्दुः **उद्भूत्।** ततः **तस्माद् उत्पन्नात् हिरण्यबिन्दोः सकाशाद्** दर्भो अजायत **प्रादुर्बभूव। अनेन दर्भोत्पत्तिवर्णनेन दर्भमयस्य मणेरतिशयितवीर्यत्वम् उक्तं भवति। हिरण्यय इति।** 'ऋत्व्यवास्त्व्यवास्त्व' ( पा ६,४,१७५ ) **इत्यादिना हिरण्यमयशब्दस्य मयटो मकारलोपो निपातितः।**

**इति चतुर्थेऽनुवाके चतुर्थं सूक्तम्।**

'औदुम्बरेण' **इत्यादिकं पञ्चमं सूक्तम्। अस्य** 'कौबेरीं धनकामस्य धनक्षये[3] च' ( शां‍क १७,३ ) **इति विहितायां कौबेर्याख्यायां महाशान्तौ औदुम्बरमणिबन्धने विनियोगः। उक्तं शान्तिकल्पे—**" 'औदुम्बरेण मणिना पुष्टिकामाय वेधसा' इत्यौदुम्बरं कौबेर्याम्" ( शां‍क १९,४ ) **इति।**

**औदुम्बरेण मणिना पुष्टिकामाय वेधसा[4]।**
**पशूनां[5] सर्वेषां स्फातिं गोष्ठे मे सविता करत् ॥ १ ॥**

औदुम्बरेण । मणिना । पुष्टिऽकामाय । वेधसा ।
पशूनाम्[5] । सर्वेषाम् । स्फातिम् । गोऽस्थे । मे । सविता । करत् ॥ १ ॥

औदुम्बरेण **उदुम्बरनिर्मितेन** मणिना। 'तस्य विकारः' ( पा ४,३,१३४ ) **इति अण्प्रत्ययः।** पुष्टिकामाय **पशुपुत्रधनशरीरादिविषयं पोषं कामयमानाय पुरुषाय तदर्थं** वेधसा **विधात्रा पुरा प्रयोगः कृतः। यद्वा वेधसा पुष्ट्यादिविधात्रा कर्त्रा मणिना पुष्टिकामाय तव रक्षां करोमीति व्याख्येयम्। अतः सर्वेषां गोमहिषाश्वाजगजादिरूपाणां** पशूनाम्। **चतुष्पादाः पशवः। तेषाम्। अथवा द्विपादश्चतुष्पादश्च पशवः। उभयविधानां परिग्रहाय सर्वेषाम् इत्युक्तम्। तेषां** स्फातिम्। **स्फायी वृद्धौ। क्तिनि यलोपः। अभिवृद्धिं** मे **मम** गोष्ठे **गवां निवासस्थाने।** 'घञर्थे कविधानम्' ( पावा ३,३,५८ ) **इति अधिकरणे कप्रत्ययः।** 'अम्बाम्बगोभूमि' ( पा ८,३,९७ ) **इत्यादिना मूर्धन्यादेशः।** सविता **प्रसविता सर्वस्य अनुज्ञाता प्रेरकः एतन्नामको देवः** करत् **कुर्यात्। करोतेः पञ्चमलकारः।** 'सविता वै प्रसवानाम् ईशे' ( ऐब्रा १,१६) **इत्यादिश्रुतेः सवितुः सर्वस्य प्रेरकत्वाद्** 'देवो वः सविता प्रार्पयतु' ( तै १,१,१,१ )

---

१. बिंदुः P. २. वृष्ट्युत्पा° S'. ३. क्षये S'. ४. वेधसे W.
५. ॰ त्रु. RW.WM.; वैत्रु. शंपा. सात. पशूनां ( पपा. पशूनाम् ).

इति गवां व्याघ्रतस्करादिकृतनाशपरिहाराय प्रार्पणप्रार्थनश्रुतेश्च[1] सवितुः सर्वपशुस्फातिप्रार्थना युक्ता ।

यो नो॑ अ॒ग्निर्गार्ह॑पत्यः पशू॒नाम॑धि॒पा अस॑त् ।
औदु॑म्ब॒रो वृषा॑ म॒णिः सं[2] मा॑ [3]सृजतु पु॒ष्ट्या[3] ॥ २ ॥

यः । न॒ः । अ॒ग्निः । गार्ह॑ऽपत्यः । प॒शू॒नाम् । अ॒धि॒ऽपाः । अस॑त्[4] ।
औदु॑म्बरः । वृषा॑ । म॒णिः । सम्[5] । मा॒ । सृ॒ज॒तु॒ । पु॒ष्ट्या[5] ॥ २ ॥

यो गार्हपत्योऽग्निः । गृहपतिना यजमानेन सह[6] संयुक्तोऽग्निर्गार्हपत्यः । यस्तत्संज्ञकोऽग्निरस्ति । 'गृहपतिना संयुक्ते ञ्यः' ( पा ४,४,९० ) इति ञ्यः । स नः अस्माकं पशूनाम् गवाश्वादीनाम् अधिपाः अधिष्ठाय पाता असत् भवेत् । अस्तेर्लेटि अडागमः । 'इह पशवो विश्वरूपा रमन्ताम् अग्निं गृहपतिम् अभिसंवसानाः' ( तैब्रा ३,७,४,५ ) इति मन्त्रवर्णाद् अग्निहोत्रे 'पशून् मे यच्छ' ( आश्रौ २,३,१७ ) इति गार्हपत्यप्रार्थनाविधानाच्च पशूनाम् आधिपत्यं तस्य सिद्धम् । अतः गार्हपत्योऽग्निः पशून् पालयतु चोरादिभयेभ्यः । औदुम्बरः उदुम्बरविकारो वृषा अभिमतफलवर्षको मणिः पुष्ट्या पोषेण[7] शरीराभिवृद्ध्या आ[8] सर्वतः सं सृजतु । पशूनां पुष्टिं करोत्वित्यर्थः । 'ऊर्ग् वा उदुम्बरः' ( तै २,१,१,६ ) इति श्रुतेः अन्नरूपत्वात् पोषकत्वं तस्य युक्तम् ।

क॒रीषिणीं॑ फल॑वतीं स्व॒धामिरां॑ च नो गृ॒हे ।
औदु॑म्बरस्य[9] तेज॑सा धा॒ता [10]पुष्टिं॑ द॑धातु[10] मे[11] ॥ ३ ॥

क॒रीषिणी॑म् । फल॑ऽवतीम् । स्व॒धाम् । इरा॑म् । च॒ । न॒ः । गृ॒हे ।
औदु॑म्बरस्य । तेज॑सा । धा॒ता । पु॒ष्टिम् । द॒धा॒तु॒ । मे॒ ॥ ३ ॥

करीषिणीम् करीषो गवां शकृत् । प्रभूतेन करीषेण तद्वतीम् । अनेन गवां समृद्धिरुक्ता भवति तदभावे करीषाभावात् । तादृशीं स्वधाम् । अन्नमेतत् । स्वस्मिन् धीयत इति व्युत्पत्तेः । व्रीहियवादिलक्षणम् अन्नं फलवतीम् प्रकृष्टेन फलेन उपेताम् इरां च भूमिमपि । अथवा इरा इला गौः । जात्येकवचनम् । गावः । अत्र करीषिणीं फलवतीम् इति विशेषणद्वयं स्वधाम् इरां च उभयमपि विशिनष्टि । उभयत्रापि संबन्धयोग्यतासंभवात् । नः अस्माकं गृहे । करत्

---

१. प्रापण° S'. २. तु. सा. RW. पै १०,५,२; वैदु. शंपा. सात. स (पपा. सः). ३. °तु पुष्ट्यां K,Km,V,WM.; °तु पुष्ट्या > °तु पुष्ट्यां Dc. ४. असुत् P. ५. पुष्ट्यां P¹. ६. सत्यं S'. ७. पोषण S'. ८. वैदु. मंपा. ९. औदुम्ब° Bh. १०. पुष्टिं द° K,Km,V,WM.; पुष्टिं दं° > पुष्टिं द° Dc. ११. वै D.

इति संबन्धः । औदुम्बरस्य उदुम्बरविकारस्य मणेः तेजसा सामर्थ्येन धाता सर्वस्य विधाता एवंनामको देवः पुष्टिम्[1] शरीरादिपोषं मे मम दधातु स्थापयतु । करोत्वित्यर्थः ।

यद् द्विपाच्च चतुष्पाच्च [2]यान्यन्नानि ये रसाः[2] ।
गृह्णे३हं[3] त्वेषां[4] भूमानं बिभ्रदौदुम्बरं मणिम् ॥ ४ ॥

यत् । द्विऽपात्[5] । च । चतुःऽपात् । च । यानि । अन्नानि । ये । रसाः[6] ।
गृह्णे । अहम् । तु । एषाम्[7] । भूमानम् । बिभ्रत् । औदुम्बरम् । मणिम् ॥ ४ ॥

द्विपात् पादद्वयोपेतं पुरुषादिकं यत् पशुजातम् अस्ति । यत् च चतुष्पात् पादचतुष्टयोपेतं गवादिकम् अस्ति । उभयत्र 'संख्यासुपूर्वस्य' (पा ५,४,१४०) इति पादस्य लोपः समासान्तः । 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' (पा ६,२,१९७) इति द्विपाच्छब्दस्य अन्तोदात्तत्वम् । चतुष्पाद् इति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यानि च अन्नानि तिलमाषव्रीहियवप्रियङ्ग्वादीनि ग्राम्याणि अन्नानि । यानि[8] च अरण्यजानि अन्नानि ये च रसाः दधिक्षीरमधुगुडादिरूपाः सन्ति एषाम्[9] उक्तानां सर्वेषां भूमानम् बहुभावम् । बहुशब्दाद् इमनिचि 'बहोर्लोपो भू च बहोः' (पा ६,४,१५८) इति इमनिच आदिलोपो बहोर्भूभावश्च । औदुम्बरं मणिं बिभ्रद् अहं गृह्णे स्वीकरोमि भजामि ।

पुष्टिं पशूनां परि जग्रभाहं चतुष्पदां द्विपदां यच्च धान्यम् ।
पयः पशूनां रसमोषधीनां बृहस्पतिः सविता मे नि यच्छात् ॥ ५ ॥

पुष्टिम्[10] । पशूनाम् । परि । जग्रभ । अहम् । चतुःऽपदाम् । द्विऽपदाम्[11] । यत् । च । धान्यम् ।
पयः । पशूनाम् । रसम् । ओषधीनाम् । बृहस्पतिः । सविता । मे । नि । यच्छात् ॥५॥

अहं पशूनां द्विपदां चतुष्पदां च यच्च धान्यम् व्रीहियवादिरूपं तस्यापि पुष्टिम् पोषं परि जग्रभ परिग्रहं करोमि । ग्रहेश्छान्दसे लिटि उत्तमैकवचने णलि 'णलुत्तमो वा' (पा ७,१,९१) इति णित्त्वस्य विकल्पितत्वाद् वृद्ध्यभावः । किं च सविता सर्वस्य अनुज्ञाता बृहस्पतिः देवः पशूनाम् गोमहिष्यादीनां पयः तथा ओषधीनाम् व्रीह्यादीनां रसम् [12]सारभूतम् अंशं[12]

---

१. मे पुष्टिम् S'. २. यान्यन्नानि ये रसा Sm,Dc,WM.; [या] न्यन्यानि ये रसा Cs; यान्यन्यानि ये रसा R. ३. गृह्णेहं D,R,Sm,Cs; गृह्णीयां पै १०,५,४. ४. त्वेषां K,Km,V,WM.; त्वेषां > त्वेषां Dc; तेषां RW. पै. ५. द्विपात P,P². ६. रसा > रसाः J. ७. एषाम् P,J,WM. ८. यानि यानि S'. ९. तेषाम् S'. १०. पुष्टिम् P². ११. °पादाम् P. १२. सारभूतमंशं S'.

मे मह्यं नि यच्छात्। औदुम्बरस्य तेजसा इति शेषः। प्रयच्छतु। यम उपरमे। लेटि 'इषुगमियमां छः' (पा ७,३,७७) इति छादेशः। आडागमः।

अहं पशूनामधिपा असानि[1] मयि पुष्टं पुष्टपतिर्दधातु।
मह्यमौदुम्बरो मणिर्द्रविणानि नि यच्छतु ॥ ६ ॥

अहम्। पशूनाम्। अधिऽपाः। असानि[1]। मयि। पुष्टम्। पुष्टऽपतिः। दधातु।
मह्यम्। औदुम्बरः। मणिः। द्रविणानि। नि। यच्छतु ॥ ६ ॥

अहं पुष्टिकामः पशूनाम् द्विपदां चतुष्पदां[2] च अधिपाः अधिष्ठाय पालकः स्वामी असानि भवानि। अधिपूर्वात् पातेर्विच्। असानीति। अस्तेर्लोटि 'आडुत्तमस्य पिच्च' (पा ३,४,९२) इति आडागमः। तदर्थं मयि पुष्टिकामे पुष्टम्[3] पोषं पश्वादेः समृद्धिम्[4]। 'नपुंसके भावे क्तः' (पा ३,३,११४) इति क्तः। तत् पुष्टपतिः पश्वादिपोषस्वामी औदुम्बरो मणिः दधातु प्रयच्छतु। एवं मह्यम् औदुम्बरो मणिः द्रविणानि हिरण्यानि नि यच्छतु नियमयतु प्रयच्छतु। 'मह्यमौदुम्बरः' इति अर्धर्चः उत्तरमन्त्रे वा द्रष्टव्यः।

[5]उप मौदुम्बरो[6] मणिः प्रजया च धनेन च।
इन्द्रेण जिन्वितो[7] मणिरा मागन्त्सह वर्चसा ॥ ७ ॥

उप। मा। औदुम्बरः। मणिः। प्रऽजया। च। धनेन। च।
इन्द्रेण। जिन्वितः[7]। मणिः। आ। मा। अगन्। सह। वर्चसा ॥ ७ ॥

मा माम् औदुम्बरो मणिः प्रजया पुत्रपौत्रादिरूपया च धनेन हिरण्यादिलक्षणेन गवादिरूपेण च सह उप। उपसर्गश्रुतेः सामर्थ्याद् आगच्छिति आकृष्यते। आगमत्। एवं स मणिः इन्द्रेण जिन्वितः प्रीणितः प्रेरितः वर्चसा अस्मदभिमतेन तेजोविशेषेण सह मा माम् आगन् आगमत्। जिन्वित इति। इवि जिवि धिवि प्रीणनार्थाः। धातूपदेशावस्थायामेव नुमागमः। कर्मणि निष्ठायाम् इडागमः। इदित्त्वाद् नकारलोपाभावः। अगच्छिति। गमेर्लुङि 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक्। 'मो नो धातोः' (पा ८,२,६४) इति नत्वम्।

देवो मणिः सपत्नहा धनसा धनसातये।

---

१. तु. A,B^b,C,D,K,K^m,R,Dc,Cs,P,P^s,J,RW.; वैतु. S^m, शंपा. असा° (पपा. असानि)। २. चतुष्पदां S'. ३. पुष्टिम् S'. ४. समृद्धम् S'. ५. उपमौदु° A,B^h,R; उपमौदु° D; उपमोदु° Dc. ६. तु. RW. सा.; वैतु. A,B^b,C,D,K,K^m,R, S^m,V,Dc,C^s,WM. पै १०,५,७ (मूको.) जिन्वतो. ७. तु. मंपा.; वैतु. P,P^s,J जिन्वतः.

पशोरन्नस्य भूमानं 'गवां स्फातिं नि' यच्छतु ॥ ८ ॥

देवः । मणिः । सपत्नऽहा । धनऽसाः[२] । धनऽसातये ।

पशोः[३] । अन्नस्य । भूमानम् । गवाम् । स्फातिम्[४] । नि । यच्छतु ॥ ८ ॥

देवः **द्योतमानो** मणिः **औदुम्बरः । पुष्ट्यर्थं देवैर्निर्मितत्वाद् देव इत्युच्यते । तादृशो मणिः** सपत्नहा **सपत्नानां हन्ता तथा** धनसाः[५] **धनानाम् अस्मदभिलषितानां साता दाता । वन षण संभक्तौ ।** 'जनसनखनक्रमगमो विट्' ( पा ३,२,६७ )। 'विड्वनोरनुनासिकस्यात्' ( पा ६,४,४१ ) **इति आत्त्वम् । एवंरूपो मणिः** धनसातये **धनानां लाभाय भवतु ।** 'जनसनखनां सञ्झलोः' ( पा ६,४,४२ ) **इति आत्त्वम् । किं च** पशोः अन्नस्य **च** भूमानम् **बहुभावं समृद्धिं नि यच्छतु । तथा** गवां स्फातिम् **अभिवृद्धिं च** नि यच्छतु[६] **। यद्यपि पशुभूम्नैव गोस्फातिरप्युक्ता तथापि गवाम् अतिशयेनोपयोगात् प्राधान्याय पुनरभिधानम् ।** 'देवा वा ऊर्जं व्यभजन्त । तत उदुम्बर उदतिष्ठन्' ( तैब्रा १,१, ३, १० ) **इति श्रुतेः ऊर्क्संबन्धाद् अन्नसमृद्धिकारकत्वम् ।**

यथाग्रे त्वं "वनस्पते पुष्ट्या" सह जज्ञिषे[८] ।

एवा धनस्य 'मे स्फातिमा' दधातु[१०] सरस्वती ॥ ९ ॥

यथा । अग्रे । त्वम् । वनस्पते । पुष्ट्या[११] । सह । जज्ञिषे[१२] ।

एव । धनस्य । मे । स्फातिम्[१३] । आ । दधातु । सरस्वती ॥ ९ ॥

**हे** वनस्पते **वनस्य पालक औदुम्बरमणे । विकारे प्रकृतिशब्दः ।** त्वं यथा अग्रे **ओषधिवनस्पतिसृष्टिसमये** पुष्ट्या **पोषेण** सह **उत्पत्तिसमय एव** जज्ञिषे **उत्पन्नोऽसि एव एवं** मे धनस्य स्फातिम् **अभिवृद्धिं त्वया साधनभूतेन सह** सरस्वती **सरणवती वाग्देवी** आ दधातु **करोतु । आङ्पूर्वो दधातिः करोत्यर्थे वर्तते । एवा धनस्येत्यत्र** 'निपातस्य च' ( पा ६,३,१३६ ) **इति सांहितिको दीर्घः ।**

आ मे धनं सरस्वती पयस्फातिं[१४] च धान्यम् ।

[१५]सिनीवाल्युपा वहादयं[१६] चौदुम्बरो मणिः ॥ १० ॥

---

१. गवां स्फातिर्नि A,Bh,C,D,R,Sm; गवां स्फातिर्नि > गवां स्फातिं नि Dc; गवां स्फातिं न V,K. २. धनसा P,P², J. ३. पशो: P. ४. स्फातिः P; स्फातिः P²; स्फातिम् > स्फातिः J. ५. धनसा S'. ६. यच्छति S'. ७. °पते पुष्ट्या K,Km,V; °पते पुष्ट्या > °पते पुष्ट्या Dc. ८. जज्ञिषे A,Bh,C,D,K,Km,R,V, Dc,Cs. ९. मे स्फातिमा A,Bh,C,D,R,Sm; मे स्फातिमा > मे स्फातिमा Dc. १०. दधाति पै १०,५,९. ११. पुष्ट्या P. १२. जज्ञिषे P,J. १३. स्फातिम् P; स्फातिम् J. १४. गयस्फातिं RW. १५. तु. सा. RW.; वैतु. शंपा. °ल्युपा वहा°; A,Bh °ल्युपा° > °ल्युपा°; °वहद° पै १०,५,१०.

आ । मे । धनम् । सरस्वती । पयःऽस्फातिम्[1] । च । धान्यम् ।
सिनीवाली । उप । आ । वहात्[2] । अयम् । च । औदुम्बरः । मणिः ॥ १० ॥

सरस्वती देवी मे मम धनम् हिरण्यादिलक्षणं पयस्फातिम् पयसोऽभिवृद्धिं च । अनेन पयसोऽभिवृद्धिप्रार्थनेन गोसमृद्धिः प्रार्थिता भवति । तथा धान्यं च । व्रीहियवादीनाम् ओषधीनां फलानि धान्यानि । अत्र जातावेकवचनम् । आ इति उपसर्गश्रुतेः वहत्विति योग्यक्रियाध्याहारः । एवं सिनीवाली देवता च । 'दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता' ( तु. अको १,४,९ ) इति श्रुतेः दृष्टचन्द्रामावास्याभिमानिदेवता सिनीवाली । सा च धनादिकम् उप वहात् । अयं धार्यमाण औदुम्बरो मणिः च उपा वहात् उपावहतु प्रापयतु । वह प्रापणे । लेटि आडागमः । अथवा सरस्वती मे धनम् हिरण्यरजतमणिमुक्तादिलक्षणं हस्तेन धारणयोग्यम् आ गमयतु । पयस्फातिं धान्यं च सिनीवाली औदुम्बरो मणिश्च उपा वहात् समीपदेशं प्रापयतु इति व्यवस्था ।

त्वं मणीनामधिपा वृषासि त्वयि पुष्टं पुष्टपतिर्जजान[3] ।
त्वयीमे वाजा द्रविणानि[4] सर्वौदुम्बरः[5] स त्वमस्मत्[6] सहस्वारादरातिममतिं[7] क्षुधं[8] च ॥ ११ ॥

त्वम् । मणीनाम् । अधिऽपाः । वृषा । असि । त्वयि । पुष्टम् । पुष्टऽपतिः । जजान ।
त्वयि । इमे इति (?) । वाजाः । द्रविणानि । सर्वा । औदुम्बरः । सः । त्वम् । अस्मत् ।
सहस्व । आरात् । अरातिम् । अमतिम्[9] । क्षुधम् । च ॥ ११ ॥

हे औदुम्बर मणे त्वं मणीनाम् इतरेषां रक्षासमृद्धिजयादिसाधनानां दर्भादिनिर्मितानाम् अधिपः[10] स्वामी वृषा अभिमतफलवर्षिता च असि । अधिपत्वे कारणम् आह — यतः त्वयि पुष्टम् गवाश्वादीनां सर्वेषां पोषं पुष्टपतिः[11] सर्वपदार्थपोषकर्ता[12] प्रजापतिः जजान उदपादयद् अकरोत् । अतः मणीनाम् अधिपो[10] वृषा चासि । अस्तु किं तत इत्यत आह — त्वया[10] सर्वसमृद्ध्यास्पदभूतेन मे[10] मह्यं वाजाः 'अन्नं वै वाजः' ( तै ५,४,६,६ ) इति श्रुतेः बहुविधानि अन्नानि सर्वा सर्वाणि द्रविणानि द्रावयितव्यानि हिरण्यरजतादीनि । सर्वशब्देन मणिमुक्ताप्रवालादिलक्षणानि परिगृह्यन्ते । संभवन्तु इति शेषः । हे औदुम्बर[10] स तादृशः वाजद्रविणादिसाधकः त्वम् अस्मत् अस्मत्तः सहस्व अभिभव अपगमय अभिभाव्यानि ।

---

१. पयःऽफातिम् WM. २. तु. मंपा.; वैतु. शंपा. वहात्; P,P[1],J अववहात्. ३. पुष्टिं पुष्टिपतिं° पै १०,५,११. ४. वाजा द्रविणा D; वाजा द्रविणा S[m]; वाजा° Cs. ५. °र RW. पै. ६. त्वमस्मत् A,B[b],D. ७. °रातिमवृतं A,B[b],C,D,K[m],R,S[m], Dc,Cs; °रातिमवर्तिं RW.; °रातिममीर्ति पै. ८. क्षयं पै. ९. अमूर्तम् P,P[1],J. १०. वैतु. मंपा. ११. पुष्टिपतिः S'. १२. °र्ता स्वा S'.

कानीत्याकाङ्क्षायाम् उच्यते — आराद् अरातिम् इति । आरात् अत्यन्तं दूर एव अरातिम् अदानम् अलाभम् अमतिम् दारिद्र्यं मत्यभावं बुद्धिभ्रंशं वा क्षुधम् अशनाभावम् एतत् सर्वम् अस्मत् आरादेव सहस्व ।

ग्रामणीरसि ग्रामणीरुत्थायाभिषिक्तोऽभि[1] मा सिञ्च[2] वर्चसा ।
तेजोऽसि तेजो मयि धारयाधि रयिरसि रयिं मे[3] धेहि ॥ १२ ॥

ग्रामऽनीः[4] । असि । ग्रामऽनीः । उत्थाय । अभिऽसिक्तः । अभि । मा । सिञ्च । वर्चसा । तेजः । असि । तेजः । मयि । धारय । अधि । रयिः । असि । रयिम् । मे । धेहि ॥१२॥

हे औदुम्बर त्वं ग्रमणीरसि । ग्रामं नयतीति ग्रामणीः ग्रामस्वामी । स यथा प्रधानभूतः एवं त्वं सर्वेषां मणीनां प्रधानभूतोऽसि । अतः अस्माकमपि ग्रामणीः भव । अभिमतफलप्रापको भवेत्यर्थः । अथवा मामपि श्रेष्ठं कुरु । त्वं वर्चसा अभिषिक्तः असि अभित आच्छन्नोऽसि । मा मामपि वर्चसा अभि षिञ्च अभिषिक्तं कुरु । हे मणे त्वं तेजोऽसि साक्षात् तेजोरूपोऽसि अतः मयि तेजो धारय । किं च त्वम् अधिरयिः[5] अधिगतरयिः प्राप्तधनः असि । रयिं मे धेहि स्थापय प्रयच्छ । रयिर्धनम् । रातेर्दानकर्मणः ।

'पुष्टिरसि पुष्ट्या' मा समङ्ग्धि' गृहमेधी गृहपतिं मा कृणु ।
औदुम्बरः[8] स त्वमस्मासु[9] धेहि रयिं च नः सर्ववीरं नि यच्छ रायस्पोषाय प्रति मुञ्चे अहं त्वाम् ॥ १३ ॥

[10]पुष्टिः । असि । पुष्ट्या[10] । मा । सम् । अङ्ग्धि[11] । गृहऽमेधी । गृहऽपतिम् । मा । कृणु । औदुम्बरः । सः । त्वम् । अस्मासु । धेहि । रयिम् । च । नः । सर्वऽवीरम् । नि । यच्छ । रायः । पोषाय । प्रति । मुञ्चे । अहम् । त्वाम् ॥ १३ ॥

अयमौदुम्बरो मणिर्वीरो [12]"वीराय बध्यते"[12] ।
स [13]"नः सनिं"[13] मधुमतीं कृणोतु रयिं च नः सर्ववीरं नि यच्छात् ॥१४॥

अयम् । औदुम्बरः । मणिः । वीरः । वीराय । बध्यते । सः । नः । सनिम् । मधुऽमतीम् । कृणोतु । रयिम् । च । नः । सर्वऽवीरम् । नि । यच्छात् ॥ १४ ॥

---

१. °रुक्थ्यांया° A; °रुत्थाऽया° > °रुक्थ्याऽया° Dc; °रुत्थ्याया° D,R,S[m]; °रुक्थ्यांया K[m],V; °रुत्थ्यांया° Cs; रुच्छ्याया° WM.; °णीछाया° (? °णीरुच्छ्यन्मामपि श्रेष्ठं कुरु ) S; °णीश्छाया° पै १०,५,१२ (मूको.). २. षिञ्च A,D,K[m],S[m],V,Dc. ३. मयि पै १०, ५,१२. ४. ग्रामणीः P,P[2],J. ५. वैतु. मंपा. ६. पुष्टिरसि पुष्ट्या K,K[m],V,Dc ७. समिन्धि B[h],C,R. ८. °रु WM. RW. पै १०,५,१३. ९. त्वमस्मा° A,B[h], D,S[m]. १०. पुष्टिः । असि । पुष्ट्या P[2]. ११. इन्धि P,P[2],J. १२. वीरायो-च्यते पै १०,५,१४. १३. नः सनिं K,K[m],V; नेः सनिं > नः सनिं Dc.

हे मणे त्वं साक्षात् पुष्टिः पुष्टिरूपः असि । अतः पुष्ट्या पोषेण मा मां समङ्ग्धि सम्यग् अक्तं कुरु । समृद्धं कुरु । तथा गृहमेधी त्वम् असि । मा मां गृहपतिम् धनकनकादिसमृद्धस्य [1]गृहस्य स्वामिनं सोमयागादिकर्मानुष्ठातारं वा कृणु कुरु । हे औदुम्बर[2] मणे स तादृशः उक्तविधनानाधर्मोपेतः त्वम्[3] त्वयि विद्यमाना ये ग्रामणीत्ववर्चस्वित्वतेजोरूपत्वाधिरयित्वादयो धर्माः सन्ति तान् सर्वान् अस्मासु धेहि स्थापय । किंच नः अस्माकं सर्ववीरम् सर्वे वीराः पुत्रभृत्यादयो यस्यां रय्यां तुष्यन्ति तादृशं रयिम् धनं च नि यच्छ प्रयच्छ । यद्वा[4] सर्ववीरं यथा भवति तथा रयिं प्रयच्छेत्यर्थः । हे मणे अहं धनादिपुष्टिकामः त्वा त्वाम् रायस्पोषाय धनानां पुष्ट्यै । 'षष्ठ्याः पतिपुत्र' ( पा ८,३,५३ ) इत्यादिना सत्वम्[5] । प्रति मुञ्चे बध्नामि । प्रतिमोको बन्धनम् । 'रुक्मम् अन्तरं प्रति मुञ्चते' ( तै ५,१,१०,३ ) इत्यादिश्रुतेः [१३] । एतदेव परोक्षेण पुनरभिधीयते फलान्तरसंबन्धाय । अयं [6]वीरः विविधम् ईरयति अमित्रान् इति वीरः । तादृशः औदुम्बरो मणिः वीराय वीरत्वाय यथा स्वयं वीरो भवति तथाभावाय बध्यते । स तादृशो मणिः नः अस्माकं मधुमतीम् । मधुवद् उपयुज्यमानत्वं मधुशब्देन उच्यते । तद्वतीं सनिम् धनादिलब्धिं कृणोतु करोतु । तथा नः अस्माकं रयिं च सर्ववीरं यथा भवति तथा । अतिप्रभूतम्[7] इत्यर्थः । यद्वा पुत्रादयो वीराः । तैः सहितं यथा भवति तथा रयिं नि यच्छात् पुत्रादीन् रयिं च नियच्छत्वित्यर्थः [१४] ।

इति चतुर्थेऽनुवाके पञ्चमं सूक्तम् ।

'शतकाण्डो दुश्च्यवनः' इत्यादिकं षष्ठं सूक्तम् । तस्य 'याम्यां यमभये' ( शाक १७,४ ) इति विहितायां याम्याख्यायां महाशान्तौ दर्भमणिबन्धनं कुर्यात् । सूत्रितं हि शान्तिकल्पे — " 'नेच्छत्रुः' ( अ २,२७ ) इति पाटामूलम्[8] अपराजितायाम्, 'शतकाण्डो दुश्च्यवनः' इति दर्भमणिं [9]याम्याम्" ( शाक १९,६ ) इति ।

श॒तका॑ण्डो दुश्च्यव॒नः[10] [11]स॒हस्र॑पर्ण उत्ति॒रः[11] ।
द॒र्भो य उ॒ग्र ओष॑धि॒स्तं[12] ते॑ बध्ना॒म्यायु॑षे ॥ १ ॥

श॒त॒ऽका॑ण्डः । दु॒ःऽच्य॒व॒नः । स॒ह॒स्र॑ऽपर्णः । उ॒त्ऽति॒रः[13] ।
द॒र्भः । यः । उ॒ग्रः । ओष॑धिः । तम्[14] । ते॒ । ब॒ध्ना॒मि॒ । आयु॑षे ॥ १ ॥

अनेन दर्भस्य मणिसाधनभूतस्य स्वरूपाधानपूर्वकं मृत्युभयपरिहाराय मणि-

---

१. सर्वदा गृहस्य S'.　२. बहु. मंगा.　३. त्वमस्मास्वपि S'.　४. रयिं S'.
५. सत्वं त्वा S'.　६. वीरः औदुम्बरो मणिर्वीराय विविधमीरयति अमित्रानिति वीरः । ताद-शोमणिविराय S'.　७. °भूताम् S'.　८. पृ २४१ टि १ द्र.　९. याम्यायाम् Bol.
१०. दुश्चव॒नः A,D,R,Cs,WM.; दुश्चव॒नः > दुश्च्यव॒नः Dc.　११. 'पर्ण उत्त॒रः K,V; °पर्ण॒ उत्त॑रः RW. सा.; °उत्त॒रः > °उत्ति॒रः R.　१२. °स्तत् K[m],V,WM.; °स्तं > °स्तत् Dc.　१३. उ॒त्ऽत॒रः > उ॒त्ऽति॒रः J.　१४. तम् > तत् P.

रूपेण बन्धनम् अभिधीयते । शतकाण्डः । शतशब्दः अपरिमितवचनः । अनेकैः काण्डैः पर्वभिर्युक्तः । दश दशतः परिमाणम् अस्येति अर्थे 'पङ्क्ति०' ( पा ५,१,५९ ) इति दशानां शभावः तश्च प्रत्ययो निपातितः । दुश्च्यवनः । च्युङ् प्रुङ् गतौ । 'छन्दसि गत्यर्थेभ्यः' ( पा ३,३,१२९ ) इति युच् । दुःखेन[1] च्यावनीयः न केनापि च्याव्यः सहस्रपर्णः अनेकैः पत्रैर्युक्तः । उत्तरमन्त्रे अच्छिन्नपर्णेन दर्भेण इति पर्णानाम् आवश्यकत्वाभिधानाद् अत्र सहस्रपर्ण इति विशेषितः । उत्तरः[2] उत्कृष्टतरः सर्वेषामप्योषधीनां मध्ये अतिशयितवीर्यः । उद्ः सुबन्तत्वात् तरप् । अस्य तथात्वम् उत्तरत्र दर्शयिष्यते । एवंलक्षण[3] उग्रः उद्गूर्णबलः ओषधिः ओषधिविशेष इति विशेषितरूपो यो दर्भः तेन[3] दर्भेण हे मृत्युभयार्दित पुरुष त्वां बध्नामि बन्धनं करोमि । किमर्थम् । आयुषे शतसंवत्सरलक्षणायुरर्थम् ।

नास्य॒ केशा॑न् प्र व॑पन्ति॒ नोर॑सि[4] ताड॒मा घ्न॑ते ।
य॒स्मा॑ अच्छिन्नप॒र्णेन॑ द॒र्भेण॒ [5]शर्म॑ यच्छ॑ति[5] ॥ २ ॥

न । अ॒स्य॒ । केशा॑न् । प्र । व॒प॑न्ति॒ । न । उर॑सि[6] । ताड॑म् । आ । घ्न॒ते॒ ।
य॒स्मै॑ । अच्छि॑न्नऽप॒र्णेन॑ । द॒र्भेण॑ । शर्म॑ । य॒च्छ॑ति[5] ॥ २ ॥

अस्य केशान् शिरोरुहान् न प्रवपन्ति न आकर्षन्ति मृत्युदूताः रक्षःपिशाचाद्या वा । तथा अमुम् उरसिताडम्[7] उरस्ताडयित्वा न आ घ्नते न हिंसन्ति मृत्युदूताद्याः । 'हिंसार्थानां च समानकर्मकाणाम्' ( पा ३,४,४८ ) इति[7] तृतीयान्ते उपपदे[8] विहितो णमुल् सप्तम्युपपदेपि व्यत्ययेन निष्पन्नः । 'तत्पुरुषे कृति बहुलम्' ( पा ६,३,१४ ) इति अलुक्[9] । आ घ्नते इति । 'आङो यमहनः' ( पा १,३,२८ ) इति अस्वाङ्गकर्मकेपि आत्मनेपदम् । अस्येति उक्तं कस्य इत्यत आह – यस्मै[10] मृत्युभयार्दिताय पुरुषाय अच्छिन्नपर्णेन दर्भेण दर्भमणिबन्धनं कृत्वा शर्म सुखं यच्छति प्रयोक्ता । अस्येति पूर्वत्र संबन्धः ।

दि॒वि ते॒ तूल॑मोषधे[11] [12]पृथि॒व्याम॑सि॒ निष्ठि॑तः[12] ।
त्वया॑ स॒हस्र॑काण्डे॒नायुः॒ प्र व॑र्धयामहे ॥ ३ ॥

दि॒वि । ते॒ । तूल॑म् । ओष॑धे॒ । पृ॒थि॒व्याम् । अ॒सि॒ । निःऽस्थि॑तः ।
त्वया॑ । स॒हस्र॑ऽकाण्डेन । आयुः॑ । प्र । व॒र्धया॑म॒हे॒ ॥ ३ ॥

---

१. उत्तर· दुःखेन S′. २. वंतु. मंपा ३. एवंलक्षणः यो दर्भः S′. ४. नोरसि॒ A,B^h,C,D,R,S^m,WM.; नोरसि॒ > नोर॑सि॒ Dc. ५. तु. W. सात°.; वंतु. शंपा. प्रभृ. शर्मं यच्छति; शर्म यच्छतु पै १२,४,२. ६. उ॒रसि॑ J ७. इति मणिं बिभ्रतः पुरुषस्य S′. ८. °पदेपि S′. ९. लुक् S′. १०. अस्मै S′. ११. मूर्ध्नो° RW.; वैप १,१४९३ g अपि द्र. १२. °व्यामधि निष्ठिता पै १५,४,३.

हे ओषधे शतकाण्डाख्य ते तव तूलम् अग्रं दिवि द्युलोके । तावत्पर्यन्तं तवोर्ध्वाभिवृद्धिरित्यर्थः । पृथिव्याम् भूम्यां कृत्स्नेनात्मना विष्ठितः[1] विविधम् अवस्थितः असि । सर्वां पृथिवीम् आक्रम्य अवस्थित इत्यर्थः । एवं द्यावापृथिवीव्यापिना त्वया[2] सहस्रकाण्डेन अनेककाण्डोपेतेन अस्य मृत्युभीतस्य आयुः प्र वर्धयामहे प्रकर्षेण अभिवृद्धं कुर्मः ।

तिस्रो दिवो[3] "अत्यतृणत् तिस्र"[4] "इमाः पृथिवीरुत"[5] ।
त्वयाहं दुर्हार्दो जिह्वां नि तृणद्मि वचांसि[6] ॥ ४ ॥

तिस्रः । दिवः[7] । अति । अतृणत्[8] । तिस्रः । इमाः । पृथिवीः । उत ।
त्वया । अहम् । दुःऽहार्दः । जिह्वाम् । नि । तृणद्मि । वचांसि ॥ ४ ॥

हे शतकाण्डाख्यौषधे त्वं तिस्रो दिवः त्रिविधान्[9] द्युलोकान् भोक्तृणाम् उत्तममध्यमाधमभेदेन त्रैविध्यात् तद्भोगस्थानस्य द्युलोकस्यापि त्रित्वम् । एवं वक्ष्यमाणायाः पृथिव्या अपि द्रष्टव्यम् । अत्यतृणः[1] अतिक्रम्य गतवान् असि । वेष्टितवान् असीत्यर्थः । उत अपि च इमाः परिदृश्यमानाः तिस्रः पृथिवीः अपि अत्यतृणः । एवंमहानुभावेन त्वया अहं दुर्हार्दः दुर्हृदयस्य शत्रोः जिह्वां नि तृणद्मि वेष्टयामि । तस्य वचांसि च वेष्टयामि बन्धयामि । यस्त्वं[10] कृत्स्नां द्यावापृथिवीम् आक्रान्तोसि तादृशेन अतिवीर्येण त्वया शत्रोर्जिह्वां वाचश्च बध्नामि । उतृदिर् हिंसानादरयोः । रौधादिकः । 'हल्ङ्या' ( पा ६,१,६८ ) इत्यादिना सिपो[11] लोपः ।

"त्वमसि सहमानोहमस्मि[12] सहस्वान्"[†] ।
"उभौ सहस्वन्तौ भूत्वा सपत्नान्"[13] सहिषीवहि[14] ॥ ५ ॥

त्वम् । असि । सहमानः । अहम् । अस्मि । सहस्वान् ।
उभौ । सहस्वन्तौ । भूत्वा । सऽपत्नान् । सहिषीवहि[12] ॥ ५ ॥

हे शतकाण्डाख्यौषधे त्वं सहमानासि[†] शत्रूणां सहनशीला भवसि । अहं च सहस्वान् शत्रुहिंसासाधनबलोपेतः अस्मि । सह इति बलनामसु पाठात् । अतिशयेन

---

१. वैतु. मंपा. २. तेन S'. ३. दिवो RW. ४. अत्यतृणस्तिस्र S. ५. द्यां पृथिवीमुत पै १२,४,४. ६. वचांसि च RW. पै. ७. दिवः P. ८. अतृणत् P. ९. त्रिविधान् S'. १०. यतस्त्वं S'. ११. सिपो S'. १२. अहमस्मि सहमानाथ ( °थो अ. ) त्वमसि सासहिः ऋ १०,१४५,५ अ ३,१८,५. † °मानोयम° D; °मानाहम° S'. १३. उभे सहस्वती भूत्वी ( °त्वा अ. ) सपत्नीं मे ऋ. अ. १४. तु. RW. पै १२,४,५; वैतु. शं ग. सा. °षीमहि ( पपा. °षीमहि ); सहावहै ऋ. अ.

शत्रूणां सोढास्मीत्यर्थः । उभौ सहस्वन्तौ सहनधर्मकौ भूत्वा सपत्नान् अस्मदीयान् शत्रून् सहिषीमहि अभिभवेम । षह मर्षणे । आशीर्लिङि रूपम् ।

सहस्व नो अभिमातिं सहस्व पृतनायतः ।
सहस्व सर्वान् दुर्हार्दः सुहार्दो मे बहून्[1] कृधि ॥ ६ ॥

सहस्व । नः । अभिऽमातिम् । सहस्व । पृतनाऽयतः ।
सहस्व । सर्वान् । दुःऽहार्दः । सुऽहार्दः । मे । बहून् । कृधि ॥ ६ ॥

हे शतकाण्डौषधे नः अस्माकम् अभिमातिम् अभिहिंसकं[2] शत्रुं पापं वा । 'पाप्मा वा अभिमातिः' ( तै २,१,३,५ ) इति श्रुतेः । सहस्व अभिभव । तथा पृतनायतः पृतन्यतः पृतना सेना ताम् आत्मन इच्छतः । मया सह योद्धुम् इति शेषः । तांश्च[3] सहस्व अभिभव । किं बहुना । सर्वान् दुर्हार्दः दुर्हृदयान् सहस्व । एवं कृत्वा[4] मे सुहार्दः सुहृदयान् बहून् कृधि कृणु । सर्वान् मयि अनुकूलान् कुर्वीत्यर्थः ।

दर्भेण देवजातेन[5] 'दिवि ष्टम्भेन[6]' शश्वदित् ।
तेनाहं शश्वतो जनाँ[7] असनं[8] सनवानि च ॥ ७ ॥

दर्भेण । देवऽजातेन[9] । दिवि । स्तम्भेन । शश्वत् । इत् ।
तेन । अहम् । शश्वतः । जनान्[9] । असनम्[10] । सनवानि । च ॥ ७ ॥

देवजातेन देवेभ्यः सकाशाद् उत्पन्नेन दिविष्टम्भेन[11] द्युलोकस्य अधःपाताभावाय स्तम्भकेन द्युलोकस्य स्तम्भभूतेन वा एवंविधेन तेन दर्भेण शश्वदित् सर्वदा अहं शश्वतः नित्यान् दीर्घजीविनो जनान् असनम् अलभे अपि च सनवानि लभै[12] । षणु दाने । तानादिकः । लोटि 'आडुत्तमस्य पिच्च' ( पा ३,४,९२ ) इति आडागमः ।

प्रियं[13] मा दर्भ कृणु ब्रह्मराजन्याभ्यां[14] शूद्राय[15] चार्याय च ।
यस्मै[16] च कामयामहे सर्वस्मै च विपश्यते[17] ॥ ८ ॥

---

१. बहुं A,C,D,K$^{m}$,R,V,Dc,WM.; बहु S$^{m}$. २. भि नास्ति S'. ३. तंच S'. ४. कृता S'. ५. °जातेनं A,B$^{h}$,C,D,R,S$^{m}$,Cs,P,J; देवजातेनं > देवजातेन Dc. ६. दिविष्टम्भेन RW. सा. ७. जना C,D,R,K$^{m}$,S$^{m}$,V,Cs; जनान् S. ८. असंना A,B$^{h}$,C,D,K,K$^{m}$,RW.; असंनान्स V; असंना S$^{m}$; असंनौं Dc. ९. जनाः P,P$^{2}$,J. १०. असनाम् P,P$^{2}$,J. ११. वैतु. मंपा. १२. लभे S'. १३. प्रयं A. १४. °राजन्याभ्यां K,K$^{m}$,V. १५. तु. K$^{m}$,V,WM. सा. मा २६,२ पै १२,४,८; वैतु. A,B$^{h}$,C,D,R,Cs, WM. सूर्याय; Dc सूर्याय > शूद्राय. १६. अस्मै C. १७. तु. RW.; वैतु. A,B$^{h}$,C,D,K$^{m}$,R,V,Cs विपश्युते; Dc विपंश्यते > विपश्युते; S$^{m}$ विपश्यते.

प्रियम् । मा । दुर्भ । कृणु । ब्रह्मऽराजन्याभ्याम् । शूद्राय[1] । च । आर्याय । च ।
यस्मै । च । कामयामहे । सर्वस्मै । च । विऽपश्यते[2] ॥ ८ ॥

हे दर्भ मा मां त्वां धारयमाणं ब्रह्मराजन्याभ्यां ब्राह्मणक्षत्रियाभ्याम् वर्णाभ्यां प्रियं कृणु कुरु । ब्राह्मणानां क्षत्रियाणां च यथाहं प्रियो भवामि तथा मां कुर्वित्यर्थः । अनेन तेषां वशीकरणं प्रार्थितं भवति । तथा शूद्राय च आर्याय च । जात्यभिप्रायम् इदम् । शूद्राणाम् आर्याणां च मां प्रियभूतं कुरु । किं च यस्मै अनुलोमेषु प्रतिलोमेषु च जातीयेषु मध्ये यस्मैयस्मै प्रियभावं कामयामहे तस्मै सर्वस्मै विपश्यते पापम् अन्विष्यते पुरुषाय मां प्रियं[3] कुरु ।

यो जायमानः पृथिवीमदृंहद् यो अस्तभ्नादन्तरिक्षं[4] दिवं च ।
यं [5]बिभ्रतं ननु[5] पाप्मा विवेद[6] स नोऽयं दर्भो [7]वरुणो दिवाकः[7] ॥९॥

यः । जायमानः । पृथिवीम् । अदृंहत् । यः । अस्तभ्नात् । अन्तरिक्षम् । दिवम् । च ।
यम् । बिभ्रतम् । ननु । पाप्मा । विवेद । सः । नः । अयम् । दर्भः । वरुणः । दिवा । कः ॥ ९ ॥

यो दर्भः शतकाण्डाख्यो जायमानः प्रादुर्भवन्नेव पृथिवीं सर्वाम् अदृंहत् दृढां कृतवान् । दृह दृहि वृद्धौ । यथा अप्सु विलीना न भवति तथा स्वमूलेन भुवं दृढां चकारेत्यर्थः । यः च जातमात्रः सन् स्वकाण्डैः अन्तरिक्षम् अन्तरा क्षान्तं भवतीति अन्तरिक्षम् । तथा दिवम् द्योतमानं द्युलोकं च अस्तभ्नात् स्तब्धवान् । यथा ते न निपतेतां तथा तस्तम्भ[8] । यम् उक्तलक्षणं शतकाण्डदर्भमणिं बिभ्रतम् धारयन्तं [9]पाप्मा ननु विवेद[9] न जानाति । न स्पृशतीत्यर्थः । स तादृशः अयं वरुणः अन्धकारनिवारको दर्भो नः अस्माकं दिवा प्रकाशम् अकः[10] करोतु । लुङि 'मन्त्रे घस'[0] ( पा २,४,८० ) इति च्लेर्लुक् ।

सपत्नहा शतकाण्डः सहस्वानोषधीनां[11] प्रथमः सं बभूव ।
स नोऽयं दर्भः परि पातु विश्वतस्तेन साक्षीय पृतनाः पृतन्यतः[12] ॥१०॥

सपत्नऽहा । शतऽकाण्डः । सहस्वान्[13] । ओषधीनाम् । प्रथमः । सम् । बभूव ।
सः । नः । अयम् । दर्भः । परि । पातु । विश्वतः । तेन । साक्षीय । पृतनाः । पृतन्यतः[14] ॥१०॥

---

1. तु. मंपा.; वैतु. P,P² सूर्याय; J सूर्याय. 2. तु. मंपा.; वैतु. P,J वि । पश्यते; P² विऽपश्यते. 3. विप्रियं S'. 4. ॰क्ष्यं A. 5. बिभ्रतं नानु RW.; ॰तनु O. 6. स्वरः ?; विवेद RW.WI. 7. वरणोऽधिवाकः RW.; वरुणोऽधिवाकः W. वै १२,४,९. 8. स्तंभ S'. 9. पाप्मानमेव वद S'. 10. वैतु. मंपा. 11. तु. RW. सा. पै १२,४,१०; वैतु. S^m,V ॰स्वानौ; A,B^b,C,D,K^m,R.Dc,Cs ॰स्वनौ. 12. पृतन्यतः R. 13. तु. मंपा.; वैतु. J ॰स्वान् > ॰स्वना; P,P² ॰स्वना. 14. पृतन्यतः P.

सपत्नहा सपत्नानाम्। सपत्नीवत् सपत्नः। एकस्मिन्[1] विषये समानपतित्वम् इच्छतां शत्रूणां हन्ता शतकाण्डः शतसंख्याकैरनेकैः काण्डैरुपेतः सहस्वान् सहो बलं तद्वान् एवंमहानुभावः ओषधीनाम् इतरासां "प्रथमः मुख्यः" प्रथमभावी वा। अतिशयितवीर्यत्वात्। 'प्रथम इति मुख्यनाम। प्रतमो भवति' इति निरुक्तम् (२,२२)। एवंभूतः सन् सं बभूव। स तादृशः संभूतः अयं दर्भो नः अस्मान् विश्वतः सर्वतः सर्वाभ्यो दिग्भ्यस्तज्जन्येभ्यो भयेभ्यः परि पातु परिरक्षतु। तेन दर्भमणिना पृतन्यतः पृतनां सेनाम् इच्छतः शत्रोः पृतनाः सेनाः साक्षीय अभिभवानि। पृतन्यत इति। पृतनाशब्दात् क्यचि 'कव्यध्वरपृतनस्यर्चि लोपः' (पा ७,४,३९) इति आकारलोपः। साक्षीयेति। षह अभिभवे। अस्मात् लिङि 'सिब्बहुलं छन्दसि णित्' (पावा ३,१,३४) इति सिप्। णिद्भावाद् उपधावृद्धिः।

इति चतुर्थेऽनुवाके षष्ठं सूक्तम्।

'सहस्रार्घः शतकाण्डः' इति सप्तमं सूक्तम्। अस्य याम्यां महाशान्तौ दर्भमणिबन्धने विनियोगः पूर्वसूक्तेन सह उक्तः।

सहस्रार्घः[3] शतकाण्डः पयस्वानपामग्निर्वीरुधां[4] राजसूयम्।
स नोयं दर्भः परि पातु विश्वतो देवो[5] मणिरायुषा सं सृजाति[6] नः ॥१॥

सहस्रऽअर्घः[7]। शतऽकाण्डः। पयस्वान्। अपाम्। अग्निः। वीरुधाम्। राजऽसूयम्। सः। नः। अयम्। दर्भः। परि। पातु। विश्वतः। देवः। मणिः। आयुषा। सम्। सृजाति। नः॥

सहस्रार्घः बहुमूल्यः शतकाण्डः अनेककाण्डोपेतः। शतम् इति। दश दशतः परिमाणम् अस्येति दशानां शभावः तश्च प्रत्ययो निपातितः। सहस्वान्[8] बलवान् अपाम् उदकानाम् अग्निः अग्निस्थानीयः। 'अग्नेरापः' (तैआ ८,१,१) इति श्रुतेः। अपां स्रष्टेत्यर्थः। यद्वा अपां शोषको वा। वीरुधाम् लतादीनां राजसूयम्। राजसूयकर्मवत्प्रशस्त इत्यर्थः। यथा राजसूययागः सर्वेषां राज्ञां स्वामिनः सार्वभौमस्य विषयः। यद्वा इतरेषां[9] यागानां मध्ये श्रेष्ठत्वात् प्रशस्तः तथायं [10]वीरुधां मध्ये प्रशस्तभूत[10] इति राजसूयस्थानीयत्वम्। 'राजसूयसूर्य' (पा ३,१,११४) इत्यादिना क्यबन्तो राजसूयशब्दो निपातितः। स तादृशः अयं दर्भः नः अस्मान् विश्वतः परि पातु परितो रक्षतु। स देवः देवसृष्टः मणिः नः अस्मान् आयुषा सं सृजाति संसृजेत्।

[11] घृतादुल्लुप्तो[12] मधुमान् पयस्वान्[11] [13]भूमिदृंहोच्युतश्च्यावयिष्णुः[14]।

१. ए नास्ति S'. २. प्रथमः प्रथममुख्यः S'. ३. स्वरः ?; सहस्रार्घः A,B[b],C,D,R,Cs, RW.; सहस्रार्घः > सहस्रार्घः Dc; सहस्रार्घ्यः पै १२,५,१. ४. °वीरुधं R,Cs. ५. दैवो पै. ६. सृजातु पै. ७. सहस्रऽअर्घः P,J. ८. वैतु. मेपा. ९. वितरेषां S'. १०. वीरुधामग्रप्रशस्त° S'. ११. अ ५,२८,१४ द्र. १२. °दुर्लुप्तो S; °दुल्लुप्तो पै १२,५,२. १३. पयु° A. १४. दृंहोच्युत° A,R; दृहोच्युत° K[m],S[m]; दृंहमच्युत° K,V; °ष्णु K,K[m],V.

नुदन्त्सपत्नानधरांश्च कृण्वन् 'दर्भा रोह' महतामिन्द्रियेण ॥ २ ॥

घृतात् । उत्ऽलुप्तः । मधुऽमान् । पयस्वान् । भूमिऽदृंहः । अच्युतः । च्यावयिष्णुः ।
नुदन् । सऽपत्नान् । अधरान् । च । कृण्वन्[2] । दर्भ । आ । रोह । महताम् । इन्द्रियेण ॥

घृतात् आज्यात् हुतशिष्टात् उत्लुप्तः[3] उद्धिप्तः संपातावनयनेन सर्वतोऽक्तः[4] । [5]'आज्यबन्ध्याप्लवनयानभक्ष्याणि[5] संपातवन्ति' (कौसू. ७,१५) इति परिभाषितत्वाद् घृताक्तत्वम् । मधुमान् माधुर्योपेतः पयस्वान् प्रभूतक्षीरो भूमिदृंहः भूम्याः स्वमूलैर्दृढीकर्ता अच्युतः च्युतिर्नाशस्तद्रहितः बहुधा छिन्नस्यापि पुनःप्ररोहदर्शनात् । च्यावयिष्णुः दृढस्यापि शत्र्वादेश्च्यावनशीलः एवंगुणोपेत हे दर्भ मणे त्वं सपत्नान् शत्रून् नुदन् सुदूरं प्रेरयन् तानेव[6] अधरान् निकृष्टान् बलहीनान् च कृण्वन् कुर्वन् महताम् महत्त्वोपेतानाम् अतिशयितवीर्याणाम् अन्येषाम् ओषधीनाम् इन्द्रियेण इन्द्रस्वरूपेन सामर्थ्येन सहितः सन् आ रोह भुजादिप्रदेशम् अधितिष्ठ ।

त्वं भूमिमत्येष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे ।
त्वां "पवित्रमृषयोभरन्त त्वं पुनीहि" दुरितान्यस्मत् ॥ ३ ॥

त्वम् । भूमिम् । अति । एषि । ओजसा । त्वम् । वेद्याम् । सीदसि । चारुः । अध्वरे ।
त्वाम् । पवित्रम् । ऋषयः । अभरन्त[8] । त्वम् । पुनीहि । दुःऽइतानि । अस्मत् ॥ ३ ॥

हे मणिभूत दर्भ त्वम् ओजसा बलेन भूमिम् अत्येषि अतिगच्छसि । तथा चारुस्त्वम्[9] अध्वरे ध्वरो हिंसा तद्रहितः अध्वरो यागः । न हि यागं कुर्वन् विनश्यति स्वर्गादिफलसाधनत्वात् । तस्मिन् वेद्यां सीदसि निषण्णो भवसि हविरासादनार्थम् । किं च पवित्रम् शोधकं त्वाम् । 'पवित्रं वै दर्भाः । पुनात्येवैनम्' (तैब्रा १,३,७,१) इति श्रुतेः । ऋषयः अतीन्द्रियद्रष्टारः स्वपावनार्थम् अभरन्त आहृतवन्तः । यस्माद् एवं तस्मात् त्वं दुरितानि दुष्कृतानि अस्मत् अस्मत्तः सकाशात् पुनीहि पावय च्यावय ।

तीक्ष्णो राजा विषासही रक्षोहा विश्वचर्षणिः ।
ओजो[10] देवानां बलमुग्रमेतत् तं[11] ते बध्नामि जरसे स्वस्तये ॥ ४ ॥

तीक्ष्णः । राजा । विऽससहिः । रक्षःऽहा । विश्वऽचर्षणिः ।
ओजः[12] । देवानाम् । बलम् । उग्रम् । एतत् । तम् । ते । बध्नामि । जरसे । स्वस्तये ॥ ४ ॥

---

१. दर्भारोह $B^h$,C,$S^m$. २. कृण्वत् P; कृण्वम् > कृण्वत् J. ३. उल्लुप्तः S'. ४. सर्वतोक्तः S'. ५. आज्यबंध्यपयानि S'. ६. तामेव S'. ७. तु. S, सा.; वैतु. A,$B^h$,C,$K^m$,R,V,Dc,Cs,WM.RW. पै १२,५,३ °मृषयो भरंतुस्त्वं पुं°; D °मृषयो भरंतः त्वपुं°; $S^m$ °मृषयो भरंतुस्त्वं पुं°. ८. तु. मंपा.; वैतु. P,$P^s$,J,WM. भरंत:. ९. त्वम् S'. १०. तेजो पै १२,५,४. ११. तद् पै. १२. ऊर्जः P.

तीक्ष्णः अतिनिशितशक्तिः । यस्मै प्रयोजनाय प्रयुज्यते तस्य आशुकारीत्यर्थः । राजा सर्वासाम् ओषधीनां सर्वेषां मणीनां वा राजवच्छ्रेष्ठः विषासहिः विशेषेण सोढा शत्रुमर्षकः रक्षोहा राक्षसानां हन्ता विश्वचर्षणिः विश्वद्रष्टा तथा देवानाम् इन्द्रादीनाम् ओजः ओजःस्थानीयः । तेषाम् असुरसंग्रामे जयप्रदत्वात् । उग्रम् परैरसह्यं बलम् बलस्वरूपम् एतत् रक्षासाधनं 'दर्भाख्यं वस्तु'[1] । अथवा एतत् इदानीम् । अत्र बलसाधने मणौ बलत्वव्यवहारः । तं तादृशं मणिं ते हे रक्षाकाम पुरुष तव बध्नामि । किमर्थम् । जरसे जरापरिहारार्थं स्वस्तये क्षेमाय च बध्नामि ।

दर्भेण त्वं कृणवद्[2] वीर्याणि दर्भं बिभ्रदात्मना मा व्यथिष्ठाः ।
अतिष्ठाया[3] वर्चसाधान्यान्त्सूर्य[4] इवा भाहि प्रदिशश्चतस्रः ॥ ५ ॥

दर्भेण । त्वम् । कृणवत्[5] । वीर्याणि । दर्भम् । बिभ्रत् । आत्मना । मा । व्यथिष्ठाः ।
अतिऽस्थाय[6] । वर्चसा । अध । अन्यान्[6] । सूर्यःऽइव । आ । भाहि । प्रऽदिशः । चतस्रः ॥

हे पुरुष त्वं दर्भेण मणिना साधनेन[7] वीर्याणि वीरस्य कर्माणि वीर्याणि शत्रुजयादीनि कृणवत् कुर्याः । अतः दर्भं वीर्यसाधनं बिभ्रत् धारयंस्त्वम् आत्मना निश्चलेन युक्तः सन्[8] अथवा आत्मना आत्मनि बिभ्रत् मा व्यथिष्ठाः व्यथां मा कुरु । शत्रवः पराभविष्यन्तीत्येवं मनसि व्यथां मा कार्षीरित्यर्थः । [6]अध अपि च[6] वर्चसा शरीरबलेन अन्यान् अधिष्ठाय[10] सूर्य इव स यथा लोकान् स्वतेजसा आलोकेन प्रकाशयति तद्वत् चतस्रः प्रदिशः प्रकृष्टाः प्रागादिचतस्रो दिशः आ भाहि प्रकाशय ।

इति चतुर्थेऽनुवाके सप्तमं सूक्तम् ।

इति चतुर्थोऽनुवाकः समाप्तः ।

पञ्चमेऽनुवाके द्वादश सूक्तानि । तत्र 'जङ्गिडोऽसि' इति प्रथमद्वितीयाभ्यां सूक्ताभ्यां 'वायव्यां वातवान्यायाम्' (शाक १७,४) इति विहितायां वायव्याख्यायां महाशान्तौ जङ्गिडवृक्षनिर्मितं मणिं बध्नीयात् । तथा शान्तिकल्पे सूत्रितम्— "'वाताज्जातः' (अ ४,१०) इति शङ्खं वारुण्याम् । 'जङ्गिडोऽसि जङ्गिडो रक्षितासि' इति जङ्गिडं वायव्यायाम्" (शाक १९,६) इति ।

---

१. °स्त्यवस्तु S'. २. कृणवद् A,B[h],C,D,R S[m],W M.; कृणवो RW.; कृणु पै १२,५,५. ३. तु. RW. पै.; वेतु. शंपा. सात. अतिष्ठाया (पपा. अतिऽस्थाय). ४. तु. सा.; वैतु. A,B[h], R,Cs,WM. वर्चसैध्यन्यां सू°; C, WM. वर्चसैध्यन्यां सू°; D K[m],V,W M. वर्चसैधन्यां सू°; S[m],WM. वर्चसैधन्यां सू°; Dc °सौधन्यां° > °सैध्यन्यां°; RW. वर्चसाध्युन्या°; S वर्चसौधन्यां°; पै वर्चसेऽध्यन्यां°. ५. कृणवत् P[a],J,WM. ६. तु. मंपा.; वैतु. J पुहि । अन्याम्; P एधि । अन्याम्; P[a] एधि । अन्याम् > पुधन्याम्; WM. पुधन्याम्, एधि । अन्याम्, एहि । अन्याम्. ७. साधनेन त्वम् S'. ८. सन् बिभ्रत् S'. ९. च अन्यान् S'. १०. वैतु. मंपा.

'जङ्गिडो॑ऽसि जङ्गि॒डो'[1] रक्षि॒ताऽसि जङ्गि॒डः[2] ।
द्वि॒पाच्चतु॑ष्पाद॒स्माकं॒ सर्वं॑ रक्षतु जाङ्गि॒डः ॥ १ ॥

ज॒ङ्गि॒डः । अ॒सि॒ । ज॒ङ्गि॒डः । र॒क्षि॒ता । अ॒सि॒ । ज॒ङ्गि॒डः ।
द्वि॒ऽपात् । चतुः॑ऽपात् । अ॒स्माक॑म् । सर्व॑म् । र॒क्ष॒तु॒ । ज॒ङ्गि॒डः ॥ १ ॥

जङ्गिडो नाम कश्चिद् ओषधिविशेषः । स च उत्तरदेशे प्रसिद्धः[3] । हे जङ्गिड[4] मणे जङ्गिडोऽसि यतो जातानां कृत्यानां कृत्याकृतां च निगरणकर्ताऽसि[5] अतो जङ्गिड इत्युच्यसे । तस्मात् जङ्गिडः त्वं रक्षिताऽसि सर्वेभ्यो भयेभ्यः पालयिता भवसि । पिच्छादित्वाद् इलच् । यद्वा जङ्गम्यते शत्रून् बाधितुम् इति जङ्गिडः । गमेर्यङ्लुगन्ताद् रूपसिद्धिः । अथवा जनेर्जयतेर्वा[6] डप्रत्यये ज इति भवति । जं गिरतीति जङ्गिरः । कपिलकादित्वाद् लत्वम् । पूर्वपदस्थस्य सुपो लुगभावश्छान्दसः । खच्प्रत्ययो वा द्रष्टव्यः । अथ परोक्षम् अभिधीयते—अस्माकं यद् द्विपात् पादद्वयोपेतं मनुष्यादिलक्षणम् अस्ति तथा चतुष्पात् पादचतुष्टयोपेतं गोमहिषादिलक्षणम् अस्ति । उभयत्र 'संख्यासुपूर्वस्य' ( पा ५,४,१४० ) इति लोपः समासान्तः । तत् सर्वं जङ्गिडो जङ्गिडाख्यो मणी रक्षतु पालयतु ।

[7]या गृ॒त्स्य॑स्त्रिप॒ञ्चा॒शीः[8] श॒तं कृ॑त्या॒कृत॑श्च॒ ये ।
सर्वा॑न् 'विनक्तु तेज॑सोऽर॒सां' जङ्गि॒डस्क॑रत् ॥ २ ॥

[9]याः । गृ॒त्स्यः॑ । त्रि॒ऽप॒ञ्चा॒शीः[9] । श॒तम् । कृ॒त्या॒ऽकृतः॑ । च॒ । ये ।
सर्वा॑न् । वि॒न॒क्तु॒[10] । तेज॑सः । अ॒र॒सान् । ज॒ङ्गि॒डः । क॒र॒त् ॥ २ ॥

या गृत्स्यः गर्धनशीला याः त्रिपञ्चाशीः त्र्यधिकपञ्चाशत्संख्याकाः कृत्याः सन्ति । पूरणार्थे डट् । डित्वात् टिलोपः । 'टिड्ढाणञ्'[11] ( पा ४,१,१५ ) इति ङीप् । तथा ये शतम् शतसंख्याकाः कृत्याकृतः । कृत्या नाम मृद्दार्वादिना निर्मितपुत्तल्यादि । तासां कृत्यानां कर्तारः सन्ति तान् सर्वान् जङ्गिडः जङ्गिडाख्यौषधिनिर्मितो मणिः ।

---

१. अङ्गिरा असि जङ्गिड RW. २. जङ्गिड S,RW. ३. जङ्गिडो वाराणस्यां प्रसिद्धः के ८,१५; अंगिडोऽर्जुनः। अथवा इति दाक्षिणात्याः दा ८,१५. ४. वैतु. मंपा. ५. निगिरण° S'. ६. जमेर्यजतेर्वा S'. ७. ज्यागृत्स्यास्त्रि° Sm; यागृत्स्यस्त्रि° R,Cs; जागृत्स्यस्त्रि° A,Bh,V,WM.; जागृत्स्यास्त्रि° C,WM.; ज्यागृत्स्यस्त्रि° D; ज्यागृत्स्यस्त्रि° Km,Dc; यागृत्स्यस्त्रि° WM.; अभ्रकृत्यास्त्रि° RW.; याः कृत्यास्त्रि° W.; याः कृष्णास्त्रि° पै ११,३,२; प १,२५८८ i; १५१४ n अपि द्र. ८. विनिक्ष्व्तेजसा° V, भनक्ति तेजसो° A,D; विनक्तु-जसो° Bh,C,R,Cs; विनक्तुतेजसो° > भिनक्तु तेजसो° Sm; मिनक्तु तेजसो° > मिनक्तु जसा° Km;विनक्तु° > मिनक्तु° Dc; विनक्तुतेजसो° RW. सा. ९. जागृत्स्यः। त्रिपञ्चाऽशीः P,P², J. १०. विनक्तिऽ° > विनक्तुऽ° P; विनक्तुऽ° > विनक्तु P²; विनक्तुऽ° J.

विनष्टतेजसः[1] हतवीर्यान् स्वव्यापारे कुण्ठितशक्तीन् । तदेवोच्यते — अरसान् इति । अरसान् रसरहितान् ऋजीषप्रायान् करत् कुर्यात् । करोतेर्लेटि अडागमः ।

अरसं [2]कृत्रिमं नादमरसाः[3] सप्त विस्रसः[3] ।
[4]अपेतो जङ्गिडामतिमिषुमस्तेव[4] शातय[5] ॥ ३ ॥

अरसम् । [6]कृत्रिमम् । नादम्[6] । अरसाः । सप्त । विऽस्रसः ।
अप । इतः । [7]जङ्गिड । अमतिम्[8] । इषुम् । अस्ताऽइव । शातय ॥ ३ ॥

कृत्रिमम् क्रियया निर्वृत्तम् । 'क्त्रेर्मम्नित्यम्' (पा ४,४,२०) इति मप्प्रत्ययः । अभिचरता उत्पादितं नादम् ध्वनिं [9]शिरःकर्णाद्यङ्गेषु स्थितम्[9] अयं जङ्गिडो मणिः अरसम् गतसारम् । करत् इति अनुवर्तते । करोतु । एवं सप्त विस्रसः सप्तसंख्याका विस्रंसनाः[10] । स्रंसेः क्विप् । मूर्धनिष्ठेषु नासारन्ध्रद्वयचक्षुर्गोलकद्वयश्रोत्रच्छिद्रद्वय-मुखकुहररूपेषु सप्तसु च्छिद्रेषु अभिचरता उत्पादिताः सप्त निष्यन्दा अपि अरसाः सन्तु । जङ्गिडमणिमाहात्म्याद् इति शेषः । अथ प्रत्यक्षेणाह — हे जङ्गिड त्वम् अमतिम् दारिद्र्यं दुर्बुद्धिं वा इतः अस्माद् मणिधारकसकाशाद् अपसार्य इषुम् अस्तेव । अस्ता इषुक्षेप्ता । असु क्षेपणे । इडभावश्छान्दसः[11] । शत्रुषु प्रयोक्ता यथा शातयति तनूकरोति एवं शातय तनूकुरु । [12]'शदेरगतौ तः' (पा ७,३,४२) इति णिचि शदेस्तकारादेशः[12] ।

[13]कृत्यादूषण एवायमथो[13] अरातिदूषणः ।
अथो सहस्वाञ्जङ्गिडः[14] प्र ण आयूंषि तारिषत्[15] ॥ ४ ॥

कृत्याऽदूषणः । एव । अयम् । अथो इति । अरातिऽदूषणः ।
अथो इति । सहस्वान् । जङ्गिडः । प्र । नः । आयूंषि । तारिषत् ॥ ४ ॥

अयं जङ्गिडो मणिः कृत्यादूषणः कृत्यायाः परोत्पादितायाः दूषणः निराकर्ता एव । दुष वैकृत्ये । अस्मात् णिचि कर्तरि करणे वा ल्युट् । 'दोषो णौ' (पा ६,४,९०) इति ऊकारादेशः । अवधारणार्थं एवशब्दः[16] । अथो अपि च अरातिदूषणः

---

१. वैतु. मंपा. २. कृतमन्नाद° Bh,WM.; कृतमन्नाद° C,R,WM.; कृतमन्नाद° Cs,WM.; कृत्रिमन्नाद° D,Dc; °त्रिमं नादम° पै ११,३,३. ३ विस्रसः RW. ४. अ-पेतो जंगिडामति° R; अपेतो जंगिडामति° A,Bh,Sm; अपेतो जंगिडामति° D,Km,V,Dc. ५. साधय पै. ६. कृत्रिम् । अन्नऽअदम् P,P², J,WM. ७. जंगिड P,P²,J. ८. अमतिम् P². ९. °र्णाद्यंगेष्वजाद्यं एस्थितं S'. १०. विस्रंसनाः दुष वैकृत्ये णिचि दोषेणावित्यूकारादेशः S'. ११. रधादिभ्यश्च (पा ७,२,४२) इति इड्विकल्पः इति शंपा. १२. इदम् उत्तरमन्त्रभाष्ये S' (टि १६ द्र.). १३. 'णो वा अय' पै ११,३,४; °एवायम° A,C,D,R,Sm,Cs,WM. १४. °स्वां ज° RW. १५. तार्षत् Bh,C,R,Cs,WM. १६. °शब्दः 'शदेरगतौ तः' इति णिचि शदेस्तकारादेशः S' (टि १२ द्र.).

शत्रुच्यावनसाधनः अथो अपि च अयं जङ्गिडः सहस्वान् उक्तव्यापारोचितबलोपेतः। स तादृशो मणिः कृत्यादूषणादिकं कृत्वा नः आयूंषि प्र तारिषत्। प्रपूर्वस्तरतिर्वर्ध-नार्थः। वर्धयतु।

स जङ्गिडस्य महिमा परि णः पातु विश्वतः।
विष्कन्धं [1]येन सासह[1] संस्कन्धमोज ओजसा ॥ ५ ॥

सः। जङ्गिडस्य। महिमा। परि। नः। पातु। विश्वतः ॥ ५ ॥
विऽस्कन्धम्। येन। ससह[2]। सम्ऽस्कन्धम्। ओजः। ओजसा ॥ ५ ॥

स तादृशः उत्तरार्धेऽभिधीयमानलक्षणो जङ्गिडस्य महिमा तन्महत्त्वं नः अस्मान् विश्वतः सर्वस्माद् भयजातात् परि पातु परितो रक्षतु। कोसौ महिमेति तमाह— यो महिमा विष्कन्धम् विश्लिष्टस्कन्धम् एवंनामानं वातविशेषं महारोगम् ओजसा[3] सह[3] तस्य यद् विष्कन्धीकरणसामर्थ्यम् अस्ति तेन सह अपुनरुद्भवं नाशयति। यश्च महिमा संस्कन्धम्। येन रोगेण स्कन्धः संनतः संलग्नो भवति स रोगः संस्कन्धः। तं महारोगं वातलक्षणम् ओजः महिमा ओजसा सह रोगस्य सामर्थ्येन सह नाशयति। स महिमेति पूर्वत्र संबन्धः।

त्रिष्ट्वा[4] देवा अजनयन् निष्ठितं[5] भूम्यामधि।
[6]तमु त्वाङ्गिरा[6] इति ब्राह्मणाः पूर्व्या विदुः ॥ ६ ॥

[4]त्रिः। त्वा[4]। देवाः। अजनयन्। निःऽस्थितम्। भूम्याम्। अधि।
तम्। ऊं इति। [7]त्वा। अङ्गिराः[7]। इति। ब्राह्मणाः। पूर्व्याः। विदुः ॥ ६ ॥

इदानीं भूम्याम् अधि। अधिः सप्तम्यर्थानुवादी। भूम्यां तिष्ठन्तं[5] त्वा त्वां देवाः इन्द्राद्याः त्रिः त्रिवारम् अजनयन् उदपादयन्। त्रिषु लोकेषु अवस्थानायेति भावः। अथवा एकद्विवारप्रयत्नेन[8] अनुत्पद्यमानं त्वां त्रिवारम् अजनयन्। अनेन अत्यन्त-प्रयोजकत्वेन अवश्यम् उत्पादनीयत्वम् उक्तं भवति। तं तादृशं प्रयत्नेन उत्पादितं त्वा त्वाम् अङ्गिरा इति। ब्रह्मणोऽङ्गसंभूतो रसः अङ्गिरआख्यो[9] महर्षिः। यद्वा अङ्गिरा

---

१. येन सासह Sm; येनं सासुहे A,R,W.; येनं सासुह D; येनं सासह > येनं सासहु Km,V; येनं सासहु > येनं सासहु Dc; ओजसा सह S. २. ससहु > ससह P². ३. वैतु. संपा. ४. तु. सा; वैतु. A,Bb,C,D,K,Km,R,Sm,V,Dc,Cs,P,P²,J,WM. त्रुष्ट्वा; निष्ट्वा पै ११,३,६. ५. तिष्ठन्तं S. ६. तमु त्वाङ्गिरा A,Bb,C,D,R,Sm,Cs, WM.; तमुं त्वांगिरा > तमु त्वांगिरा Dc. ७. त्वा। अंगिराः P; त्वा। अंगिराः J. ८. एकं द्वि° S'. ९. अंगिराख्यो S'.

अङ्गाराः । 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' ( ऐब्रा ३,३४ ) इति ब्राह्मणम् । एवंनामा महर्षिरिति पूर्व्याः पूर्वे भवा ब्राह्मणा महर्षयो विदुः ब्रुवते ।

न त्वा पूर्वा ओषधयो न त्वा तरन्ति[1] या नवाः[2] ।
विबाध उग्रो जङ्गिडः[3] परिपाणः[4] सुमङ्गलः ॥ ७ ॥

न । त्वा । पूर्वीः । ओषधयः । न । त्वा । तरन्ति[5] । याः । नवाः ।
विऽबाधः । उग्रः । जङ्गिडः । परिऽपानः । सुऽमङ्गलः ॥ ७ ॥

हे जङ्गिड त्वा त्वां पूर्वाः पूर्वं सृष्ट्यग्रादावुत्पन्ना ओषधयो न तरन्ति नातिक्रामन्ति । सर्वेष्वपि प्रयोगेषु अतिशयितवीर्यत्वाद् इति भावः । एवं या ओषधयो नवाः नूतनाः सन्ति ता अपि त्वा त्वां न तरन्ति अतिशयितुं न प्रभवन्ति । कुत एतद् इति तत्राह — हे जङ्गिड[6] यतस्त्वं[7] विबाधः बाधयतीति बाधः विशेषेण शत्रुरोगादेर्बाधकः[8] उग्रः उद्गूर्णबलः परिपाणः परितः पाता सुमङ्गलः सुष्ठु मङ्गलकारी । अनेन शत्र्वादिजयभयरक्षणलक्ष्मीकरत्वलक्षणाः गुणा अस्योक्ता भवन्ति ।

[9]अथोपदान भगवो[9] जङ्गिडामितवीर्य ।
पुरा त [10]उग्रा ग्रसत[10] उपेन्द्रो वीर्यं ददौ[11] ॥ ८ ॥

अथ । उपऽदान । भगऽवः[12] । जङ्गिड[13] । अमितऽवीर्य ।
पुरा । ते । उग्राः[14] । ग्रसते । उप । इन्द्रः । वीर्यम् । ददौ ॥ ८ ॥

अथशब्दः अभिमुखीकरणार्थः । हे उपदान उपादीयते स्वीक्रियते कृत्यानिर्हरणादिव्यापारेष्विति उपदानः । तस्य संबोधनम् । हे उपदान हे भगवः भगवन् अतिशयितमाहात्म्य हे अमितवीर्य अपरिच्छिन्नसामर्थ्य हे जङ्गिड ते[15] त्वाम् उग्राः उद्गूर्णबलाः प्राणिनः पुरा ग्रसते भक्षयिष्यन्तीति विज्ञाय इन्द्रः यथा त्वाम् उग्रा न भक्षयन्ति तथा वीर्यम् परैरनभिभाव्यं सामर्थ्यम् उप ददौ प्रादात् । तस्माद् इन्द्रेण[16] दत्तवीर्यत्वाद् अतिशयितवीर्यस्त्वमसीति स्तुतिः ।

---

१. चरन्ति पै ११,३,७. २. नवा D,R,Cs. ३. जंगिड S′. ४. परिपार्नः WM. ५, तरन्ति P. ६. वैतु. मंपा.; जंगिड S′. ७. यतो S′. ८. नैवं स्वरसिद्धिः; °गादिर्बा° S′. ९. तु. सा.; वैतु. A,B[b],C,K,K[m],R,S[m],V,Dc,Cs,WM. अथो पुदा न भंगवो; D,WM. अथो पुदा न भगवो; RW. अथो युदा सुमभवो; अथ यो पदानि भगवो पै ११,३,८; वेंप ९२८ i अपि द्र. १०. उग्राग्रुत RW.; उग्राय सत पै.; वैप १,८६४ d द्र. ११. दधौ D, पै. १२. भगव: P; भगवः P[1],J. १३. जंगिड P,P[1],J. १४. उग्रा P,P[2],J. १५. त्वा S′. १६. इन्द्रे S′.

उग्र इत् ते वनस्पत इन्द्र[1] ओज्मानमा दधौ[2] ।
अमीवाः[3] सर्वाश्चातयं[4] जहि रक्षांस्योषधे ॥ ९ ॥

उग्रः[5] । इत् । ते । वनस्पते । इन्द्रः । ओज्मानम् । आ । दधौ ।
अमीवाः । सर्वाः । चातयन् । जहि । रक्षांसि । ओषधे ॥ ९ ॥

हे वनस्पते जङ्गिड त्वम् उग्र इत् उग्र एव अतिशयितवीर्य एव नात्र विचारणा । यतः ते त्वयि इन्द्रो देवः ओज्मानम् ओजो बलम् आ दधौ स्थापितवान् । अतस्त्वम् हे ओषधे वनस्पते सर्वाः अमीवाः साध्यासाध्यविभागम् अकृत्वा सर्वानपि रोगान् चातयन् नाशयन् रक्षांसि । रक्षितव्यम् अस्माद् इति रक्षः । भयोपादानभूतान् राक्षसान् जहि घातय ।

आशरीकं[6] विशरीकं बलासं पृष्ट्यामयम्[7] ।
तक्मानं विश्वशारदमरसां[8] जङ्गिडस्करत् ॥ १० ॥

आऽशरीकम् । विऽशरीकम् । बलासम् । पृष्टिऽआमयम् ।
तक्मानम् । विश्वऽशारदम् । अरसान् । जङ्गिडः । करत् ॥ १० ॥

आशरीकम् सर्वतो हिंसकम् एतन्नामानं रोगं तथा विशरीकम् विशेषेण हिंसकम् एतन्नामानं च बलासम् बलस्य असनकर्तारं बलक्षयकारकम् एतन्नामानं पृष्ट्यामयम् सर्वाङ्गव्यापिनम् एतन्नामानं च रोगं तक्मानम् कृच्छ्रजीवनकर्तारं यस्मिन् सति कृच्छ्रेण जीवनं भवति तादृशं विश्वशारदम् सर्वस्य सर्वदा वा विशरणकर्तारम् एवम् अन्यानपि रोगान् जङ्गिडो मणिः अरसान् पीडनासमर्थान् करत् करोतु ।

इति पञ्चमेऽनुवाके प्रथमं सूक्तम् ।

'इन्द्रस्य नाम' इति द्वितीयं सूक्तम् । तस्य जङ्गिडमणिबन्धने पूर्वसूक्तेन सह उक्तो विनियोगः ।

इन्द्रस्य नाम गृह्णन्त ऋषयो जङ्गिडं ददुः[9] ।
देवा यं चक्रुर्भेषजमग्रे[10] विष्कन्धदूषणम्[11] ॥ १ ॥

---

१. इन्द्रस्ते वीरुधां पत उग्र अ ४,१९,८. २. दधत् अ. ३ अमीवा A,B[b]. ४. सर्वा रक्षांसि पै ११,३,९. ५. उग्रः P. ६. आशरीरं पै ११,३,१०. ७. पृष्ट्यांमयम् A,D,R,Cs,WM.; पृष्ट्याऽमयम् B[b],S[m],WM.; पृष्ट्यामयम् V. ८. °रसं पै. ९. विदुः D. १०. °मुग्रे पै ११,४,१ (मूको.). ११. विष्कन्धु° R.

इन्द्रस्य । नाम । गृह्णन्तः । ऋषयः । जङ्गिडम् । ददुः ।
देवाः । यम् । चक्रुः । भेषजम् । अग्रे । विस्कन्धऽदूषणम् ॥ १ ॥

**पूर्वे** ऋषयः **अतीन्द्रियद्रष्टारोऽङ्गिरआद्या** इन्द्रस्य **देवस्य** नाम गृह्णन्तः **उच्चारयन्तो** जङ्गिडम् **जङ्गिडाख्यं मणिम् अतिशयितवीर्यत्वाय रक्षाकामेभ्यः पुरुषेभ्यो** ददुः **दत्तवन्तः । तस्माद् इदानींतनैरपि रक्षाबन्धनसमये इन्द्रस्य नाम ब्रुवाणैरेव जङ्गिडमणिर्धार्य इत्यभिप्रायः ।** [1]**किं च** अग्रे **सृष्ट्यादौ** देवाः **इन्द्राद्या** यं **जङ्गिडाख्यौषधिं**[1] विष्कन्धभेषजम्[2] **विष्कन्धाख्यस्य महारोगस्य औषधं** चक्रुः **कृतवन्तः । अतस्तं विष्कन्धभेषजार्थं प्रयुञ्जीत इत्यर्थः । स नो रक्षत्विति उत्तरत्र संबन्धः ।**

स नो रक्षतु जङ्गिडो धनपालो धनेव ।
देवा यं चक्रुर्ब्राह्मणाः परिपाणमरातिहम् ॥ २ ॥

स । नः । रक्षतु । जङ्गिडः । धनऽपालः । धनाऽइव[3] ।
देवाः । यम् । चक्रुः । ब्राह्मणाः । परिऽपानम् । अरातिऽहम् ॥ २ ॥

स **उक्तविशेषणविशिष्टो** जङ्गिडो **मणिः** नः **अस्मान्** रक्षतु । **तत्र दृष्टान्तः—** धनपालः **लोके कस्यचिद् राज्ञो धनाध्यक्षो** धनेव **धनानि यथा महता प्रयत्नेन रक्षति तद्वत्** यं **जङ्गिडं** देवाः ब्राह्मणाः **च । ब्राह्मणा महर्षयः । यद्वा देवाः**[4] **श्रुताध्ययनादिना द्योतमाना ब्राह्मणा भृग्वङ्गिरःप्रभृतयः** परिपाणम् **परितो रक्षकम्** अरातिहम् **अरातेः शत्रोर्हन्तारं** चक्रुः **। स नो रक्षत्विति संबन्धः ।**

[5]दुर्हार्दः संघोरं चक्षुः[5] पापकृत्वानमागमम्[6] ।
तांस्त्वं[7] सहस्रचक्षो प्रतीबोधेन नाशय परिपाणोऽसि जङ्गिडः[8] ॥ ३ ॥

दुःऽहार्दः । सम्ऽघोरम् । चक्षुः । पापऽकृत्वानम् । आ । अगमम् । तान् । त्वम् । सहस्रचक्षो इति सहस्रऽचक्षो । प्रतिऽबोधेन । नाशय । परिऽपानः । असि । जङ्गिडः ॥ ३ ॥

**हे जङ्गिडमणे त्वं** दुर्हार्दः **दुष्टहृदयस्य शत्रोः** संघोरम् **अत्यन्तक्रूरं** चक्षुः ।

---

१. किं च यः किं च अग्रे सृष्ट्यादौ यमिंद्राद्या जंगिडाख्यमोषधिं S'. २. वंतु. मंपा. ३. धनेऽइव P,P[2],J, WM. ४. देवाद्याः S'. ५. दुर्हार्दुः° A,B[b]; दुर्हार्दुस्त्वं घोरं' RW.; दुर्हार्दं घोरंचक्षुषं W. पै ११,४,३; वैप १,३२१५ | द्र. ६. °मागमम् > मादमन् Dc; °मादभन् K[m],S[m],O; °मागतम् पै. ७. ताःस्त्वं R. ८. जङ्गिड RW.

नाशयेति उत्तरत्र संबन्धः । एवं पापकृत्वानम् हिंसादिलक्षणस्य पापस्य कर्तारम् । 'राजनि युधिकृञः' (पा ३, २,९५) इति राजोपपदात् करोतेर्विहितः क्वनिप् पापोपपदादपि अत्र व्यत्ययेन निष्पन्नः । एवंलक्षणम् आगतम्[1] हन्तुं प्राप्तं च नाशय । तान् उक्तलक्षणान् सर्वान् हे सहस्रचक्षो बहुधा द्रष्टः । चक्षेरौणादिक उप्रत्ययः । अनेन बाधकहननविषयपरिज्ञानम् अस्योक्तं भवति । तादृशः त्वं प्रतिबोधेन प्रतिकूलया तव बुद्ध्या । यद्वा [2]तत्कृतापराधोद्घाटनेन नाशय । एवंविधप्रार्थनाया विषयभावस्तस्य कुत इति तत्राह — जङ्गिडः त्वं परिपाणोऽसि परितो रक्षकोऽसि यतः अतो नाशयेत्यर्थः ।

परि मा दिवः परि मा पृथिव्याः पर्यन्तरिक्षात् परि मा वीरुद्भ्यः ।
परि मा भूतात् [3]परि मोत[3] भव्याद्[4] दिशोदिशो जङ्गिडः पात्वस्मान् ॥ ४ ॥

परि । मा । दिवः । परि । मा । पृथिव्याः । परि । अन्तरिक्षात् । परि । मा । वीरुत्ऽभ्यः ।
परि । मा । भूतात् । परि । मा । उत । भव्यात्[5] । दिशःऽदिशः । जङ्गिडः । पातु । अस्मान् ॥४॥

अयं जङ्गिडो मणिः मा मां दिवः द्युलोकात् । ततः संभूताद् भयाद् इत्यर्थः । एवं पृथिव्यादिष्वपि द्रष्टव्यम् । परि पात्विति उत्तरत्र संबन्धः । तथा पृथिव्याः सकाशात् पृथिव्यां संभूतेभ्यो बाधकेभ्यः परि पातु । एवम् अन्तरिक्षात् तत्रत्याद् रक्षःप्रभृतेः परि पातु । वीरुद्भ्यः विविधं रोहन्तीति वीरुधः । तेभ्यः परि पातु । उपलक्षणम् एतत् । [6]तरुगुल्मादिभ्य इत्यर्थः । तेष्वपि विषादिदोषसंभवात् तद्रक्षाप्रार्थना युक्ता । एवं भूतात् [7]अतीतात् कालात्[7] । भूतसंबन्धिनः प्राणिजाताद् इत्यर्थः । एवं भव्यात् भविष्यतोऽपि परि पातु । एवं दिशोदिशः प्रागादेः[8] । वीप्सया सर्वा अपि दिशः परिगृह्यन्ते । सर्वाभ्यो दिग्भ्यः तत्रत्येभ्यो भयेभ्यः अस्मान् जङ्गिडो मणिः पातु ।

[9]य कृष्णवो[9] [10]देवकृता य[10] उतो[11] ववृतेऽन्यः[12] ।
सर्वांस्तान् विश्वभेषजोऽरसां जङ्गिडस्करत् ॥ ५ ॥

१. वैतु. मंपा.   २. यत्कृता° S'.   ३ परि मोत Bʰ,C,D,R,Sᵐ,Cs,WM.; परि मोत > परि मोत Dc.   ४. भव्याद् Bʰ,C,D,R,Sᵐ,Cs,WM.; भव्या° > भव्यां° Dc.   ५. भव्यात् P.J.   ६. तत्र गुल्मा° S'.   ७. अतीतातत्कालात् S'.   ८. प्रागादि S'.   ९. तु. सा. पै.; वैतु. A,Bʰ,C,D,Sᵐ,K,Kᵐ,V,Dc,R,Cs,WM. यः कृणवौ; RW. ये कृत्वनो; वैप १,१०२२ V अपि द्र.   १०. देवकृताय A,Bʰ,C,D,Sᵐ,WM.; देवकृता य K,Kᵐ,V,Dc; देवकृता य R; देवकृताय Cs.   ११. यतो B².   १२. वंभृ-ऽन्यः A,Bʰ,C; वंभृथेऽन्यः D,Sᵐ; वंभृतेन्यः K,Kᵐ,V,Dc; वंभृथेन्यः R; वंभृतेन्यः Cs; ररसेन्यः RW.; विभूथे स्या पै ११,४,५; वैप १,२२७८ a अपि द्र.

[1]ये । ऋष्णवः[1] । देवऽकृताः[2] । यः । उतो इति । [3]वृवृते । अन्यः[3] ।
सर्वान् । तान् । विश्वऽभेषजः । अरसान् । जङ्गिडः । करत् ॥ ५ ॥

देवकृताः देवैर्निष्पादिता ये ऋष्णवः गन्तारो हिंसकाः पुरुषाः सन्ति । उतो अपि च ये[4] अन्ये[4] मनुष्यादिप्रेरिता बाधका [5]ववृते ववृतिरे[5] तान् सर्वान् विश्वभेषजः विश्वानि भेषजानि यस्य तथोक्तः । विश्वेष्वपि भेषजेषु यत् साध्यं तद् अनेन भवतीति विश्वभेषजः । सर्वरोगादिपरिहारकत्वस्यास्य[6] वर्णितत्वात् । तादृशो[7] जङ्गिडः अरसान् गतसामर्थ्यान् करत् करोतु ।

इति पञ्चमेऽनुवाके द्वितीयं सूक्तम् ।

'शतवारो अनीनशत्' इति तृतीयं सूक्तम् । तेन 'संततिं कुलक्षये प्रयुञ्जीत[8]' ( शांक १७,४ ) इति विहितायां संतत्याख्यायां महाशान्तौ शतवारं मणिम् अभिमन्त्र्य बध्नीयात् । सूत्रितं हि—" 'शतवारो अनीनशद्' इति शतवारं संतत्याम्" ( शांक १९,६ ) इति ।

शतवारो अनीनशद् यक्ष्मान् रक्षांसि तेजसा ।
आरोहन् वर्चसा सह [9]मणिर्दुर्णामचातनः[9] ॥ १ ॥

शतऽवारः । अनीनशत् । यक्ष्मान् । रक्षांसि । तेजसा ।
आऽरोहन् । वर्चसा । सह । मणिः[10] । दुर्नामऽचातनः ॥ १ ॥

शतवारः शतं वारा[11] मूलानि शूका वा यस्य स शतवारः । यद्वा शतसंख्याकान् रोगान् निवारयतीति शतवारः 'शतवारेण वारये' ( ६ ) इति उत्तरत्र शतसंख्याकरोगवारणश्रवणाद् ओषधिविशेषः । तदात्मको मणिः यक्ष्मान् रोगान् तेजसा स्वमहिम्ना अनीनशत् भृशं नाशयतु । नशेश्छान्दसे लुङि चङि रूपम् । तथा तेजसा रक्षांसि अपि अनीनशत् । कदेत्युच्यते—आरोहन् इति । दुर्नामचातनः । दुर्नामा त्वग्दोषः । त्वग्दोषाणां चातयिता नाशयिता मणिः वर्चसा दीप्त्या सह सहितः सन् आरोहन् पुरुषस्य भुजादिप्रदेशम् अधितिष्ठन् । अनीनशद् इति संबन्धः ।

शृङ्गाभ्यां रक्षो नुदते मूलेन यातुधान्यः ।
मध्येन यक्ष्मं बाधते नैनं पाप्मातिं तत्रति[12] ॥ २ ॥

---

१. यः । कृष्णवः P,P², J. २. देवऽकृताः P', J. ३. वभूतेन्यः P; वभूतेन्यः P²; वभूतेन्यः > वभूतेन्यः J. ४. वंन. मंपा. ५. नास्ति S' ( द्र. टि ७ ). ६. °कत्वस्य S'. ७. तादृशो ववृते ववृतिरे ( द्र. टि ५ ). ८. नास्ति Bol. ९. मणि दुर्णामचातन A,B[h]; मणि दु° C,D,K,K[m],R,S[m],Cs; मणि° > मणि° Dc; मणि दुर्णामचातनम् पै २,२७,१. १०. मणिम् P,P²,J. ११. वारावारा S'. १२. तरति RW.

शृङ्गा॑भ्याम् । रक्षः॑ । नु॒द॒ते॒ । मूले॑न । या॒तु॒ऽधा॒न्यः॑ ।
मध्ये॑न । यक्ष्म॑म् । बा॒ध॒ते॒ । न । ए॒न॒म् । पा॒प्मा । अति॑ । त॒त्र॒ति॒ ॥ २ ॥

अयं शतवारः शृङ्गाभ्याम् शृङ्गवद् अवस्थिताभ्याम् अग्रभागाभ्यां रक्षः राक्षसजातिं राक्षसान् अन्तरिक्षस्थान् नुदते अपसारयति । मूलेन अधःप्रदेशेन यातुधान्यः यातुधानीर्नुदते । मध्येन काण्डेन यक्ष्मम् सकलं रोगं बाधते । एनं सर्वस्य बाधकं शतवारमणिं पाप्मा पापी पापं वा न अति तत्रति नातिक्रामति । यद्वा एनं प्रकृतम् उक्तविधमणिविशिष्टं पाप्मा पापं बाधकं नाति तत्रति । तॄ प्लवनसंतरणयोः । श्लुः शब्वेति विकरणद्वयम्[१] ।

ये यक्ष्मा॑सो अर्भ॒का म॒हान्तो॒ ये च॑ श॒ब्दिनः॑[२] ।
[३]सर्वा॑न् दुर्णाम॒हा[३] म॒णिः श॒तवा॑रो अनीनशत् ॥ ३ ॥

ये । यक्ष्मा॑सः । अ॒र्भ॒काः[४] । म॒हान्तः॑ । ये । च॒ । श॒ब्दिनः॑ ।
सर्वा॑न् । दु॒र्ना॒म॒ऽहा । म॒णिः । श॒त॒ऽवा॑रः । अ॒नी॒न॒श॒त् ॥ ३ ॥

ये प्रसिद्धा अर्भकाः अप्ररूढा उत्पन्नमात्रा यक्ष्मासः यक्ष्मा रोगाः सन्ति ये च महान्तः अभिवृद्धा यक्ष्माः ये च शब्दिनः शब्दवन्तः एते दुश्चिकित्सा इति शब्द्यमानाः शब्दवन्तो वा तान् सर्वान् उक्तलक्षणान् रोगान् दुर्नामहा दुर्नामाख्यस्य रोगस्य हन्ता शतवारो मणिः अनीनशत् भृशं नाशयतु ।

श॒तं [५]वी॒रान॑जनयच्छ॒तं[६] यक्ष्मा॒नपा॑वपत् ।
दु॒र्णाम्नः॒ [७]सर्वा॑न् ह॒त्वाव॒[७] रक्षां॑सि धूनुते[७] ॥ ४ ॥

श॒तम् । वी॒रान्[८] । अ॒ज॒न॒य॒त्[९] । श॒तम् । यक्ष्मा॑न् । अप॑ । अ॒व॒प॒त् ।
दुः॒ऽना॒म्नः॑ । सर्वा॑न् । ह॒त्वा । अव॑ । रक्षां॑सि । धू॒नु॒ते॒ ॥ ४ ॥

अयं धार्यमाणो मणिः शतम् शतसंख्याकान् वीरान् विविधम् ईरयन्ति अपनुदन्तीति वीराः पुत्राः । तान् अजनयत् जनयतु उत्पादयतु प्रयच्छतु । " 'शतवारो

---

१. वैप १,७८ k द्र. २. शपथिनः पै २,२७,३. ३. सर्वान्दुर्णा° RW. ४. अ॒र्भ॒कः P, ५. वी॒रा अंज° B^h,C,WM.; वी॒रा अंज° > वी॒रानंज° Dc; वी॒रान्नं जं° Cs; °नयच्छतं B^h,C,Dc; °नयच्छतं R; वी॒राँ अंजनय° RW.; वीर्याण्यजनय° पै २,२७,४. ६. °वाँस्तू-द्वाप पै. ७. धूनते R,Cs; अक्रमीत् पै. ८. वी॒रान् P^१; वी॒राः P,J. ९. अ॒ज॒न॒य॒न् P,J.

अनीनशद्' इति शतवारं संतत्याम्" ( शांक १९,६ ) इति सूत्राद् वीरजनकत्वम् । तथा[1] शतम् शतसंख्याकान् यक्ष्मान् व्याधीन् अपावपत् । अपपूर्वो वपिर्नाशार्थः । अपवप नाशयतु । त्वग्दोषभेदा येये सन्ति श्वित्रदद्रूपामादिकास्तान् सर्वान् दुर्नाम्नो हत्‍ नाशयित्वा रक्षांसि अव धूनुते अव निकृष्टम् अपुनरुद्भवं नाशयति ।

हिरण्यशृङ्ग ऋषभः शातवारो[2] अयं मणिः ।
दुर्णाम्नः सर्वांस्तृढ्वाव[3] रक्षांस्यक्रमीत् ॥ ५ ॥

हिरण्यऽशृङ्गः । ऋषभः । शातऽवारः । अयम् । मणिः ।
दुःऽनाम्नः । सर्वान् । तृढ्वा[4] । अव । रक्षांसि । अक्रमीत् ॥ ५ ॥

हिरण्यशृङ्गः यस्याग्रं हिरण्यवद् अवभासते स हिरण्यशृङ्गः । शतवारस्याग्रम् एवं भवति । ऋषभः ओषधीनां श्रेष्ठः शातवारः एतन्नामा अयं मणिः मणिविशेषः सर्वान् दुर्नाम्नः त्वग्रोगभेदान्[5] सर्वान् तृढ्वा[6] हिंसित्वा रक्षांसि राक्षसान् अवाक्रमीत् न्यकार्षीत्[7] आक्रामतु ।

शतमहं दुर्णाम्नीनां गन्धर्वाप्सरसां[8] शतम् ।
'शतं शश्वन्वतीनां'[9] शतवारेण वारये ॥ ६ ॥

शतम् । अहम् । दुःऽनाम्नीनाम् । गन्धर्वऽअप्सरसाम् । शतम् ।
शतम् । शश्वन्ऽवतीनाम् । शतऽवारेण । वारये ॥ ६ ॥

अहं दुर्नाम्नीनाम् दुर्नाम्नीरोगभेदानां[10] श्वित्रदद्रूपामादीनां[11] व्याधीनां शतम् । व्याध्यपेक्षया दुर्नाम्नीति स्त्रीलिङ्गनिर्देशः । 'अन उपधालोपिनोऽन्यतरस्याम्' ( पा ४,१,२८ ) इति ङीप् । शतवारेण वारये इति संबन्धः । एवं गन्धर्वाप्सरसाम् गन्धर्वा अप्सरसश्च अन्तरिक्षसंचारिणो देवयोनयो मनुष्यान् बल्यर्थं गृह्णन्ति । अप्सरस इति नियतं बहवः स्त्रीलिङ्गाभिधेयाश्च । तेषां शतं वारये निवारयामि । तथा शश्वन्वतीनाम् । मुहुर्मुहुः पीडार्थम् आगन्त्र्यो ग्रहापस्माराद्या व्याधयः शश्वन्वत्यः । दकारस्य नकारादेशः । तासां शतं शतवारेण वारये । यतोऽयं शतवाराख्यः अतः शतस्य वारकत्वं युक्तम् इति भावः ।

इति पञ्चमेऽनुवाके तृतीयं सूक्तम् ।

---

१. तथायः S'. २. शतवारो C,WM.; शतवारो K,K$^m$,V,WM.; शातवारो V,WM.; शातवारो > शातवारो Dc. ३. °स्तृढ्वा° शंपा. ४. तृढ्वा शंपा. ५. तद्रोग° S'. ६. वढ्वा S'. ७. निकर्षिः S'. ८. गन्धर्वा° A,B$^b$,C,D,R. ९. शतं च श्वन्वतीनां RW. पै २,२७,५; वैप १,३०९२ j अपि द्र. १०. दुनाम्नीरभेदानां S'. ११. °मादीनां शतम् S'.

'इदं वर्चः' इति चतुर्थं सूक्तम्।[1]

इदं वर्चो[2] अग्निना दत्तमागन्[3] [4]भर्गो यशः[4] सह ओजो [5]वयो बलम्[5] ।
त्रयस्त्रिंशद् यानि च वीर्याणि तान्यग्निः प्र ददातु मे ॥ १ ॥

इदम् । वर्चः । अग्निना । दत्तम् । आ । अगन् । भर्गः । यशः । सहः । ओजः । वयः । बलम्[6] । त्रयःऽत्रिंशत् । यानि । च । वीर्याणि । तानि । अग्निः । प्र । ददातु । मे ॥ १ ॥

अग्निना देवेन दत्तम् इदं वर्चः दीप्तिः आगन् आगच्छतु । इदम् इदानीम् इति वा व्याख्येयम् । एवं भर्गः भर्जकं तेजः यशः कीर्तिः सहः पराभिभावुकं तेजः ओजः ओजो [7]नामाष्टमो धातुः[7] धनुरानमनादिसामर्थ्यम् वयः । नित्ययौवनम् अत्राभिमतम् । बलम् परैरनभिभाव्यं सामर्थ्यम् । आगन्निति प्रत्येकम् अभिसंबध्यते । किं च यानि त्रयस्त्रिंशत् त्रयस्त्रिंशत्संख्याकानि प्रतिनियतानि वीर्याणि सन्ति तानि मे मह्यम् अग्निः प्र ददातु प्रयच्छतु ।

वर्च आ धेहि मे तन्वां[8] सह ओजो [9]वयो बलम्[9] ।
इन्द्रियाय त्वा कर्मणे वीर्याय प्रति गृह्णामि शतशारदाय ॥ २ ॥

वर्चः । आ । धेहि । मे । तन्वाम्[10] । सहः । ओजः । वयः । बलम्[11] ।
इन्द्रियाय । त्वा । कर्मणे । वीर्याय । प्रति । गृह्णामि । शतऽशारदाय ॥ २ ॥

हे अग्ने मे मम तन्वाम् शरीरे वर्चः त्वदीयं शत्रूणाम् आवर्जकं तेजः आ धेहि विधेहि । सहओजोवयोबलानि व्याख्यातानि । अत्रापि आ धेहीति प्रत्येकम् अभिसंबध्यते । वर्चःप्रभृतीनि अग्नेरसाधारणानि । तानि मम शरीरे स्थापयेति आशास्ते । इन्द्रियाय । ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च इन्द्रियशब्देन विवक्ष्यन्ते । इन्द्रियाणां दार्ढ्याय हे प्रतिगृह्यमाण पदार्थ त्वा त्वां प्रति गृह्णामि स्वीकरोमि । न केवलम् इन्द्रियसामर्थ्याय किंतु कर्मणे अग्निहोत्रादिलक्षणकर्मसिद्ध्यर्थम् । तथा वीर्याय वीरस्य कर्म वीर्यं शत्रुजयादि तत्सिद्ध्यर्थम् । एवं शतशारदाय शतसंवत्सरजीवनाय ।

---

१. अस्य सूक्तस्य 'त्वाष्ट्रीं वस्त्रक्षये' ( शाक १७,५ ) इति विहितायां महाशान्तौ त्रिवृन्मणिबन्धने विनियोगः । तदुक्तं शान्तिकल्पे — '' 'इदं वर्चः' इति त्रिवृतं त्वाष्ट्र्याम्'' ( शाक १९,७ ) इति । इत्येवंरूपोऽवश्यंभाव्योऽपि पाठो नोपलभ्यते S'. २. राधो आश्रौ ६,१२,२. ३. °मागात् तैब्रा २,५,७,१ आश्रौ.; °मागान् मै २,३,४. ४. मंहि राधः मै. ५. वयो बलम् A.B[b],C,D,R,S[m],Cs,WM.; वयो बलम् > वयो बलम् Dc; बलं च तैब्रा. आश्रौ.; बलं यत् मै. ६. बलम् P,J. ७. नामो धातुः S'. ८. तन्वां३ B[b],D,K,K[m],V, Dc,RW.; तन्वं A,C,R,Cs. ९. वयो बलम् A,C,D,R,S[m],Cs; वयो बलम् > वयो बलम् Dc. १०. तन्वऽम् P,P[2],J. ११. बलम् P[2].

हिरण्यादिके प्रतिगृहीते सति तेन शरीरपोषणादिद्वारा[1] 'इन्द्रियाणां दार्ढ्यसंभवात्[2] एवम् आह ।

ऊर्जे त्वा बलाय त्वौजसे सहसे त्वा ।
अभिभूयाय त्वा राष्ट्रभृत्याय[3] पर्यूहामि शतशारदाय ॥ ३ ॥

ऊर्जे । त्वा । बलाय । त्वा । ओजसे । सहसे । त्वा ।
अभिऽभूयाय । त्वा । राष्ट्रऽभृत्याय[3] । परि । ऊहामि । शतऽशारदाय ॥ ३ ॥

हे प्रतिग्रहविषयभूत पदार्थ त्वा त्वाम् ऊर्जे । ऊर्ग् इति अन्ननाम । अन्नलाभाय त्वा पर्यूहामि परिवहामि । प्रतिगृह्णामीत्यर्थः । तथा बलाय शरीरसामर्थ्याय त्वा पर्यूहामि । एवम् ओजसे सहसे च त्वा पर्यूहामि । अभिभूयाय अभिभूयः अभिभवनं तस्मै शत्रुजयाय प्रयोजनाय त्वा पर्यूहामि । एवं राष्ट्रभृत्याय राज्यभरणप्रयोजनाय तथा शतशारदाय शतशरत्पर्यन्तजीवनाय पर्यूहामि ।

[4]ऋतुभ्यष्ट्वार्तवेभ्यो† माद्भ्यः संवत्सरेभ्यः‡ ।
धात्रे विधात्रे समृधे भूतस्य पतये यजे[4] ॥ ४ ॥

ऋतुऽभ्यः । त्वा । आर्तवेभ्यः । मात्ऽभ्यः । सम्ऽवत्सरेभ्यः ।
धात्रे । विऽधात्रे । सम्ऽऋधे । भूतस्य । पतये । यजे ॥ ४ ॥

हे पदार्थ त्वा त्वाम् ऋतुभ्यः ग्रीष्मादिभ्यः तेषां प्रीणनाय यजे संगतं करोमि ददामि वा । एवम् आर्तवेभ्यः ऋतुसंबन्धिनीभ्यो देवताभ्यः तथा माद्भ्यः मासेभ्यश्चैत्रादिरूपेभ्यो द्वादशसंख्याकेभ्यः तथा संवत्सरेभ्यः संवसन्ति एषु मासादिकालावयवा इति संवत्सराः तेभ्यः एवं धात्रे स्रष्ट्रे एवंनामकाय देवाय तथा विधात्रे विविधस्य भूतजातस्य कर्त्रे एवं समृधे समर्धयति सृष्टानि प्राणिजातानीति समृत् तस्मै यजे । [5]तथा भूतस्य[5] उत्पन्नस्य कृत्स्नस्य पदार्थस्य पतये स्वामिने यजे ।

इति पञ्चमेऽनुवाके चतुर्थं सूक्तम् ।

'न तं यक्ष्माः' इति पञ्चमं सूक्तम् । तस्य 'एतु देवः' इति उत्तरसूक्तस्य च पुरोहितकर्तव्ये रात्रौ राज्ञः शय्यागृहप्रवेशनकर्मणि गुल्गुलुधूपं कुष्ठौषधिधूपं च दद्यात् ।

'अथ पिष्टमयीं रात्रिं चतुर्भिर्दीपकैः सह' (अ० ४,३,१)

---

१. शरीरेपो° S'. २. इन्द्रियासंभवाद् S'. ३. तु. RW.; वैतु. शंपा. राष्ट्रभृत्याय (पपा. राष्ट्रऽभृत्याय). ४. ऋतुभिष्ट्वार्तवैरायुषे वर्चसे त्वा । संवत्सरस्य तेजसा तेन संहनु कृण्मसि RW. पै १,५४,५. † ऋतुभ्यष्ट्वा° Dc.O; ऋतुभिष्ट्वा° अन्ये मूको.; यजुर्ऋत्विग्भ्य आर्त्त° पै १,१०५,४. ‡ संवत्सराय च पै. ५. भूतस्य तथा भूतस्य S'.

इति प्रक्रम्य उक्तं परिशिष्टे — " 'एह्यश्मानम् आ तिष्ठ' (अ २,१३,४) इति पश्चमीम् अधिष्ठापयेत् । 'न तं यक्ष्माः', 'ऐतु देवः' (अ १९,३९) इति गुग्गुलुकुष्ठधूपं दद्यात्" (अप ४,४,६,७) इति ।

न तं 'यक्ष्मा अरुन्धते' नैनं 'शपथो अश्नुते' ।
यं भेषजस्य गुल्गुलोः[3] सुरभिर्गन्धो अश्नुते[4] ॥ १ ॥

न । तम् । यक्ष्माः । अरुन्धते । न । एनम् । शपथः । अश्नुते ।
यम् । भेषजस्य । गुल्गुलोः । सुरभिः । गन्धः । अश्नुते[5] ॥ १ ॥

तं राजानं यक्ष्माः व्याधयो नारुन्धते रोधं न कुर्वन्ति न पीडयन्ति । रुधिर् आवरणे । रौधादिकः । तथा एनं राजानं शपथः परकृतोऽभिशापो नाश्नुते न व्याप्नोति न स्पृशति । तम् इत्युक्तं कम् इत्यत आह — यं राजानं भेषजस्य 'औषधरूपस्य गुग्गुलोः[7] एतन्नामकस्य सुरभिः घ्राणसंतर्पको गन्धो अश्नुते व्याप्नोति । तम् इति पूर्वत्रान्वयः ।

विष्वञ्चस्तस्माद्[8] यक्ष्मा 'मृगा अश्वा'[9] इवेरते[10] ।
यद् गुल्गुलु[11] सैन्धवं यद् वाप्यासि[12] समुद्रियम् ॥ २ ॥
उभयोरग्रभं नामास्मा अरिष्टतातये[13] ॥ ३ ॥

विष्वञ्चः । तस्मात् । यक्ष्माः । मृगाः । अश्वाःऽइव[14] । ईरते[15] ।
यत् । गुल्गुलु[16] । सैन्धवम् । यत् । वा । अपि । असि[17] । समुद्रियम् ॥ २ ॥
उभयोः । अग्रभम् । नाम । अस्मै । अरिष्टऽतातये ॥ ३ ॥

तस्मात् 'यं भेषजस्य' (१) इति उक्ताद् गुल्गुलुगन्धम् आघ्रातवतः सकाशाद् यक्ष्माः व्याधयो विष्वञ्चः विष्वगञ्चना नानादिगभिमुखाः सन्तः ईरते वेगेन धावन्ति । ईर गतौ । आदादिकः । ईरणे दृष्टान्तः — मृगा अश्वा इव । अश्वाः आशुगामिनो मृगा इव हरिणादय इव । अथवा मृगा इव अश्वा इव । उभयेषामपि आशुगमनसंभवात् । यद्वा अयम् अर्धर्चः पूर्वमन्त्रेण सह व्याख्येयः यं भेषजस्येत्यनेन एक-

१. द्र. मूको.; वैतु. RW. यक्ष्मा अरुन्धते; S यक्ष्मा अरुन्धत; वैप १,६९५० अपि द्र.
२. शपथोऽश्नुते Cs. ३. गुग्गुलोः A,B[b],C,K,V,WM.RW. ४. अश्नुते मूको.
५. अश्नुते मूको. ६. औष° S'. ७. वैतु. मंपा. ८. विश्वञ्च° पै १९,२४,२.
९. मृगाऽश्वा RW. १०. यथेयसे ? पै. ११ गुंग्गुलु A,B[b],C,V, सा.; गुग्गुलु RW.
१२. वाप्यासि A,K,K[m],Dc,Cs; वाप्यासि RW.,S ; वैप १,२८२० j अपि द्र. १३. विष्वञ्च इत्यारभ्य °तातये इति यावद् एकैव ऋक् A,B[b],R,RW. १४. अश्वाऽइव P,J. १५. ईरते P,P[2],J. १६. गुग्गुलु P,J. १७. आऽअसि P,P[2],J.

वाक्यतासंभवात्। गुल्गुलुः[1] औषधं[2] यत् यदि सैन्धवम् सिन्धुदेशजम्। 'तत्र भवः' (पा ४,३,५३) इति अण्। यद्वापि समुद्रियम् समुद्रभवम् असि। 'समुद्राभ्राद् घः' (पा ४,४,११८) इति भवार्थे घः [२]। हे गुल्गुलो[3] उभयोः उभयविधयोस्तव स्वरूपयोः नाम अग्रभम् गृह्णामि कीर्तयामि। गृह्णातेर्लुङि च्लेर्लुक् छान्दसः। 'हृग्रहोर्भः°' (पावा ८,२,३२) इति भत्वम्। किमर्थम्। अस्मै प्रसक्ताय प्रवर्तमानाय[4] अरिष्टतातये अरिष्टकर्त्रे असुखकर्त्रे रोगाय द्वेष्याय वा। तत्परिहारायेत्यर्थः[5]। यद्वा अस्मै व्याधिशान्तिकामाय तदर्थम् तस्य अरिष्टनाशनायेति व्याख्येयम्। 'शिवशमरिष्टस्य करे' (पा ४,४,१४३) इति तातिल्प्रत्ययः। यद्वा अत्र स्वार्थिकस्तातिः। अरिष्टपरिहारायेत्यर्थः [३]।

इति पञ्चमेऽनुवाके पञ्चमं सूक्तम्।

'ऐतु देवः' इति षष्ठं सूक्तम्। अस्य रात्रीकल्पे कुष्ठधूपप्रदाने विनियोगः पूर्वसूक्तसमय उक्तः।

ऐतु[6] देवस्त्रायमाणः कुष्ठो हिमवतस्परि।
तक्मानं सर्वं नाशय[7] सर्वाश्च यातुधान्यः॥ १॥

[8]आ। एतु[8]। देवः। त्रायमाणः। कुष्ठः। हिमऽवतः। परि।
तक्मानम्। सर्वम्। नाशय। सर्वाः। च। यातुऽधान्यः॥ १॥

देवः दिवि भवः (?)। द्युलोके उत्पत्तिर्वक्ष्यते। वीर्यातिशयैर्द्योतमानो वा। कुष्ठः कुष्ठाख्यौषधिविशेषो[9] हिमवतस्परि एतन्नामकात् पर्वतात् सकाशात् त्रायमाणः अस्मान् पालयमानः आ एतु आगच्छतु। एवं परोक्षाभिधानेन आगमनम् आशास्य अभ्यागतम् अभिमुखीकृत्य आह—हे कुष्ठाख्यौषधिविशेष त्वं तक्मानम् क्लेशकारिणं रोगं सर्वम् योयो रोगविशेषस्तं सर्वं नाशय। किंचिद् औषधं कस्यचिद् रोगस्य नाशकम् अथवा कतिपयानां नाशकं भवति। इदं तु सर्वरोगनाशकम् इति सर्वम् इत्युच्यते। किं च सर्वाश्च यातुधान्यः यातवो यातना धीयन्ते यासु ता यातुधान्यः ताः सर्वा नाशय। यावन्ति रक्षांसि सन्ति तानि सर्वाण्यपि नाशय।

त्रीणि ते[10] कुष्ठ नामानि नद्यमारो[11] नद्यारिषः।[12] नद्यायं[13] पुरुषो रिषत्[14]।

---

१. वैतु. मंपा. २. ओषधं S'. ३. गुग्गुलो S'. ४. प्रवर्तमाय S'. ५. °हारेत्यर्थः S'. ६. एतु B^h,C,R,Cs. ७. °यन् पै ७,१०,१. ८. तु. सा.; वैतु. P,P^२,J ऐतु. ९. विशेषवा S'. १०. ते B^h,C,D,R,S^m. ११. नद्यमारो A,B^h,C,D,K,K^m,R,S^m,Dc,Cs; नद्यमारो RW. पै ७,१०,२; वैप १,१७६३ g द्र. १२. °रिषो R,S^m; नद्यायुषो A,B^h,C,D; नद्यायुषः। K,K^m; नद्यारिषो > नद्यायूषो Cs; नद्यारिषो > नद्यायूषः। Dc; नघारिषो RW. पै.; वैप १,१७६३ i अपि द्र. १३. नद्यायं A,B^h,C, K,K^m,R,S^m,Dc,Cs; नद्यायं D; न घायं RW. पै.; वैप १,१७६३ h अपि द्र. १४. रूषत् R; °षत् B^h,C.

'यस्मैं परिब्रवींमि' त्वा सायंप्रातरथो दिवा' ॥ २ ॥

त्रीणि । ते । कुष्ठ[3] । नामानि । [4]नद्यऽमारः । नद्यऽरिषः । नद्य । अयम् । पुरुषः । रिषत् । यस्मैं । परिऽब्रवींमि[5] । त्वा । सायम्ऽप्रातः । अथो इति । दिवा ॥ २ ॥

हे कुष्ठ ते त्रीणि नामानि अत्यन्तरहस्यानि । कानि तानीति तान्याह— नद्यमारः इति एकं नाम । नद्यां भवा नद्याः । नदीशब्देन नदीस्थानि उदकानि लक्ष्यन्ते । उदकदोषोद्भवा रोगा इत्यर्थः । यद्वा नद्या नदनीयाः शब्दनीयाः । अत्यन्तदुष्परिहरत्वेन शब्द्यमाना इत्यर्थः । तान् मारयतीति नद्यमारः । तथा नद्यरिषः । उक्तो नद्यशब्दार्थः । तान् रिष्यतीति[6] नद्यरिषः । इदं द्वितीयं नाम । केवलो नद्य इति तृतीयं नाम । नद्यानां मारकः स्वयमपि नद्य इत्युच्यते । तं संबोध्य ब्रूते—हे नद्य कुष्ठाख्यौषधे तव नामग्रहणाभावे अयं व्याधितः पुरुषो रिषत् हिंसितो भवेत् । अतः व्याधितरक्षक इति समुदितं नामेति मन्तव्यम् । एवं नामत्रयेण अभिधीयमानकुष्ठाख्यौषधे त्वा त्वां यस्मै रोगार्ताय पुरुषाय परिब्रवीमि मन्त्रत्वेन तव नामानि उच्चारयामि । कस्मिन् काल इत्युच्यते— सायंप्रातः उभयसंध्ययोः । अथो अपि च दिवा द्योतमाने । मध्याह्ने इत्यर्थः । औषधप्रयोगे उक्तकालत्रयस्य प्राशस्त्यात् । यद्वा दिवा कृत्स्नेऽप्यहनि उभयोः संध्ययोश्च । उक्तमेवार्थं नामव्यपदेशेन आदरार्थं पुनराह— 'नद्यायं पुरुषो रिषत्' इति । यद्वा हे नद्य औषध यस्मै द्वेष्याय त्वां परिब्रवीमि अयं द्वेष्यः पुरुषो रिषत् नश्यतु इति व्याख्येयम् ।

जीवला[7] नाम ते माता जीवन्तो नाम ते पिता । नद्यायं[8] पुरुषो रिषत् ।
'यस्मैं परिब्रवींमि' त्वा सायंप्रातरथो दिवा ॥ ३ ॥

जीवला । नाम । ते । माता । जीवन्तः । नाम । ते । पिता । नद्य । अयम् । पुरुषः । रिषत् । यस्मैं । परिऽब्रवींमि । त्वा । सायम्ऽप्रातः । अथो इति । दिवा ॥ ३ ॥

हे कुष्ठाख्यौषधे ते तव माता जीवला नाम जीवयतीति जीवला । मत्वर्थीयो लः । जीवयित्रीत्यर्थः । एतन्नामिका । एवं ते तव पिता जनकोऽपि जीवन्तः । जीवयतीति जीवन्तः । वसन्त इतिवत् । एतत्संज्ञकः । यतस्तव पितरौ रोगादिपरिहारेण जीवप्रदौ अतस्त्वमपि तादृशमहिमोपेत इति भावः । नद्यायं पुरुष इत्यादि पूर्ववत् ।

---

१. यस्मै परिं ब्रवीमि A,B[b],C,D,K,K[m],Dc,Cs,R,S[m]; यस्मै° वै. २. दिवा नद्यायं पुरुषो रिषत् S', S, सा.; एवमुत्तरत्र. ३. कुष्ठ P; कुष्ठ > कुष्ठ J. ४. द्र. सा.; वैतु. P,P[a],J नद्य । मारः । नद्य । आयुषः । नद्य । अयम् । पुरुषः । रूपत् । यस्मै । परिं । ब्रवीमि. ५. एवं स्वरः ? ६. द्र. टि २. ७. जीबलो RW. ८. न मुञ्चायं RW.; वैप १,१७६२ h द्र. ९. यस्मै परिं ब्रवीमि A,B[b],C,D,K,K[m],R,S[m],V.

हिरण्ययी । नौः । अचरत् । हिरण्यऽबन्धना । दिवि ।
तत्र । अमृतस्य । चक्षणम् । ततः । कुष्ठः । अजायत ।
सः । कुष्ठः । विश्वऽभेषजः । साकम् । सोमेन । तिष्ठति ।
तक्मानम् । सर्वम् । नाशय । सर्वाः । च । यातुऽधान्यः ॥ ७ ॥

दिवि **द्युलोके** हिरण्ययी **हिरण्यनिर्मिता तथा** हिरण्यबन्धना **हिरण्यमयैः शङ्कुपाशादिभिर्बद्धा** नौः अचरत् **सर्वदा चरति । अस्तु, ततः कुष्ठाख्यस्यौषधस्य किम् आयातम् इति तत्राह** — तत्रामृतस्य **इति । अनेन अस्यापि अमृतत्वसाधनधर्मः सहैव उक्तो भवति ।**

[1]यत्र नावप्रभ्रंशनं[1] यत्र हिमवतः शिरः ।
तत्रामृतस्य चक्षणं ततः कुष्ठो अजायत ।
स [2]कुष्ठो विश्वभेषजः[2] साकं सोमेन तिष्ठति[3] ।
तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः ॥ ८ ॥

यत्र । [4]न । अवऽप्रभ्रंशनम्[4] । यत्र । हिमऽवतः । शिरः ।
तत्र । अमृतस्य । । चक्षणम् । ततः । कुष्ठः । अजायत ।
सः । कुष्ठः । विश्वऽभेषजः । साकम् । सोमेन । तिष्ठति ।
तक्मानम् । सर्वम् । नाशय । सर्वाः । च । यातुऽधान्यः ॥ ८ ॥

यत्र **द्युलोके** नावप्रभ्रंशनम् **तत्रस्थानां सुकृतिनाम् अवाङ्मुखप्रभ्रंशो नास्ति ।** यत्र **च** हिमवतः **एतन्नाम्नः पर्वतस्य** शिरः । **हिमवच्छिरःप्रदेश एव स्वर्गभूमिरिति प्रसिद्धिः ।** तत्रामृतस्य **इत्यादि पूर्ववत् ।**

यं त्वा वेद पूर्व [5]इक्ष्वाको यं[5] वा त्वा [6]कुष्ठ काम्यः[6] ।
[7]यं वा वसो[7] [8]यमात्स्यस्तेनासि[8] विश्वभेषजः ॥ ९ ॥

यम् । त्वा । वेद[9] । पूर्वः । इक्ष्वाकः[10] । यम् । वा । त्वा । कुष्ठ । काम्यः[11] ।
यम् । वा । वसः[12] । यम् । आत्स्यः । तेन । असि । विश्वऽभेषजः ॥ ९ ॥

---

१. यत्रनावप्रभ्रंशनं RW.; °नावः° D, पै ७,१०,८; वैप १,४५६ a अपि द्र. २. कुष्ठ विश्वभेषज पै. ३. तिष्ठसि पै. ४. तु. सा.; वैनु. P,P², J अव । प्रऽभ्रं°. ५. इष्वाको यं Km,R,V,Dc,Cs,WM.; इक्ष्वा° > इष्वा° Sm; इक्ष्वाकोर्यं RW.; वैप ७५४ a अपि द्र. ६. कुष्ठकाम्यः RW. WI.W. ७. यं वार्यसो RW.; अहि इया व सो ? पै ७,१०,९; °वासो D,K,Km,V,Cs,WM.; °वसो > °वासो Dc; वैप १,२८२६ h द्र. ८. यमाच्छुस्ते° R,Cs, यं मात्स्य° RW.; अ नु सा रि इच्छ स् ? ते° पै.; वैप १,२५२७ h द्र. ९. वेद P,J. १०. इष्वाकः P,P². ११. काम्याऽः P. १२. वासः P,P²; वासः > वसः J.

**हे कुष्ठाख्यौषधे यस्माद्** यं **प्रसिद्धं** त्वा **त्वां** पूर्वः **पुरातन** इक्ष्वाकु[1] **राजा** वेद **सर्वव्याधिहन्ताऽयम् इति ज्ञातवान्। यस्माद्** यं वा **यं च** त्वा त्वाम् **हे** कुष्ठ काम्यः **कामपुत्रो वेद सर्वौषधिरूप इति ज्ञातवान्। यस्माद्** यं यमास्यः[1] **यमस्य आस्यमिव आस्यं यस्य स तादृशो** वसः **एतन्नामा देवो वेद।** तेन **कारणेन त्वं** विश्वभेषजोऽसि **विश्वव्याधिनिर्मोचको भवसि सकलभेषजात्मको वासि।**

**शीर्षशोकं[2] तृतीयकं[3] सदन्दिर्यश्च[4] हायनः।**
**तक्मानं विश्वधावीर्याधराञ्चं परा सुव ॥ १० ॥**

शीर्षऽशोकम्[2]। तृतीयकम्[3]। सदम्ऽदिः। यः। च। हायनः।
तक्मानम्। विश्वधाऽवीर्य। अधराञ्चम्। परा। सुव ॥ १० ॥

**हे कुष्ठ** तृतीयकम् **भूलोकापेक्षया तृतीयं** लोकं[1] **द्युसञ्ज्ञकं तव** शीर्षं[1] **शिर आहुः। द्युलोके प्रथमम् उत्पन्नत्वाद् भूमिष्ठस्यापि तृतीयलोकपर्यन्तव्याप्तेश्च।** यश्च हायनः **कालस्तवावस्थानावलम्बनः। स कीदृशः।** सदन्दिः। **सदम् इत्यव्ययं सदेत्यस्यार्थे। सदा रोगाणां खण्डयिता। तादृङ्महिमोपेतस्त्वं** विश्वधावीर्यम्[5] **व्याप्तसामर्थ्य**[7] तक्मानम् **रोगम्** अधराञ्चम् **अवागञ्चनं यथा भवति तथा** परा सुव **निकृष्टं प्रेरय। नाशयेत्यर्थः।**

**इति पञ्चमेऽनुवाके षष्ठं सूक्तम्।**

'यन्मे छिद्रम्' **इति सप्तमं सूक्तम्। तस्य** [8]**पवित्रनाशनिमित्तप्रायश्चित्ते आज्यहोमे विनियोगः। तद् उक्तं परिशिष्टे समुच्चयप्रायश्चित्तप्रकरणे—**

"अथ †पवित्रे प्रणश्यति† कर्ममध्यात् प्रमादतः।
अन्यच्छित्त्वानुमन्त्रयेत‡ कर्मशेषम् उपक्रमेत् ॥

××× 'यन्मे छिद्रम्' (अ १९,४०,१), 'पुनर्मैत्विन्द्रियम्' (अ ७,६९), 'मा न आपो मेधाम्' (अ १९,४०,२), 'मा नो मेधाम्' (अ १९,४०,३), 'मा[1] नः पीपरदश्विना❀' (अ १९,४०,४) इति संनतिभिराज्यं जुहुयाद् व्याहृतिभिश्च गां च कर्त्रे दद्यात् सा तत्र प्रायश्चित्तिः" (अप ३७,४,१;२) **इति।**

**तथा उपयामस्य हस्तात् पतने आज्यहोमे अस्य विनियोगः। तद् उक्तम्—**"अथ यस्योपयामो ✻त्रा पतेद्धस्तात्✻ स 'यन्मे उपयामः' (अप ३७,१४,२) इत्यादधीत" **इत्युपक्रम्य परिशिष्टे—** "'यन्मे छिद्रम्', 'यदस्मृति' (अ ७,१११) इति जुहुयात्" (अप ३७,१४,१;४) **इति**[8]।

---

१. वैद्ध. मंपा. २. द्र. PW. RW. प्रभृ.; वैद्ध. शंपा. शीर्षलोकं; शीर्षालोकं पै ७,१०,१०. ३. द्र. P[2], WM. RW.; वैद्ध. शंपा. तृतीयकं. ४. सदंदी° A,B[b]; सदंदि° R,S[m],Cs. ५. विश्वधा° A,C,D,S[m],WM. ६. तृतीयकम् शंपा. ७. व्याप्त S'. ८. नास्ति S', स्थानं तु दशानां वर्णानां रिक्तम्. † पवित्रं (चेत्) प्रणश्येत BN. ‡ तु नास्ति BN. ❀ पीपरिद° शंपा; पिपरिद° BN. ✻ °ऽवपते° BN.

यन्मे छिद्रं मनसो यच्च वाचः सरस्वती[1] मन्युमन्तं[2] जगाम[3] ।
विश्वैस्तद् देवैः सह संविदानः सं दधातु[4] बृहस्पतिः ॥ १ ॥

यत् । मे । छिद्रम् । मनसः । यत् । च । वाचः । सरस्वती[5] । मन्युऽमन्तम् । जगाम[6] ।
विश्वैः । तत् । देवैः । सह । सम्ऽविदानः । सम् । दधातु । बृहस्पतिः ॥ १ ॥

मे मम मनसः यज्ञदानध्यानादिलक्षणस्य मनोव्यापारस्य यच्छिद्रम् यश्छेदोऽस्ति तथा वाचः[7] मन्त्रादिविषयाया यत् छिद्रम् अस्ति । तत् सं दधात्विति उत्तरत्र संबन्धः । या च मम सरस्वती सरणवती वाग् मन्युमन्तम् अस्मद्विषयक्रोधोपेतं द्वेष्यं जगाम अगच्छद् इति यत् । यद्वा मन्युमन्तम् मन्युः क्रोधो मानसिको धर्मः तद्वन्तम् । मां विहायेति शेषः । अन्यत्र जगाम गतेति । तस्माद् मनसो वाचश्च च्छिद्रम् अवश्यं संधातव्यम्[8] इत्यर्थः । तत् उक्तलक्षणं सर्वं छिद्रं बृहस्पतिः बृहतो मन्त्रसमूहस्य वेदस्य पतिः पालयिता अभिमानी एतन्नामको देवः विश्वैः इतरैरिन्द्राद्यैः देवैः सह संविदानः ऐकमत्यं प्राप्तः सन् सं दधातु संधानं करोतु । केवलं बृहस्पतिना छिद्रसंधाने क्रियमाणे इतरेषां देवानाम् अनानुकूल्ये[9] सति संधानस्य अघटनात् तैः सहितस्य ऐकमत्यम् आशास्यते[10] ।

मा [11]न आपो[11] मेधां मा ब्रह्म प्र मथिष्टन[12] ।
[13]सुष्यदा यूयं स्यन्दध्वमुपहूतोऽहं[13] सुमेधा वर्चस्वी ॥ २ ॥

मा । नः । आपः[11] । मेधाम् । मा । ब्रह्म । प्र । मथिष्टन[14] ।
सुऽस्यदाः[15] । यूयम् । स्यन्दध्वम्[16] । उपऽहूतः । अहम् । सुऽमेधाः[17] । वर्चस्वी ॥२॥

हे आपो देवताः यूयं नः अस्माकं मेधाम् । अधीतस्य वेदादेर्धारयित्री बुद्धिर्मेधा । तां मा प्र मथिष्ट[18] प्रमथनं भ्रंशं मा कुरुत । तथा नः ब्रह्म । ब्रह्म वेदः । अधीतं वेदं मा प्र मथिष्ट[19] । किं च मम संबन्धि यद्यत् कर्म शुष्यत्[20] शोषं

---

१. °स्वती A,C,D,Km,Sm,V,Dc,WM.; इरस्वन्तं RW. २. मन्युविर्त पै १९, ३८,६. ३. जगाम A,Bh,D,K,Km,R,V,Cs; जगाम > जगाम Dc. ४. ददातु पै. ५. °स्तीम् P,P²,J. ६. जगाम P,P²,J. ७. वच: S'. ८. समाधा° S'. ९. अननु° S'. १०. आभिशायीस्यते S'. ११. तु. RW. सा.; वैतु. शंपा. नु आपो (पपा. आपः). १२. मंथिष्ट नः A,Bh,V,S, सा. १३. शुष्यदायुर्यस्यंनदध्व° S; शुष्युदा° A,Bh,D,K,Km,R,Sm,Dc,Cs, सा.; शुष्मदा° RW.; °स्यन्नध्व° A,Bh,C; °स्यंनध्व° R,Sm; °स्यनध्व° D,Cs; °स्यंचध्व° > °स्यंदध्व° Dc; °स्यंदध्व° O; °हूता अहं RW. १४. °ष्ठन P,P²,J. १५. शुष्युदा P,P²,J. १६. स्युन्नध्वम् P,P²,J. १७. °धा P,P²,J. १८. वैतु. मंपा; मथिष्ठा S'. १९. मथिष्ठ S'. २०. वैतु. मंपा.; शुशुष्यत् S'.

प्राप्नोति तत्तद् अभिलक्ष्य यूयम् आ[1] स्यन्दध्वम् सर्वतः प्रवहत। आर्द्रं कुरुतेत्यर्थः। उपहूतः युष्माभिरनुज्ञातः अनुगृहीतः अहं सुमेधाः। भूयासम् इति शेषः। मेधां मा प्र मथिष्टेति प्रार्थितत्वात् सुमेधा भूयासम् इति आशास्यते। ब्रह्मणो वेदस्य प्रमथनाभावस्यापि प्रार्थनाद् वर्चस्वी ब्राह्मेण वर्चसा युक्तो भूयासम् इति प्रार्थ्यते।

मा नो मेधां मा नो दीक्षां मा नो हिंसिष्टं[2] यत् तपः।
शिवा नः [3]शं सन्त्वायुषे शिवा[3] भवन्तु मातरः॥ ३॥

मा। नः। मेधाम्। मा। नः। दीक्षाम्। मा। नः। हिंसिष्टम्[4]। यत्। तपः।
शिवाः[5]। नः। [6]शम्। सन्तु[6]। आयुषे। शिवाः[7]। भवन्तु। मातरः॥ ३॥

अत्र हिंसिष्टम् इति द्विवचनाद् द्यावापृथिव्यौ संबोध्ये। उत्तरमन्त्रेऽपि अश्विनोः संबुद्धिः। तयोश्च द्यावापृथिव्यात्मकता मता। हे द्यावापृथिव्यौ नो मेधाम् अधीतधारणबुद्धिं मा हिंसिष्टम् मा नाशयतम्। तथा नो दीक्षाम् नवनीताभ्यङ्गमुष्टीकरणवाग्यमनदण्डमेखलादिधारणसाध्यां च मा हिंसिष्टम्। एवं नः अस्माकं यत् तपः पयोव्रतादिरूपं क्लेशसहनात्मकं तपोऽस्ति तद् मा हिंसिष्टम्। तथा आपो देव्यः शिवाः मङ्गलाः सुखकारिण्यः सत्यः नः अस्माकम् आयुषे आयुरभिवृद्धये शंसन्तु[8] साधीयान् अयम् इति स्तुवन्तु। तथा मातरः मातृवद्धितकारिण्यो जगन्निर्मात्र्यो वा आपः शिवा भवन्तु।

[9]या नः[9] पीपरदश्विना[10] ज्योतिष्मती[11] तमस्तिरः[12]। तामस्मे[13] रासतामिषम्[14]॥४

या[15]। नः। पीपरत्[16]। अश्विना[17]। ज्योतिष्मती। तमः। तिरः। ताम्। [18]अस्मे इति[18]। रासताम्[19]। इषम्[20]॥ ४॥

---

१. वैतु. मंपा. २. हिंसिष्ट RW. ३. संस्वन्तु आयुषे° A,$B^h$,D,K,$K^m$,R, $S^m$,V,Dc,Cs,WM.; सस्वन्त आयुषे° C; सन्त्वायुषे° RW.; शंसन्त्वायुषे° S; सर्वा आयुष आपो पै २०,५७,४. ४. हिंसिष्ठम् J. ५. शिवा P,J,WM.; शिवा > शिवाः $P^2$, WM. ६. सम्ऽस्वन्तः P,$P^2$,J,WM. ७. शिवा L. ८. सन्तु S'; वैतु. मंपा. ९. मा नः A,D,K,$K^m$,R,Dc,$B^h$,$S^m$,V,Cs,WM.; मा नः C,S. १० पिपरिदश्विना A,D,K,$K^m$,R,Dc,$B^h$; पिपरिदुश्विना $S^m$; पीपरदश्विना V, ऋ १,४६,६; पीपरिदश्विना RW.; पिपरिदश्विना C; पीपरदश्विना S. ११. ज्योतिष्मती Cs; ज्योतिष्मती C,S. १२. तमस्तिरः C,S. १३. तामस्मै A,D,K,$K^m$,R,Dc,$S^m$,V,Cs,WM.; तामस्मै C, पै १२,६,१४ (मूको.). १४. रासतामिषुम् A,D,K,$K^m$,Dc,$B^h$,V,WM; रासितामिषुम् R,$S^m$; रासितामिषुं > रासतामिषुं Cs; रासतामिषुम् C; रासथामिषम् RW.; रासातामिषम् S; रासाथामिषम् ऋ. पै. १५. मा मूको. १६. पिपरित् मूको. १७. अश्विना मूको. १८. अस्मै मूको. १९. रासताम् P; रासताम् $P^1$,J. २०. इषुम् मूको.

हे अश्विना[1] अश्विनौ नः अस्मान् तमः सर्वस्यावरकं सर्वव्यवहारप्रतिबन्धकोऽन्धकारः मा[1] पीपरत् पारं मा गमयतु। किं तु ज्योतिष्मती सकलव्यवहारानुकूलप्रकाशोपेता रात्रिः तमः तिरः तिरस्करोतु। ताम् तादृशीम् इषम् सर्वैरिष्यमाणां ताम् उक्तलक्षणां रात्रिम् अस्मे अस्माकं रासाथाम्[1] प्रयच्छतम्। यद्वा इट्शब्देन सर्वैरिष्यमाणम् अन्नम् अभिधीयते। सैव ज्योतिष्मती प्रकाशवती अन्नवतो लोके प्रकाशदर्शनात्। यद्वा तमो नाम दारिद्र्यम्। तिरः सर्वस्य तिरोधायकम्। तमः मा पीपरत् ज्योतिष्मत्येव इट् पीपरत्। तां तादृशीम् इषं रासाथाम् इति व्याख्येयम्। शाखान्तरे तु 'या नः पीपरत्' (ऋ १,४६,६) इति आम्नायते।

इति पञ्चमेऽनुवाके सप्तमं सूक्तम्।

'भद्रमिच्छन्तः' इत्येतद् अष्टमं सूक्तम् एकर्चम्। तत्पाठस्तु—

'भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे[2]।
ततो राष्ट्रं[3] बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु[4] ॥ १ ॥

भद्रम्। इच्छन्तः। ऋषयः। स्वःऽविदः। तपः। दीक्षाम्। उपऽनिसेदुः। अग्रे।
ततः। राष्ट्रम्। बलम्। ओजः। च। जातम्। तत्। अस्मै। देवाः। उपऽसंनमन्तु ॥ १ ॥

अग्रे सृष्ट्यादौ पूर्वम् ऋषयः अतीन्द्रियार्थद्रष्टारः। 'ऋषिर्दर्शनात्। स्तोमान् ददर्शेत्यौपमन्यवः' इति निरुक्तम् (२,११)। ते भद्रम् कल्याणं क्षेमम् इच्छन्तः स्वर्विदः स्वर्गं लभमानाः तत्साधनत्वेन तपः पयोव्रतादिलक्षणं दीक्षाम् नवनीताभ्यङ्गमुष्टीकरणवाग्यमनदण्डमेखलादिधारणसाध्यां च उपनिषेदुः प्राप्ताः। ततः तत्सामर्थ्याद् राष्ट्रम् राज्यं बलम् सामर्थ्यम् ओजश्च जातम् निष्पन्नम्। तत् राष्ट्रादिकं देवा अस्मै पुरुषाय उपसंनमन्तु संयोजयन्तु।

इति पञ्चमेऽनुवाके अष्टमं सूक्तम्।

'ब्रह्म होता' इति नवमं सूक्तम्।

ब्रह्म होता ब्रह्म यज्ञा[5] ब्रह्मणा 'स्वरवो मिताः[6]'।
अध्वर्युर्ब्रह्मणो[7] जातो ब्रह्मणोऽन्तर्हितं[8] हविः ॥ १ ॥

---

१. वैतु. मंपा. २. भद्रं पश्यन्त उप सेदुरग्रे तपो दीक्षामृषयः सुवर्विदः तै ५,७,४,३. † दीक्षामुप° Bh. ३. क्षत्रं तै. ४. उपसंनं° A,Bh,R,V,Cs; अभि सं नमन्तु तै. ५. यज्ञो RW. ६. स्वरवामिता A,Bh,D,R,Sm; सरवामिता C; स्वरवामिता K,Km,V,Dc; संरवामिता Cs; स्वरगामिता S, सा. ७. अध्वर्युब्रह्मणो A,Bh,C,R,Sm,Cs. ८. °हितं A,Bh,C,D,K,Km,R,Sm,V,Dc,Cs.

ब्रह्म । होता । ब्रह्म । यज्ञाः । ब्रह्मणा । [१]स्वरवः । मिताः[१] ।
अध्वर्युः । ब्रह्मणः । जातः । ब्रह्मणः । अन्तःऽहितम्[२] । हविः ॥ १ ॥

ब्रह्म जगदुपादानकारणं तत्त्वम् । तदेव यज्ञाङ्गभूतहौत्रकर्तृत्वोपाधिना[3] होता इत्युच्यते । कृत्स्नस्य कार्यकारणप्रपञ्चस्य ब्रह्मात्मकत्वात् 'ब्रह्मैवेदं सर्वम्' ( मुउ २,२,११ ), 'तत् सृष्ट्वा तदेवानुप्राविशत्' ( तैआ ८,६ ) इति स्वसृष्टसकलपदार्थानुप्रवेशश्रुतेश्च । 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी' ( श्वेउ ४,३ ) इति श्रुतेर्ब्रह्मव्यतिरिक्तस्य कस्यचिदभावाद् ब्रह्मणो होत्रादिरूपत्वम् । तथा यज्ञाः ज्योतिष्टोमादयोऽपि ब्रह्म एव । 'तस्माद् ऋचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च' ( मुंउ २,१,६ ) इति मुण्डकश्रुतेः ब्रह्मैव यज्ञा इत्युच्यन्ते । एवं ब्रह्मणा एव स्वरगामिता[४] स्वराणां क्रुष्टादीनां[५] सप्तानाम् उदात्तादीनां च चतुर्णां गामिता यज्ञानुप्रवेष्टृता[६] । उद्गातृत्वादिभाव इत्यर्थः । यद्वा स्वर्गं गन्तृता । ज्योतिष्टोमाद्यनुष्ठातृभ्य इति शेषः । अध्वर्युः अपि ब्रह्मणः एव जातः उत्पन्नः । प्रागुक्तनीत्या ब्रह्मणः सकाशाद् उत्पत्तिरवगन्तव्या । तथा हविः यज्ञसाधनभूतं चरुपुरोडाशाज्यसोमादिलक्षणं ब्रह्मणि[४] अन्तर्हितम् इन्द्राद्युद्देशेन दत्तमपि [७]ब्रह्मण्येवावतिष्ठते । 'ब्रह्मार्पणं ब्रह्म हविः' ( भगी ४,२४ ) इत्यादिस्मृतेः । 'ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचः । ब्रह्म यज्ञानां हविषाम् आज्यस्य' ( तैब्रा ३,७,११,१ ) इति मन्त्रवर्णाद् ब्रह्मणि हविषाम् अवस्थानम् । अथवा अत्र ब्रह्मशब्देन 'अथर्वाङ्गिरोविदं ब्रह्माणम्' ( गोब्रा १, २,२४ ) इति श्रुतेः ब्रह्माख्य[८] ऋत्विग् वाभिमतः । तस्य सर्वानुज्ञातृत्वात् होत्रादिरूपत्वेन स्तुतिः ।

[९]ब्रह्म स्रुचो[९] घृतवतीर्ब्रह्मणा[१०] वेदिरुद्धिता[११] ।
ब्रह्म यज्ञस्य[१२] [१३]तत्त्वं† च[१३] ऋत्विजो ये हविष्कृतः[१४] । [१५]शमिताय‡ स्वाहा[१५] ॥२॥

ब्रह्म । स्रुचः[१६] । घृतऽवतीः । ब्रह्मणा । वेदिः । उद्धिता[१७] ।
ब्रह्म । यज्ञस्य । तत्त्वम् । च । ऋत्विजः । ये । हविःऽकृतः[१८] । शमिताय । स्वाहा ॥२॥

स्रुचः होमसाधनभूता जुहूपभृदादयोऽपि ब्रह्म । ताश्च घृतवतीः घृतवत्यो होमार्थेन घृतेन पूर्णाः । ब्रह्मणा एव वेदिः हविरासादनसाधना ब्रह्मणैव उद्धृता[४] उद्धननखनन-

---

१. स्वऽः । अवामिता P,P², J. २. °हिते P,P¹,J. ३. °हौकर्तृपोधिना S'. ४. वैतु. मंपा. ५. क्रुष्टा° S'. ६. °वेष्टता S'. ७. ब्रह्मण्यं वा S'. ८. एवं तु स्वरो दुष्यति. ९. ब्रह्म स्रुचो A,Bʰ,C,D,R,Sᵐ,Cs,RW.; ब्रह्म स्रुचो > ब्रह्मस्रुचो Dc. १०. घृतवती ब्रह्म° Bʰ,R,Sᵐ,Cs. ११. °सद्धिता, °स्कृता V; °स्वृधता S. सा. १२. यज्ञश्च RW. १३. तन्तवः । तैब्रा २,४,७,११; वैप १,१४०३ i द्र. † तन्वं WM. १४. हविःकृतः Bʰ,C; हविष्कृतः R,Sᵐ,Cs; हविष्कृतः > हविष्कृतः Dc. १५. संमिताय स्वाहा इति पृथङ्मन्त्रः S. ‡ शंमिताय, संमिताय V. १६. स्रुचः P,J. १७. उत्ऽहिता P,P²,J. १८. हविःऽकृतः P,J.

निर्माणैः संपादिता । यज्ञस्य ज्योतिष्टोमाद्यात्मकस्य यागस्य तत्त्वम् पारमार्थिकं रूपं च ब्रह्मैव । अत्र तत्त्वं चेति विशेषितत्वाद् अत्रोक्तानां होत्रादीनां पारमार्थिकं रूपं ब्रह्मैव तत्रैव परिकल्पितत्वात् कृत्स्नप्रपञ्चस्य । यथा मृदुपादानभूताः शरावाद्यो मृदेव एवं ब्रह्मोपादानभूतास्तत्त्वतो ब्रह्मैवेत्यभिप्रायः । ये च हविष्कृतः हविष्कर्तार ऋत्विजः उक्तव्यतिरिक्ताः प्रतिप्रस्थात्राद्याः तेऽपि ब्रह्मैव ।

संमिताय[1] उक्तप्रकारेण होत्राद्यात्मना संमिताय । अभेदम् आपन्नाय ब्रह्मण इत्यर्थः । तस्मै स्वाहा स्वाहुतम् अस्तु । अथवा अयम् (मन्त्रः) उक्तब्रह्महोतेत्यादिमन्त्रद्वयशेषो द्रष्टव्यः ।

अंहोमुचे प्र भरे[2] [3]मनीषामा सुत्राव्णे[3] सुमतिमावृणानः[4] ।
इममिन्द्र[5] प्रति हव्यं गृभाय[6] सत्याः सन्तु यजमानस्य कामाः ॥ ३ ॥

अंहःऽमुचे[7] । प्र । भरे । मनीषाम् । आ । सुऽत्राव्णे । सुऽमतिम् । आऽवृणानः[8] ।
इमम् । इन्द्र । प्रति । हव्यम् । गृभाय । सत्याः । सन्तु । यजमानस्य । कामाः ॥ ३ ॥

अहम् अंहोमुचे अंहसां पापानां मोचयित्रे सुत्राम्णे[9] सुतरां त्रात्रे इन्द्राय । प्र भर इति संबन्धः । सुमतिम् शोभनां स्तुतिं मयि शोभनमतिं वा इन्द्रस्य गृणानः[6] उच्चारयन् कुर्वन् अहं मनीषां मनस ईशित्रीं स्तुतिं प्र भरे संपादयामि[10] । हे इन्द्र त्वम् इमम् इदम् इदानीं हव्या[6] हव्यानि प्रति गृभाय स्वीकुरु । यजमानस्य कामाः आयुरादिविषयाः सत्याः अवितथाः सन्तु भवन्तु ।

अंहोमुचं वृषभं यज्ञियानां विराजन्तं प्रथममध्वराणाम् ।
अपां नपातमश्विना [11]हुवे धिय इन्द्रियेण त[11] इन्द्रियं दत्तमोजः[12] ॥ ४ ॥

अंहःऽमुचम् । वृषभम् । यज्ञियानाम् । विऽराजन्तम् । प्रथमम् । अध्वराणाम् ।
अपाम् । नपातम् । अश्विना । हुवे[13] । धियः । इन्द्रियेण । ते । इन्द्रियम् । दत्तम् । ओजः ॥

यज्ञियानाम् यज्ञार्हाणां देवानां मध्ये वृषभम् श्रेष्ठम् । सर्वेषां देवानां स्वामित्वाद् यज्ञेषु इन्द्रेण विना सोमादिहविःसंबन्धाभावाच्च यज्ञियेषु वृषभत्वम् । 'अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे' ( तै ४,७,६,१ ) इत्यादिषु सर्वत्र इन्द्रस्य प्रतिदेवतम्

---

१. वैनु. मंपा.; पृ १९२९ टि १५ द्र. २. भरेमा तै १,६,१२,३ मै ४,१२,३.
३. °षामोषिष्ठदाव्ने तै.; °षां भूयिष्ठदाव्ने मै. ४. सुमतिं मा Bh,D,K,Km,R,Sm,V,Dc; सुमतिं मा° C; सुमतिं गृणानाः तै; सुमतिं गृणानः S, सा. ५. इदमिन्द्र RW. तै. मै.
६. जुषस्व मै. ७. °मुचम् P². ८. मा । वृणानः P,P²,J. ९. वैतु. मंपा.
१०. शंसंपा° S'. ११. हुवे° C,D,Sm,V; हुवे° > हुवे° Dc; हुवे धियेन्द्रेण म RW.; हयन्तमस्मिन्नर तै १,६,१२,३. १२. दत्त, धत्त V; धत्त° तै. सा. १३. हुवे P².

**अनुप्रवेशाद्** 'यत सर्वेषाम् अर्धम् इन्द्रः प्रति तस्माद् इन्द्रो देवतानां भूयिष्ठभाक्तमः' (तै ५,४,८,३) **इति श्रुतेः,** 'माध्यंदिनं सवनं केवलं ते' (ऋ ४,३५,७) **इति मन्त्रवर्णाच्च इन्द्रस्य यज्ञियेषु सर्वत्रानुगतेर्वृषभत्वम् । अत एव** अध्वराणाम् **यज्ञानां मध्ये** विराजन्तम् **विशेषेण दीप्यमानं** प्रथमम् **मुख्यम् । अथवा अध्वराणां प्रथमम् आदिभूतम् । तेषाम् इन्द्रार्थत्वात् । एवंमहानुभावम् इन्द्रं हुवे इति संबन्धः । अपि च** अपां नपातम् **उदकानां न पातयितारं स्रष्टारम् । अग्नौ हुतया आहुत्या वृष्ट्युत्पत्तेः,** 'अग्नेरापः' (तैआ ८,१,१) **इति श्रुतेश्च । अथवा अपां नप्तारम् । अद्भ्य ओषधयः ओषधीभ्योऽग्निर्जायत इति प्रसिद्धम् । अग्निं तथा** अश्विना **अश्विनौ** हुवे **आह्वयामि । तावश्विनौ** इन्द्रियेण **इन्द्रसामर्थ्येन** ते तव धियम्[1] **प्रकृष्टां बुद्धिम्** इन्द्रियम् **दर्शनश्रवणादिसामर्थ्यम्** ओजः बलं च धत्ताम्[1] **धारयतां प्रयच्छताम् ।**

**इति पञ्चमेऽनुवाके नवमं सूक्तम् ।**

'यत्र ब्रह्मविदः' **इति दशमं सूक्तम् ।**

**यत्र॑ ब्रह्म॒विदो॒ यान्ति॑ दी॒क्षया॑ तप॑सा स॒ह ।**
**अ॒ग्निर्मा॒ तत्र॑ नयत्व॒ग्निर्मे॒धा॑[2] द॑धातु मे । अ॒ग्नये॒ स्वाहा॑ ॥ १ ॥**

यत्र॑ । ब्र॒ह्म॒ऽवि॒दः॑ । यान्ति॑ । दी॒क्षया॑ । तप॑सा । स॒ह ।
अ॒ग्निः । मा॒ । तत्र॑ । न॒य॒तु॒ । अ॒ग्निः । मे॒धाः[3] । द॒धा॒तु॒ । मे॒ । अ॒ग्नये॑ । स्वाहा॑ ॥ १ ॥

यत्र **यस्मिन् स्थाने सुकृतफलभोगाश्रये** ब्रह्मविदः **सगुणब्रह्मस्वरूपं जानन्तः । अथवा ब्रह्म परिवृढं कर्म तद्विदः तद्विषयज्ञानवन्तो महान्तो** दीक्षया **दण्डकृष्णाजिनमेखलादिधारणात्मिकया ।** 'दण्डेन दीक्षयति' (तु. तै ६,१,४,१), मेखलया × दीक्षयति' (तै ६,१,३,५), 'कृष्णाजिनेन दीक्षयति' (तै ६,१,३,२) **इत्यादिश्रुतेः ।** [4]तपसा सह[4] **पयोव्रतादिनियमजन्येन सह** यान्ति **गच्छन्ति । उपलक्षणम् एतत् । दीक्षातपआदिधर्मोपेतेन अग्निष्टोमादिकर्मणेत्यर्थः ।** तत्र **तत् स्थानम्** अग्निः **देवः** मा नयतु **प्रापयतु गमयतु**[5] **। तदर्थम्** अग्निः **देव एव मे मह्यं** मेधाः **तद्विषयप्रज्ञा** दधातु **प्रयच्छतु ।** अग्नये स्वाहा **य एवं स्वर्गं गमयति यश्च मेधां प्रयच्छति तस्मा अग्नये स्वाहा इदं हविः स्वाहुतम् अस्तु ।**

**यत्र॑ ब्रह्म॒विदो॒ यान्ति॑ दी॒क्षया॑ तप॑सा स॒ह ।**
**वा॒युर्मा॒ तत्र॑ नयतु वा॒युः प्रा॒णान् द॑धातु मे । वा॒यवे॒ स्वाहा॑ ॥ २ ॥**

---

१. वैद्व. मंपा. २. °मे॒धां A,K,K^m,V,Dc,WM,RW. ३. मे॒धा P,J; मे॒धाम् P². ४. पयसोसा S'. ५. यमयतु S'.

यत्रं । ब्रह्मऽविर्दः । यान्ति । दीक्षयां । तपसा । सह ।
वायुः । मा । तत्रं । नयतु । वायुः । प्राणान् । दधातु । मे । वायवे । स्वाहां ॥ २ ॥

**पूर्वार्धर्चः पूर्ववद् व्याख्येयः । तृतीयपादे अग्निरित्यस्य स्थाने वायुः इति विशेषः । तादृशो** वायुः मे **मम** प्राणान् दधातु **मयि स्थापयतु । अत्र प्राणान् इति बहुवचनेन प्राणापानादयः पञ्च प्राणा ग्राह्याः । वायोः प्राणानां च बाह्याभ्यन्तरभेदमात्रेण**[1] **भेदात्** । 'वायुः प्राणो भूत्वा नासिके प्राविशत्' ( ऐआ २,४,२ ) **इति श्रुतेः वायोः प्राणस्थापनप्रार्थना युक्ता** । वायवे स्वाहा **इति स्पष्टम्** ।

**यत्रं ब्रह्मविदो यान्ति दीक्षया तपसा सह ।**
**सूर्यो मा तत्रं नयतु चक्षुः सूर्यो दधातु मे । सूर्याय स्वाहां ॥ ३ ॥**

यत्रं । ब्रह्मऽविर्दः । यान्ति । दीक्षयां । तपसा । सह ।
सूर्यः । मा । तत्रं । नयतु । चक्षुः । सूर्यः । दधातु । मे । सूर्याय । स्वाहां ॥ ३ ॥

'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' ( ऐआ २,४,२ ) **इति श्रुतेः सूर्यस्य चक्षुरानुकूल्यं युक्तम् । गतम् अन्यत् ।**

**यत्रं ब्रह्मविदो यान्ति दीक्षया तपसा सह ।**
**चन्द्रो मा तत्रं नयतु [2]मनश्चन्द्रो दधातु मे । चन्द्राय[3] स्वाहां ॥ ४ ॥**

यत्रं । ब्रह्मऽविर्दः । यान्ति । दीक्षयां । तपसा । सह ।
चन्द्रः । मा । तत्रं । नयतु । मनः । चन्द्रः । दधातु । मे । चन्द्राय[4] । स्वाहां ॥ ४ ॥

**चन्द्रः प्रसिद्धः । तस्य मनआह्लादकत्वाद् मनस आनुकूल्यं युक्तम् ।**

**यत्रं ब्रह्मविदो यान्ति दीक्षया तपसा सह ।**
**सोमो मा तत्र नयतु[2] पयः सोमो दधातु मे । सोमाय स्वाहां ॥ ५ ॥**

यत्रं । ब्रह्मऽविर्दः । यान्ति । दीक्षयां । तपसा । सह ।
सोमः । मा । तत्रं । नयतु । पयः । सोमः । दधातु । मे । सोमाय । स्वाहां ॥ ५ ॥

**सोमोऽत्र अभिषूयमाणो वल्लीरूपः परिगृह्यते** 'सोमो वा ओषधीनां राजा' (**तैब्रा ३,९,१७,१) इति श्रुतेः । ओषधीनां सोमस्य च रसात्मकत्वात् पयःस्थापकत्वं युक्तम् ।**

---

१. बाह्याबाह्याभ्य° S′. २. मनं इत्यारभ्य उत्तरमन्त्रे नयतु इत्यन्तं नास्ति S′.
३. चन्द्राय D. ४. चन्द्राय P; चन्द्राय > चन्द्रायं J.

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
इन्द्रो मा तत्र नयतु बलमिन्द्रो दधातु मे । इन्द्राय स्वाहा ॥ ६ ॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
इन्द्रः । मा । तत्र । नयतु । बलम् । इन्द्रः । दधातु । मे । इन्द्राय । स्वाहा ॥ ६ ॥

इन्द्रस्य बलरूपत्वं श्रुतिस्मृतिप्रसिद्धम् ।

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
आपो मा तत्र नयत्वमृतं[1] मोप तिष्ठतु । अद्भ्यः स्वाहा ॥ ७ ॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
आपः । मा । तत्र । नयतु । अमृतम् । मा । उप । तिष्ठतु । अत्ऽभ्यः । स्वाहा ॥७॥

'अमृतं वा आपः' ( तैआ १,२६,७ ) इति श्रुतेः गतप्राणस्यापि उदकसंबन्धेन आप्यायनसंभवाद् अपाम् अमृतप्रदानप्रार्थना युज्यते । मा माम् अमृतम् उप तिष्ठतु प्राप्नोतु ।

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
ब्रह्मा मा तत्र नयतु ब्रह्मा ब्रह्म दधातु मे । ब्रह्मणे स्वाहा ॥ ८ ॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
ब्रह्मा । मा । तत्र । नयतु । ब्रह्मा । ब्रह्म । दधातु । मे । ब्रह्मणे । स्वाहा ॥ ८ ॥

ब्रह्मा जगत्स्रष्टा हिरण्यगर्भः ब्रह्म स्वस्वरूपभूतं श्रुताध्ययनजन्यं तेजो वा दधातु ।

इति पञ्चमेऽनुवाके दशमं सूक्तम् ।

'आयुषोऽसि' इति एकादशं सूक्तम् । अनेन सूक्तेन उत्तरेण च 'नैर्ऋतीं[2] निर्ऋतिगृहीतस्य' ( शांक १७,५ ) इति विहितायां नैर्ऋत्याख्यायां महाशान्तौ आञ्जनमणिम् अभिमन्त्र्य बध्नीयात् । उक्तं हि शान्तिकल्पे— " 'हरिणस्य' ( अ ३,७ ) इति विषाणाग्रं कौमार्याम् । 'आयुषोऽसि प्रतरणम्' इत्याञ्जनं नैर्ऋत्याम्" ( शांक १९,७ ) इति ।

आयुषोऽसि प्रतरणं [3]विप्रं भेषजमुच्यसे[3] ।
तदाञ्जन त्वं शंताते[4] शमापो अभयं कृतम्[5] ॥ १ ॥

---

१. नयस्त्वं° RW. २. नैर्ऋती S'. ३. विश्वभेषज° RW.; °मुच्यते A,D; °मुच्यते > °मुच्यसे C; °मुच्यसे > °मुच्यते R. ४. शंताति RW.; वैप १,३०७९ j,1 अपि द्र. ५. कृतम् A,B[h],C,D,K,K[m],S[m],V,Dc,Cs; कृत WM.; कृत B[a],RW.

आयुषः । असि । प्रऽतरणम् । विप्रम् । भेषजम् । उच्यसे ।
तत् । आऽअञ्जन । त्वम् । शम्ऽताते[1] । शम् । आपः । अभयम् । कृतम्[2] ॥ १ ॥

**हे** आञ्जन त्वम् आयुषः प्रतरणम् **शतसंवत्सरपर्यन्तनयनप्रवर्धकं**[3] विप्रम् **प्रीणयितृ विप्रवच्छुद्धं वा** भेषजम् **औषधम्** उच्यसे **सर्वैर्निदानज्ञैः ।** तत् **तस्मात् कारणात् हे आञ्जन हे** शंताते **शंरूप**[4] **। स्वार्थिकस्तातिल्प्रत्ययः । हे उदकलक्षण आञ्जन त्वम्** आपः **च अब्देवता च** शम् **सुखम्** अभयम् **भयराहित्यं च** कृतम् **कृणुतम् ।**

**यो हरिमा जायान्योऽङ्गभेदो विसल्पकः**[5] **।**
**सर्वं ते यक्ष्ममङ्गेभ्यो बहिर्निर्हन्त्वाञ्जनम्**[6] **॥ २ ॥**

यः । हरिमा । जायान्यः[7] । अङ्गऽभेदः । विऽसल्पकः ।
सर्वम् । ते । यक्ष्मम् । अङ्गेभ्यः । [8]बहिः । निः । हन्तु[8] । आऽअञ्जनम् ॥ २ ॥

यो हरिमा **शरीरे हरिद्वर्णकारकः**[9] **पाण्ड्वाख्यो रोगविशेषः । स च** ज्यायान्[10] **अतिप्रवृद्धः दुश्चिकित्सः । तथा** यः[10] अङ्गभेदः **वातादिजन्यः अवयवविश्लेषरूपो रोगः । यो** विसर्पकः[10] **विविधं सरणशीलो व्रणविशेषः । स च प्रायेण जान्वोरधःप्रदेशे जायते । हे आञ्जनमणिधर्तः तं** सर्वं यक्ष्मम् **व्याधिं** ते **तव** अङ्गेभ्यः **अवयवेभ्यः** बहिः **पृथक्कृत्य** आञ्जनं निर्हन्तु **नितरां नाशयतु ।**

**आञ्जनं पृथिव्यां जातं भद्रं पुरुषजीवनम्**[11] **।**
**कृणोत्वप्रमायुकं रथजूतिमनागसम् ॥ ३ ॥**

आऽअञ्जनम् । पृथिव्याम् । जातम् । भद्रम् । पुरुषऽजीवनम् ।
कृणोतु । अप्रऽमायुकम् । रथऽजूतिम् । अनागसम् ॥ ३ ॥

पृथिव्याम् **भूमौ** जातम् **उत्पन्नं** भद्रम् **कल्याणं मङ्गलप्रदं** पुरुषजीवनम् **पुरुषाणां स्वधारकाणां जीवयितृ एवंमहानुभावम्** आञ्जनं **माम्** अप्रमायुकम् **अमरणशीलं** कृणोतु **। तथा** रथजूतिम् **रथजवं रथवद्वेगगामिनम् । अथवा रथजवोपेतं रथवन्तं कृणोतु ।** अनागसम् **अपापम् । सर्वत्र कृणोत्विति संबन्धः ।**

---

१. शंताते P,P², J. २. कृतम् P,P²,J. ३. °नयनंप्र° S'. ४. शंरूपं S'. ५. विसल्यकः RW.; विशल्यकः पै १५,३,२. ६. बर्हिर्निरहंत्वांजनं Sm; बर्हिर्निरहुंत्वा° Bh,C,R,Cs; बर्हिर्निर्हरहुंत्वांजनं D; बर्हिर्निरहुंत्वा° > बहिर्निरहुंत्वा° Km; बर्हिर्निरहुंत्वा° V; बहिर्निरहुंत्वा° K; बर्हिर्निरहुंत्वांजनं > बहिर्निरहुंत्वांजनं Dc; बर्हिर्° पै [ मूको. ]. ७. जायान्युः P. ८. बर्हिः (बहिः J) । निः । अहुंतु P,P²,J. ९. हरिद्वर्णतो S'. १०. वैदु. मंपा. ११. पुरुष° A,Bh.

**प्राणं[1] प्राणं त्रायस्वासो असवे मृड । निर्ऋते निर्ऋत्या नः पाशेभ्यो मुञ्च[2] ।४।**

प्राणं । प्राणम् । त्रायस्व । असो इति । असवे । मृड । निःऽऋते । निःऽऋत्याः । नः । पाशेभ्यः । मुञ्च[3] ॥ ४ ॥

**सिन्धोर्गर्भोऽसि[4] विद्युतां पुष्पम्[5] । वातः प्राणः सूर्यश्चक्षुर्दिवस्पयः ॥ ५ ॥**

सिन्धोः[6] । गर्भः । असि । विऽद्युताम् । पुष्पम्[5] । वातः । प्राणः । सूर्यः । चक्षुः । दिवः । पयः ।

**देवाञ्जन[7] त्रैककुद[8] परि मा पाहि विश्वतः ।**
**न त्वा [9]तरन्त्योषधयो बाह्याः† पर्वतीया[9] उत ॥ ६ ॥**

देवऽआञ्जन[10] । त्रैककुद[8] । परि । मा । पाहि । विश्वतः ।
न । त्वा । तरन्ति । ओषधयः । बाह्याः । पर्वतीयाः । उत ॥ ६ ॥

**वी३दं मध्यमवासृपद्[11] रक्षोहामीवचातनः[12] ।**
**अमीवाः सर्वाश्चातयन्[13] नाशयदभिभा इतः ॥ ७ ॥**

वि । इदम् । मध्यम् । अव । असृपत् । रक्षःऽहा । अमीवऽचातनः ।
अमीवाः । सर्वाः । चातयत्[14] । नाशयत् । अभिऽभाः । इतः ॥ ७ ॥

**हे** प्राण **प्राणरूप आञ्जन त्वं मम** प्राणं त्रायस्व **रक्ष यथा अकाले नापगच्छति तथा कुरु । हे** असो **असुरूप आञ्जन त्वम्** असवे **असोरर्थाय** मृळ[15] **सुखय । हे** निर्ऋते **निर्ऋत्यात्मक आञ्जन त्वं** निर्ऋत्याः **पापदेवतायाः** पाशेभ्यः **बन्धकेभ्यो** मां[15] **मुञ्च मोचय [४] । त्वं च** सिन्धोः **समुद्रस्य** गर्भः **गर्भस्थानीयः** असि । **एवं** विद्युताम् पुष्पम् **वृष्ट्युदकम्** असि । **हे आञ्जन** त्वं वातः **बाह्यवाय्वात्मकः** [16]प्राणः **असि**[16] । **अतः प्राणान्**

---

१. प्राणंः A,B^h,C,D,R; प्राणंः > प्राणं Dc. २. मुञ्च A; मुंच C; मुंचत S^m. ३. मुच J. ४. तु. S, सा.; वैतु. A,B^h,C,D,R,S^m,V,Dc,Cs,WM. सिंधो ग°. ५. पुष्पंम् RW.J. ६. तु. मंपा.; वैतु. P,P², J सिन्धो इति. ७. देवांजनं A,B^h, C,D,K,K^m,R,S^m,Dc,WM. ८. तु. RW.W.WI. पै १५,३,६; वैतु. पपा. शंपा. सा. त्रैककुदम्. ९. चरन्त्योषधयो बाह्याः पर्वत्या पै.; °धयो बाह्या पर्व° A,B^h,C,K,K^m,R, S^m,V,Cs; °धयो बाह्याः पर्व° > °धयो बाह्याः पर्व° Dc. † बाह्याः RW. १०. °आञ्जनम् P,P²,J,WM. ११ °सृजद् पै १५,३,७. १२. °चातनम् पै. १३. सर्वांश्चात° RW. १४. चातयन् P,P²,J. १५. वैतु. मंपा. १६. वायोसि S'.

रक्षेत्यभिप्रायः। 'वायुः प्राणो भूत्वा नासिके प्राविशत्' ( ऐआ २,४,२ ) इति श्रुतेः। तथा सूर्यः सूर्यात्मकः चक्षुः चक्षुरिन्द्रियम् असि। अतश्चक्षुः पाहीत्यभिप्रायः। 'आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्' ( ऐआ २,४,२ ) इति श्रुतेः। वायोरंशीभूतः प्राणोऽसि सूर्यस्य च अंशीभूतं चक्षुरसीति तात्पर्यार्थः। तथा दिवः द्युलोकस्य पयः सारभूतम् उदकम् असि [५]। हे त्रैककुदम्[1]। त्रिककुन्नाम ककुत्त्रयोपेतः पर्वतविशेषः तत्संबन्धि आञ्जनं त्रैककुदम्। तादृश देवाञ्जन देवैः स्वरक्षार्थं धार्यमाण आञ्जन। यद्वा देवैः प्राण्युपकाराय सृष्ट आञ्जन मा मां विश्वतः सर्वतः परि पाहि रक्ष। हे आञ्जन त्वा त्वां बाह्याः पर्वतबाह्याः[2] पर्वतव्यतिरिक्तस्थलेषूत्पन्ना ओषधयो न तरन्ति न लङ्घयन्ति नातिशेरते। किं तु त्वत्तो न्यूनवीर्या एवेत्यर्थः। उत अपि च पर्वतीयाः पर्वते भवाः स्वयं त्रिककुदाख्यपर्वतोत्पन्नत्वाद् इतरहिमविन्ध्यादिपर्वतजा अपि ओषधयस्त्वा त्वां न तरन्ति। 'पर्वताच्च' (पा ४,२,१४३) इति छः [६]। किं च रक्षोहा रक्षोविघाती अमीवचातनः रोगाणां नाशकोऽयम् इदं परिदृश्यमानं यद् अस्ति तस्य मध्यं व्यवासृपत् प्रतिपदार्थम् [3]अवाङ्मुखं पर्वताद्[3] अधोऽगच्छत्। सर्वव्याप्यभूद् इत्यर्थः। सृपेर्लृदित्त्वाद् अङ्। [4]किं कुर्वत्। सर्वा अमीवाः येये रोगा आभ्यन्तरा नानाभेदभिन्नाः सन्ति तान् सर्वान् चातयत् नाशयत्। पुनः किं कुर्वत्। अभिभाः अभिभवतीति अभिभाः सर्वं रोगादिकम् इतो नाशयत् तिरस्कुर्वद् आञ्जनम्[4] [७]।

बह्वी३॒दं [5]रा॑जन् वरुणानृ॑तमाह॒[5] पूरु॑षः[6]।
तस्मा॑त् सहस्रवीर्य मु॒ञ्च न॒ः पर्यं॑हसः[7] ॥ ८ ॥

ब॒हु। इ॒दम्। रा॒ज॒न्[8]। व॒रु॒ण। अनृ॑तम्[9]। आ॒ह॒[10]। पुरु॑षः।
तस्मा॑त्। स॒ह॒स्र॒ऽवी॒र्य॒। मु॒ञ्च। न॒ः। [11]परि॑। अं॒ह॑सः[11] ॥ ८ ॥

हे राजन् वरुण प्राणिनां शिक्षाकर्तर्देव पूरुषः पुरुषः इदम् इदानीं बहु अनृतम् प्रातःप्रभृति शयनकालपर्यन्तम् अपरिमितम् असत्यम् आह ब्रूते। तद् अनृतं त्वं क्षमस्व तत्प्रयुक्तां शिक्षां मा कुरु। किं च हे सहस्रवीर्य आञ्जनौषधे त्वं तस्मात् वरुणशिक्षानिमित्तभूताद् अनृतवदनप्रयुक्ताद् अंहसः पापाद् नः अस्मान् परि मुञ्च परितः सर्वतो मुक्तान् कुरु।

---

१. वैतु. मंपा. २. पर्वतव्यतिरिक्तबाह्याः S'. ३. °मुखप° S'. ४. तु. शंपा.; वैतु. S' पुनः किं कुर्वन् अभिभा: अभिभवतीत्यभिभा सर्वं रोगादिकं तिरस्कुर्वन् आंजनं सर्वा अमीवा: ये ये रोगा आभ्यंतरा नानाभेदभिन्नाः सन्ति तान् सर्वान् नाशयत्. ५. राजन् वरुणानृत° R,Sm,Cs; राजन् वरुणानृत° B,C; राजन् वरुणानृत° D; राजन् वरुणानृत° Km,V; राजन् वरुणानृत° > राजन् वरुणानृत° Dc. ६. पुरुषः पै १९,२,८. ७. पर्यंहसः A,Bh, C,D,K,R,Sm; पर्यंहसः > पर्यंहसः Dc. ८. राजन् P,J. ९. अनृतम् J. १०. आहं P. ११. परिंऽअंहसः P,P², J.

'यदापो अघ्न्या इति वरुणेति यदूचिम'[१] ।
तस्मात् सहस्रवीर्य मुञ्च नः पर्यंहसः[२] ॥ ९ ॥

यत् । आपः । अघ्न्याः । इति । वरुण । इति । यत् । ऊचिम ।
तस्मात् । सहस्रऽवीर्य । मुञ्च । नः । [३]परि । अंहसः[३] ॥ ९ ॥

आपो यूयं जानीध्वे साक्षितया यद् ऊचिम उक्तवन्तः स्मः[४] । तथा अघ्न्या इति । अघ्न्या अहन्तव्या गाव उच्यन्ते । हे[५] अघ्न्याः यूयं मम चित्तं जानीध्व इति यद् ऊचिम । तथा हे वरुण त्वं जानासि इति यद् ऊचिम । हे सहस्रवीर्य अपरिमितसामर्थ्य [६]त्रैककुदाञ्जन तस्मात्[६] सर्वस्माद् अंहसः नः अस्मान् परि मुञ्च ।

मित्रश्च त्वा वरुणश्चानुप्रेयतुराञ्जन[७] ।
तौ त्वानुगत्य दूरं भोगाय पुनरोहतुः[८] ॥ १० ॥

मित्रः । च । त्वा । वरुणः । च । अनुऽप्रेयतुः । आऽअञ्जन ।
तौ । त्वा । अनुऽगत्य । दूरम् । भोगाय । [९]पुनः । आ । ऊहतुः[९] ॥ १० ॥

हे आञ्जन ओषधे मित्रश्च वरुणश्च उभौ अहोरात्राभिमानिनौ देवौ द्युलोकाद् भूमिम् आगत्य पुनः केनचिन्निमित्तेन पराङ्मुखं गच्छन्तं त्वा त्वाम् अनुप्रेयतुः अनुसृत्य जग्मतुः । तौ मित्रावरुणौ त्वा त्वां दूरम् अनुगत्य भोगाय प्राणिनाम् उपभोगाय पुनराहतुः[५] पुनरागन्तव्यम् इति ऊचतुः । प्रतिनिवर्तितवन्तावित्यर्थः । एवंमहानुभावस्त्वम् असीति त्रैककुदाञ्जनस्तुतिः ।

इति पञ्चमेऽनुवाके एकादशं सूक्तम् ।

'ऋणादृणमिव' इति द्वादशसूक्तस्य आञ्जनमणिबन्धने पूर्वसूक्तेन सह उक्तो विनियोगः ।

ऋणादृणमिव[१०] संनय[११] कृत्यां कृत्याकृतो गृहम् ।
चक्षुर्मन्त्रस्य दुर्हार्दः पृष्टीरपि[१२] शृणाञ्जन[१३] ॥ १ ॥

---

१. पृ १०१४ टि ३-५ द्र.  २. पर्यंहसः WM.  ३. परिऽअंहसः WM.  ४. स्म S'.  ५. वैतु. मंपा.  ६. °दांजान ततस्मात् S'.  ७. वरुण° Bʰ,D,R,Sᵐ,Cs,V.  ८. पुनरोहतु A,Bʰ,C,D,K,Kᵐ,R,Sᵐ,V,Dc,Cs; पुनराहतुः S, सा. V; पुनारोहतु E²; पुनरोहताम् RW.  ९. पुनः । रोहुतु P,P⁵,J.  १०. रिणाद्रिणमिव Bʰ,C; ऋणाहर्णमिव R,D,Sᵐ,Cs; ऋणादृणमिव K; ऋणाहर्णमिव > ऋणादृणमिव Dc.  ११. तु. RW. पै १५,४,१; वैतु. शंपा. संनयन्; C,R,Dc,Cs सन्नयं; B,D,Sᵐ,Kᵐ,V संनयं; K संनयन्.  १२. पृष्ठीरपि C,Kᵐ,V,Dc; °रप पै.  १३. इणा° पै.

ऋणात्[1] । ऋणम्ऽइव[2] । [3]सम् । नय[3] । कृत्याम् । कृत्याऽकृतः । गृहम् ।
चक्षुःऽमन्त्रस्य । दुःऽहार्दः । पृष्टीः[4] । अपि । शृण । आऽअञ्जन ॥ १ ॥

**यथा लोके कस्यचिद् धनिनो हस्ताद् गृहीताद्** ऋणात् **सकाशाद् भीतः सन् यद्वा ऋणाद्** [5]**ऋणदातुरुत्तमर्णाद् आनीतम्** ऋणं[5] **तदीयं यथा तस्यैव प्रत्यर्पयति एवं** कृत्याम् **पीडार्थं प्रेषितां पिशाचिकां देवतां** कृत्याकृतः **कृत्याम् उत्पादितवतः पुरुषस्य** गृहं **प्रति** संनयन्[6] **सम्यग्गमयन्** मित्रस्य[6] **आदित्यस्य** चक्षुः[6] **चक्षुस्थानीयः। यद्वा मित्रभूतस्य मम चक्षुस्थानीयस्त्वम् हे** आञ्जन **ओषधे** दुर्हार्दः **दुष्टहृदयस्य वैरिणः** पृष्टीः **पार्श्वास्थीनि** अपि शृण **घातय।**

**यदस्मासु दुष्वप्न्यं यद् गोषु यच्च नो गृहे ।**
**[7]अनामगस्तं च[7] [8]दुर्हार्दः प्रियः[8] प्रति मुञ्चताम् ॥ २ ॥**

यत् । अस्मासु । दुःऽस्वप्न्यम् । यत् । गोषु । यत् । च । नः । गृहे ।
अनामगः । तम्[9] । च । दुःऽहार्दः । प्रियः । प्रति । मुञ्चताम् ॥ २ ॥

अस्मासु । **भ्रातृपुत्रभृत्याद्यपेक्षया अस्मास्विति बहुवचनम्।** यद् दुष्वप्न्यम्। **दुष्टं च तत् स्वप्नम् च दुःष्वप्नम्[10] तज्जन्यं दुःखं दुःष्वप्न्यम्। यद्वा दुःष्वप्नमेव [10]दुःष्वप्न्यम् तद् यद् अस्ति।** यत् च गोषु **दुष्वप्न्यम् अस्ति।** यच्च नो गृहे **दासादीनां दुःष्वप्न्यम् अस्ति** तद्[6] **दुःष्वप्न्यम्** अनामकः[6] **ईदृङ्नामा तादृङ्नामा इत्येवंनामरहितो** दुर्हार्दः **दुष्टचित्तः** अप्रियः[6] **मयि द्वेषं कुर्वाणः शत्रुः** प्रति मुञ्चताम् **रुक्माद्याभरणवद् धारयतु।**

**अपामूर्ज ओजसो वावृधानमग्नेर्जातमधि जातवेदसः ।**
**चतुर्वीरं पर्वतीयं[11] यदाञ्जनं दिशः प्रदिशः करदिच्छिवास्ते ॥ ३ ॥**

अपाम् । ऊर्जः । ओजसः । ववृधानम् । अग्नेः । जातम् । अधि । जातऽवेदसः ।
चतुःऽवीरम् । पर्वतीयम् । यत् । आऽअञ्जनम् । दिशः । प्रऽदिशः । करत् । इत् । शिवाः । ते ॥

---

१. रिणात् P,P². २. रिणम्ऽइव P; रिणम्ऽइव P²; ऋणम्ऽइव J. ३. वै. मंपा.; वैतु. शंपा. सम्ऽनयन्; P,P²,J सम्ऽनयम्. ४. पृष्ठीः P,J. ५. ऋणदातुमुत्तमर्णाद् आनीतऋणं S'. ६. वैतु. मंपा. ७. °गस्तं चं R; °गस्त्वं च A,B^b,C,K,K^m,Dc; °गस्तं वं D; °गस्त्वं च > °गस्त्वां च S^m; °गस्त्वं मं, °कस्त्वच्च V; अनागमस्त चं C; °कस्त्वच्च S; अनामयत्वं चं RW.; वैप १,१७० f अपि द्र. ८. दुर्हार्दोप्रियः V,S, सा.; दुर्हार्दोऽप्रियः RW.; वैप १,२२४४ f अपि द्र. ९. त्वम् P,P²,J. १०. उभयथापि स्वरः ? ११. पर्वत्यं पै १५,४,३.

अपाम् उदकानाम् ऊर्जम्[1] रसभूतं सारभूतम् अत एव ओजसः बलस्य वाम्र-धानम् । वर्धकम् इत्यर्थः । अथवा ओजसः अर्थाय वर्धमानम् । तथा जातवेदसः जातधनस्य प्राप्ततेजोलक्षणधनस्य अग्नेरधि अग्नेः सकाशात् जातम् । अधिः पञ्च-म्यर्थानुवादी । तथा चतुर्वीरम् चतसृषु दिक्षु विक्रान्तं सर्वतोऽकुण्ठितशक्ति[2]। यद्वा चत्वारो वीराः पुत्रा यस्य तत्[3] पुत्रचतुष्टयाख्यफलस्य दातृ[4] पर्वतीयम् पर्वते त्रिककुदाख्ये उत्पन्नम् । 'पर्वताच्च' (पा ४,२,१४३) इति छप्रत्ययः । एवंमहानुभावं यद् आञ्जनम् अस्ति तत् ते दिशः अवान्तरदिश इत् प्रदिशः प्रकृष्टा दिशः प्रागाद्याश्च शिवाः मङ्गलाः सुखप्रदाः करत्[5] कुर्यात् । यद्वा इच्छब्दः करत् इत्यनेन संबध्यते । करोत्वेव ।

चतु॑र्वीरं बध्यत॒ आञ्ज॑नं ते॒ सर्वा॒ दिशो॒ अभ॑यास्ते भवन्तु ।
ध्रु॒वस्ति॑ष्ठासि 'सवि॒तेव॒ चार्यं॑' इ॒मा विशो॑" अ॒भि ह॑रन्तु ते ब॒लिम् ॥ ४॥

चतु॑ःऽवीरम् । ब॒ध्यते॒ । आ॒ऽअञ्ज॑नम् । ते॒ । सर्वाः॑ । दिशः॑ । अभ॑याः । ते॒ । भ॒व॒न्तु॒ ।
ध्रु॒वः । तिष्ठा॒सि॒ । स॒वि॒ताऽइ॑व । च॒ । आर्यः॑[8] । इ॒माः । विशः॑ । अ॒भि । ह॒र॒न्तु॒ । ते॒ । ब॒लिम् ॥

हे रक्षाफलकाम[9] ते तव चतुर्वीरम् दातव्यैश्चतुर्भिर्वीरैरुपेतं चतसृषु दिक्षु वीर्योपेतं [10]वा आञ्जनम्[10] अञ्जनमणिरूपम् औषधं[11] बध्यते । तेन किं फलतीत्यत्राह— मणिं धृतवतः ते सर्वा दिशः प्रदिशो दिशश्च अभयाः भयरहिता निर्भया भवन्तु । सर्वत्र अभयं फलम् इत्युक्तं भवति । किं च हे अर्य[1] स्वामिन् निर्भयस्त्वं सवितेव सूर्य इव विश्वं प्रकाशयन् ध्रुवस्तिष्ठासि तिष्ठ । सूर्यस्य इव अतितेजस्विनः चिरकालं तिष्ठतः ते इमाः सर्वा विशः प्रजा बलिम् [12]हिरण्यरजतमणिमुक्ताकरितुरगाद्युत्कृष्टपदार्थमयीम्[12] अपचितिम् अभि हरन्तु सर्वतः समर्पयन्तु । करं प्रयच्छन्तु इत्यर्थः ।

आक्ष्वैकं॑[13] म॒णिमेकं॑ कृणुष्व [14]स्ना॒ह्येके॑ना पि॒बैक॑मेषाम्[14] ।
चतु॑र्वीरं नैर्ऋ॒तेभ्य॑श्च॒तुर्भ्यो॒ ग्राह्या॒ बन्धे॑भ्यः॒ परि॑ पा॒त्व॒स्मान् ॥ ५ ॥

[15]आ । अ॒क्ष्व॒[15] । एक॑म् । म॒णिम् । एक॑म् । कृ॒णु॒ष्व॒ । [16]स्ना॒हि । एके॑न । आ । पि॒ब॒ । एक॑म्[16] ।
ए॒षा॒म् । चतु॑ःऽवीरम् । नैः॑ऽऋ॒तेभ्यः॑ । च॒तुः॒ऽभ्यः॑ । ग्राह्याः॑[17] । बन्धे॑भ्यः । परि॑ । पा॒तु॒ । अ॒स्मान् ॥

---

१. वैतु. मंपा. २. शक्तिं S′. ३. तं S′. ४. दातारं S′. ५. करवित् S′. ६. °वं चार्यऽ A,Bh,C,D,K,Km,R,V,Dc,Cs,WM.; °वं चार्यं Sm; °वं वार्यऽ B³; °वार्यं RW.; °वारि पै १५,४,४ [मूको.]; वैप १,७०० c अपि द्र. ७. दिशो E²,RW. पै. ८. आर्यऽ: P,P²,J,WM. ९. रक्षासिफल° S′. १०. वानांजन° S′. ११. औषधं ते S′. १२. °मणिमणिमुक्ता° S′. १३. आक्ष्वैकं Sm,WM.; आक्ष्वैकं RW. १४. °केना-पिबैकं° A,Bh,C,D,K,Km,R,Sm,V,Dc,Cs,WM.; °केन पिबैकं° RW.; वैप १,६६१ c अपि द्र.; °केनाविबेक' S; श्वसैकेन पिबैक' पै १५,४,५. १५. आक्ष्व P,P²,J,WM. १६. स्नाहि । एकेन । अपि । वा । एकम् P,P²,J,WM. १७. ग्राह्या P,P²,WM.; ग्राह्याः > ग्राह्या J.

हे पुरुष एकम् आञ्जनम् आङ्क्ष्व[1] चक्षुषि धारय । तथा एकं मणिं कृणुष्व कुरु। एकेन आञ्जनेन [2]स्नाहि स्नानं कुरु[2]। त्रिषु पर्वतककुत्सु उत्पन्नानि त्रीण्याञ्जनानि। तेषु कस्य कुत्रोपयोग इत्याशङ्कायां व्यवस्थाऽप्रसक्तावाह—अविवेकम्[1] एषाम् इति। एषां त्रयाणाम् अस्येदम् अस्येदम् इत्येवं विवेकम् अकृत्वा इच्छया एकम् आङ्क्ष्व एकं मणिं कुरु एकेन स्नाहीत्यर्थः। चतुर्वीरम् एतद् आञ्जनम् । ग्राह्याः ग्रहीतव्या आञ्जनमय्यः ओषधयः चतुर्भ्यः नैर्ऋतेभ्यः निर्ऋतिदेवतासंबन्धिभ्यो बन्धेभ्यः सकाशाद् अस्मान् परि पान्तु[1] सर्वतो रक्षन्तु ।

अ॒ग्निर्मा॒ग्निना॑वतु प्रा॒णाया॑पा॒नाया॒युषे॒ वर्च॑स॒ ओज॑से
तेज॑से स्व॒स्तयें सुभू॒तये[3] स्वाहा॑ ॥ ६ ॥

अ॒ग्निः । मा॒ । अ॒ग्निना॑ । अ॒व॒तु॒ । प्रा॒णाय॑ । अ॒पा॒नाय॑ । आयु॑षे ।
वर्च॑से । ओज॑से । तेज॑से । स्व॒स्तये॑ । सु॒ऽभू॒तये॑ । स्वाहा॑ ॥ ६ ॥

अग्निः अग्रणीत्वादिगुणविशिष्टो देवो मा माम् अग्निना[4] अग्नित्वधर्मेण । 'अग्निः कस्माद्। अग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति संनममानः' ( नि ७,१४ ) इत्यादिनिरुक्तोक्तेन धर्मेण अवतु रक्षतु । अथ वा पावकादिगुणकेन स्वमूर्त्यन्तरेण अग्निना सहितो माम् अवतु । अवनस्य विषयान् दर्शयति प्राणायेत्यादिना—प्राणाय प्राणस्थैर्याय अपानाय तत्स्थैर्याय । एतद् व्यानादीनामपि उपलक्षणम् । पञ्चानां प्राणानां लाभायेत्यर्थः । प्राणादिलाभे सति फलितम् अर्थं दर्शयति—आयुषे आयुर्वृद्धये प्राणादीनां स्थैर्ये सिद्धे आयुरभिवृद्धिः सिद्धैव। वर्चः श्रुताध्ययनजं तेजः ओजः बलं तेजः शरीरकान्तिः तेषां लाभाय स्वस्तये क्षेमाय सुभूतये शोभनायै संपदे । स्वाहा स्वाहुतम् अस्तु । तस्मा अग्नय इति शेषः। अथवा प्राणादिलाभाय प्राणादिदेवताभ्यो नमस्कारः क्रियते।

इन्द्रो॑ मेन्द्रि॒येणा॑वतु[5] प्रा॒णाया॑पा॒नाया॒युषे॒ वर्च॑स॒ ओज॑से
तेज॑से स्व॒स्तयें सुभू॒तये[6] स्वाहा॑ ॥ ७ ॥

इन्द्रः॑ । मा॒ । इ॒न्द्रि॒येण॑ । अ॒व॒तु॒ । प्रा॒णाय॑ । अ॒पा॒नाय॑ । आयु॑षे ।
वर्च॑से । ओज॑से । तेज॑से । स्व॒स्तये॑ । सु॒ऽभू॒तये॑ । स्वाहा॑ ॥ ७ ॥

इन्द्रो देवः मा माम् इन्द्रियेण इन्द्रत्वसंपादकेन असाधारणेन धर्मेण अवतु रक्षतु । 'इन्द्र इरां दृणातीति वा। इरां दारयतीति वा । इन्धे भूतानीति वा' ( नि १०,८ ) इत्यादिनिरुक्तोक्तेन धर्मेण । अथवा इन्द्रियेण । जात्येकवचनम् । ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च दार्ढ्येन निमित्तेनेत्यर्थः । इन्द्रियशब्दः पाणिनिना 'इन्द्रिय-

---

१. वैतु. मंपा. २. स्नात्यंहि स्थानंकुरु S'. ३. सुभूतये एवमग्रेऽपि RW.
४. अग्नि S'. ५. मेन्द्रेणावतु पै १५,४,७. ६. प्रभूतये पै.

मिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' ( पा ५,२,९३ ) इति बहुधा व्युत्पादितः। गतम् अन्यत्।

सोमो॑ मा सौम्ये॑नावतु प्राणाया॑पानायायु॑षे वर्च॑स ओज॑से तेज॑से स्वस्तये॑ सुभूतये॑[1] स्वाहा॑ ॥ ८ ॥

सोम॑ः। मा। सौम्ये॑न। अवतु। प्राणाय॑। अपानाय॑। आयु॑षे। वर्च॑से। ओज॑से। तेज॑से। स्वस्तये॑। सुऽभूतये॑। स्वाहा॑ ॥ ८ ॥

सोमो देवः मा मां सौम्येन सोमत्वसंपादकेन धर्मेण [illegible]प्यायनकारित्वादिधर्मेण अवतु। शिष्टं पूर्ववद् व्याख्येयम्।

भगो॑ मा भगे॑नावतु प्राणाया॑पानायायु॑षे वर्च॑स ओज॑से तेज॑से स्वस्तये॑ सुभूतये॑ स्वाहा॑ ॥ ९ ॥

भग॑ः। मा। भगे॑न। अवतु। प्राणाय॑। अपानाय॑। आयु॑षे। वर्च॑से। ओज॑से। तेज॑से। स्वस्तये॑। सुऽभूतये॑। स्वाहा॑ ॥ ९ ॥

[2]भगो देवः मा मां भगेन भगत्वसंपादकेन धर्मेण ऐश्वर्यादिकारित्वधर्मेण अवतु। शिष्टं गतम्।

मरुतो॑ मा गणैरवन्तु प्राणाया॑पानायायु॑षे वर्च॑स ओज॑से तेज॑से स्वस्तये॑ सुभूतये॑† स्वाहा॑ ॥ १० ॥[२]

मरुत॑ः। मा। गणैः। अवन्तु। प्राणाय॑। अपानाय॑। आयु॑षे। वर्च॑से। ओज॑से। तेज॑से। स्वस्तये॑। सुऽभूतये॑। स्वाहा॑ ॥ १० ॥

मरुतः अदित्या उत्पन्ना रुद्रेण पुत्रत्वेन परिगृहीता एकोनपञ्चाशत्संख्याकाः सप्तगणा देवाः। ते मा मां गणैः स्वगणैः[3] संघलक्षणैः अवन्तु।

इति पञ्चमेऽनुवाके द्वादशं सूक्तम्।

इति पञ्चमोऽनुवाकः समाप्तः।

षष्ठेऽनुवाके नव सूक्तानि। तत्र 'प्रजापतिष्ट्वा' इति प्रथमसूक्तेन 'मारुद्गणीं बलकामस्य प्रयुञ्जीत'[4] ( शांक १७,५ ) इति विहितायां मारुद्गण्याख्यायां महाशान्तौ अस्तुता-

---

१. प्रभूतये पै १५,४,८. २. नास्ति S'. † सुप्रभूतये पै १५,४,१०.
३. स्वगुणैः S'. ४. नास्ति Bol.

ख्यमणिम् अभिमन्त्र्य बध्नीयात् । सूत्रितं हि शान्तिकल्पे— "'[1]आयुषोसि प्रतरणम्'' (अ १९,४४) इत्याञ्जनं नैर्ऋत्याम् । 'प्रजापतिष्ट्वा बध्नात्' इति अस्तृतं[2] मारुद्गण्याम्'' (शांक १९,७) इति ।

[3]प्रजापतिष्ट्वा बध्नात्[3] प्रथममस्तृतं वीर्याय कम् ।
तत्[4] ते बध्नाम्यायुषे वर्चस ओजसे च बलाय चास्तृतस्त्वाभि रक्षतु ॥१॥

प्रजाऽपतिः । त्वा । बध्नात् । प्रथमम् । अस्तृतम् । वीर्याय । कम् । तत् । ते । बध्नामि ।
आयुषे । वर्चसे । ओजसे । च । बलाय । च । अस्तृतः । त्वा । अभि । रक्षतु ॥१॥

अत्र सूक्ते अस्तृताख्यो मणिः स्तूयते । 'अस्तृतस्त्वाभि रक्षतु' इति चरमपादे सर्वत्र युष्मच्छब्देन अस्तृतमणिधारकः पुरुषोऽभिधीयते । प्रजापतिः प्रजानां पालकः सर्वजगद्विधाता देवः प्रथमम् सृष्ट्यादौ मणिधारकेभ्यः पूर्वं वा अस्तृतम् परैरबाधितम् एतत्संज्ञकं [5]त्वा त्वां बध्नात् धारयामास । त्रिवृन्मणिरेव वा अतिशयितप्रभावत्वाद् अस्तृतसंज्ञया उच्यते । किमर्थम् वीर्याय वीरकर्मणे पराभिभवनसामर्थ्याय तल्लब्धुम्[6] । 'क्रियार्थोपपदस्य°' (पा २,३,१४) इति चतुर्थी । कम् इति पदपूरणः । प्रजापतिष्ट्वेत्यत्र 'युष्मत्तत्ततक्षुःषु°' (पा ८,३,१०३) इति सांहितिको मूर्धन्यादेशः । उत्तरार्धेन मणिधारक उच्यते । तत् । सुपो लुक् लिङ्गव्यत्ययो वा । तम् अस्तृताख्यं मणिम्[7] हे मणिधारक ते तव । अङ्ग इति शेषः । बध्नामि धारयामि पुरोहितोऽहं कर्ता । किमर्थम् । आयुषे आयुरादिलाभाय । सर्वत्र पूर्ववच्चतुर्थी । समुच्चयार्थौ चकारौ । आयुषे चिरकालजीवनाय । वर्चसे दीप्त्यै । ओजसे शरीरबलम् ओजः शरीरधारकोऽष्टमो धातुर्वा ओजः तस्मै । बलाय भृत्यादिसमृद्धिरूपाय बाह्यबलाय । अस्तृतः । स्तृ हिंसायाम् । कर्मणि क्तप्रत्ययः । पूर्वं प्रजापतिना धारितः इदानीं त्वया धार्यमाणः शत्रुभिरबाधितः परोपद्रवनिर्हारकः अस्तृताख्योऽयं मणिः त्वा त्वां धारकम् अभि रक्षतु अभितः सर्वतः पालयतु ।

ऊर्ध्वस्तिष्ठतु[8] रक्षन्नप्रमादमस्तृतेमं[9] मा त्वा दभन् पणयो यातुधानाः ।
इन्द्र इव दस्यूनव धूनुष्व पृतन्यतः[10] सर्वाञ्छत्रून् वि षहस्वास्तृतस्त्वाभि रक्षतु ॥२॥

---

१. आयुषो हि प्रतरण S'. २. तं S'; त्रिवृतं शंपा. ३. °ष्ट्वाबध्नात् RW.; °बध्नातु पै ४,२३,१. ४. तं RW. पै. ५. तात्वा S'. ६. तं लुब्धं S'. ७. मणिं ते S'. ८. °स्तिष्ठंतु A,B[h],C,D,K,K[m],R,S[m],V; °स्तिष्ठत्तु > °स्तिष्ठंत्तु Dc; °स्तिष्ठतु Cs; °स्तिष्ठन् RW. पै ४,२३,२. ९. रक्षाप्रमादमस्तृतेमं RW.; वैप १,५४१ f अपि द्र. १०. पृतन्यतः A B[h],C,D,R,Cs; पृतन्यतः S; पृतन्यतः > पृतन्युतः Dc.

ऊर्ध्वः । तिष्ठतु[1] । रक्षन् । अप्रऽमादम् । अस्तृत[2] । इमम् । मा । त्वा । दभन् । पणयः । यातुऽधानाः । इन्द्रःऽइव । दस्यून् । अव । धूनुष्व । पृतन्यतः[3] । सर्वान् । शत्रून् । वि । सहस्व । अस्तृतः । त्वा । अभि । रक्षतु ॥ २ ॥

हे अस्तृत एतत्संज्ञक मणे भवान् अप्रमादम् प्रमादः अनवधानता । [4]हर्षार्थान्माद्यतेर्घञ् । न विद्यते अनवधानं यस्मिन् रक्षणकर्मणि सावधानं यथा तथा इमं त्वद्धारकं रक्षन् पालयन् । अप्रमादम् इति इमम् इत्यस्य विशेषणं वा । अवहितम् । त्वद्धारणे इति शेषः । तं रक्षन् । हेत्वर्थे शतृप्रत्ययः । रक्षणाद्धेतोः ऊर्ध्वः उन्नतः उन्मुखः सर्वदा जागरूकः तिष्ठतु । भवद्योगे प्रथमपुरुषः । मणेरपि शत्रुकृतबाधापरिहारम् आशास्ते — हे अस्तृत मणे त्वा त्वां यातुधानाः यातवो यातनाः पीडा धीयन्ते विधीयन्ते क्रियन्ते एभिरिति यातुधानाः । करणे ल्युट् । तादृशाः पणयः पणिनामका असुरा मा दभन् मा हिंसन्तु । दभिर्हिंसाकर्मा । अस्माद् माङि लुङि छान्दसत्वात् च्लेरङ् । किं च त्वम् इन्द्र इव इन्द्रो यथा शत्रून् हिनस्ति एवं दस्यून् उपक्षपयितॄन् परान् अव धूनुष्व अवाङ्मुखान् कम्पय । पादप्रहारादिना अवस्तात् पातयेत्यर्थः । धूञ् कम्पने । स्वादिः । न केवलम् अवधूननं किं तु पृतन्यतः पृतनां संग्रामम् इच्छतः । पृतनाशब्दात् क्यचि 'कव्यध्वरपृतनस्यर्चि°' ( पा ७,४,३९ ) इति अन्त्यलोपः । क्यजन्तात् शत्रादिकार्यम् । युयुत्सून् सर्वान् शत्रून् शातयितॄन् रिपून् वि षहस्व विशेषेण अभिभव । अस्तृतस्त्वाभि रक्षतु इति चरमपादः पूर्ववत् । उक्तवीर्योपेतः पराभिभवनसामर्थ्योऽस्तृताख्यो[5] मणिः धारकं त्वाम् अभि रक्षतु इति ।

शतं च[6] न प्रहरन्तो निघ्नन्तो[7] न[8] तस्तिरे[9] ।
तस्मिन्निन्द्रः[10] [11]पर्यदत्त चक्षुः[11] प्राणमथो बलमस्तृतस्त्वाभि रक्षतु ॥३॥

शतम् । च । न । प्रऽहरन्तः । निऽघ्नन्तः । न । तस्तिरे । तस्मिन् । इन्द्रः । परि । अदत्त[12] । चक्षुः । प्राणम् । अथो इति । बलम् । अस्तृतः । त्वा । अभि । रक्षतु ॥ ३ ॥

शतम् शतसंख्याका अपरिमिताः[13] शत्रवः प्रहरन्तः । प्रहरणं नाम शस्त्रादिकृतबाधा । निहननं नाम [14]प्राणवियोजनम् इति विवेकः । प्रहरन्तः प्रकर्षेण

---

१. तिष्ठंत P,P,J. २. द्र. मंपा. P,P¹,J, सा.; वैद्र. शंपा. अस्तृतः. ३. पृतन्यतः P,J.
४. हर्षार्थाभावात् माद्य° S'. ५. °सामर्थ्ये° S'. ६. चन RW. पै ४,२३,५.
७. विघ्नन्तो D,K^m,S^m,V,Dc; भिद्दन्तो पै. ८. यं न RW. ९. तस्थिरे S^m,WM.; तस्त्रिरे RW. पै. १०. यस्मि° पै. ११. पर्यदन्त च° A,B^h,C,D,K^m,R,V,Dc,Cs, WM.; पर्यंदत्त च° S^m; पर्य ( ? °रिय ) दंतः च° ( ? °तश्च° ) S; पर्यधत्त च° पै [मूको.].
१२. अदंत P,P¹,J,WM. १३. अपरिणताः S', १४. प्राणवियोजनं नामाजननिति S'.

शस्त्रादिभिर्बाधमानाः निघ्नन्तः नितरां हिंसन्तो मारयन्तः । उभयत्र हेत्वर्थः शतृप्रत्ययः । [1]प्रहरणान्निहननाच्च हेतोः न तस्तिरे[1] न तस्तरिरे नाच्छादितवन्तः । यद्वा प्रहरन्तो निघ्नन्तोऽपि शत्रवः न[2] तस्तरिरे न जिहिंसुः । मणिरेव कर्म । अस्तृतमणेः अस्तृतनामनिर्वचनम् अनेन क्रियते । यतः शत्रवः उक्तलक्षणा इमं मणिं न तस्तरिरे बाधितुं नावृण्वन् न[2] जिहिंसुर्वा अतः अस्य अस्तृतनाम संपन्नम् । स्तृञ् आच्छादने स्तॄ हिंसायाम् इति वा । उभयविधाद् धातोश्छान्दसे लिटि 'लिटस्तझयोरेशिरेच्' (पा ३,४,८१) इति इरेजादेशः । वर्णलोपश्छान्दसः । इन्द्रः तस्मिन् एवं शत्रुभिरनावृते अहिंसिते अस्तृताख्ये मणौ अन्तः[3] मध्ये चक्षुः शत्रुदर्शनसामर्थ्यं प्राणम् बलहेतुम् अथो अपि च बलम् प्राणसामर्थ्यं वीर्यं परि यत्[3] पर्यगमयत् परिपूरितवान् । स्थापितवान् इत्यर्थः । अस्तृतस्त्वाभि रक्षतु इति पूर्ववत् ।

इन्द्रस्य त्वा वर्मणा परि धापयामो यो देवानामधिराजो बभूव ।
पुनस्त्वा देवाः प्र णयन्तु सर्वेऽस्तृतस्त्वाभि रक्षतु ॥ ४ ॥

इन्द्रस्य । त्वा । वर्मणा । परि । धापयामः । यः । देवानाम् । अधिऽराजः । बभूव । पुनः । त्वा । देवाः । प्र । नयन्तु । सर्वे । अस्तृतः । त्वा । अभि । रक्षतु ॥ ४ ॥

हे मणे त्वा त्वाम् इन्द्रस्य वर्मणा कवचेन परि धापयामः परित आवृण्मः । इन्द्रवर्माच्छादितं कुर्मः । इन्द्रस्य प्रभावातिशयं द्योतयितुं विशिनष्टि—यो देवानाम् द्योतमानानां द्युस्थानानां सर्वेषाम् अवराणाम् अधिराजः अधिपतिः बभूव । 'राजाहःसखिभ्यष्टच्' (पा ५,४,८१) इति राजशब्दात् तत्पुरुषे टच् समासान्तः । किं च हे मणे त्वा त्वाम् इन्द्रवर्माच्छादितम् देवाः इन्द्रस्वामिकाः सर्वे पुनः प्र णयन्तु स्वस्वकार्यसिद्ध्यर्थं स्वस्वकवचैः परिधापनार्थं प्रकर्षेण स्वसमीपं प्रापयन्तु । एवम् इन्द्रवर्मणा परिहितः सर्वैर्देवैश्च अनुगृहीतः अस्तृतः अस्तृताख्यो मणिः त्वा त्वां मणिधारकम् अभि रक्षतु ।

अस्मिन् मणावेकशतं वीर्याणि सहस्रं [4]प्राणा अस्मिन्नस्तृते[4] ।
व्याघ्रः[5] शत्रूनभि तिष्ठ सर्वान् यस्त्वा पृतन्यादधरः सो अस्त्वस्तृतस्त्वाभि रक्षतु ।५।

अस्मिन् । मणौ । एकऽशतम् । वीर्याणि । सहस्रम् । प्राणाः । अस्मिन्[6] । अस्तृते । व्याघ्रः । शत्रून् । अभि । तिष्ठ । सर्वान् । यः । त्वा । पृतन्यात् । अधरः । सः । अस्तु । अस्तृतः । त्वा । अभि । रक्षतु ॥ ५ ॥

---

१. प्रकरणानि अन्यच्च हेत्वो न निरस्तिरे S′. २. नि S′. ३. वेतु. मंपा.
४. प्राण अस्मिन्नस्तृते Sm; °अस्मिन्न° A,Bh,C,D,R,Cs; °अस्मि° > °अस्मि° Dcs °अस्मिन्न° WM.; °अस्मिन्न° WM. RW. ५. व्याघ्र पै ४,२३,४. ६. °अस्मिन् J.

अस्मिन् अस्तृताख्ये मणौ एकशतम् एकोत्तरं शतम् । शतक्रतोरिन्द्रस्य वर्मणावरणात् शतक्रतुसंबन्धीनि वीर्याणि शतसंख्याकानि । मणेः स्वीयं वीर्यम् एकम् । एवम् एकोत्तरं शतम् । एतत्संख्याकानि वीर्याणि वीरकर्माणि सामर्थ्यानि विद्यन्ते । तथा अस्मिन् अस्तृते अहिंसिते परैः एतत्संज्ञके मणौ सहस्रम् । अपरिमितवाची सहस्रशब्दः । सर्वैर्देवैरनुगृहीतत्वात् तत्संबन्धिनः अपरिमिता बलहेतवः प्राणाः संपद्यन्ते । एवंवीर्यप्राणोपेतो मणिस्त्वं व्याघ्रः । लुप्तोपमम् एतत् । व्याघ्र इव अथ वा व्याघ्रः व्याजिघ्रतीति[1] व्याघ्रः । 'आतश्चोपसर्गे' (पा ३,१,१३६) इति कर्तरि कप्रत्ययः । शत्रुगन्धं विशेषेण आजिघ्रन् सर्वान् शत्रून् अभि तिष्ठ अभिलक्ष्य तिष्ठ । आक्रमितुं समर्थो भव । अभिभवेति यावत् । यः शत्रुः त्वा त्वां मणिं प्रति पृतन्यात् योद्धुम् इच्छेत् सः शत्रुः अधरो निकृष्टः पराजितः अस्तु । यद्वा व्याघ्र इत्यादिना मणिधारकः पुमान् प्रोत्साह्यते[2] । अस्तृत इत्यादि पूर्ववत् ।

घृ॒ताद्युल्लु॑प्तो[3] मधु॑मा॒न् पय॑स्वान्त्स॒हस्र॑प्राणः[4] श॒तयो॑निर्वयो॒धाः ।
शं॒भूश्च॑ मयो॒भूश्चोर्ज॑स्वांश्च॒ पय॑स्वांश्चास्तृ॒तस्त्वा॒भि र॑क्षतु ॥ ६ ॥

घृ॒तात् । उत्ऽलु॑प्तः । मधु॑ऽमान् । पय॑स्वान् । स॒हस्र॑ऽप्राणः[5] । श॒तऽयो॑निः । व॒यः॒ऽधाः ।
श॒म्ऽभूः । च॒ । म॒यः॒ऽभूः । च॒ । ऊर्ज॑स्वान् । च॒ । पय॑स्वान् । च॒ । अ॒स्तृ॒तः । त्वा॒ । अ॒भि । र॒क्ष॒तु॒ ॥

घृतात् । घृतेनेत्यर्थः । आज्येन उल्लुप्तः[6] ऊर्ध्वम् उपरिभागे लिप्तः । इकारस्य उकारादेशश्छान्दसः । मधुमान् मधु माक्षिकं तद्वान् पयस्वान् पयः क्षीरं तद्वान् । 'तसौ मत्वर्थे' (पा १,४,१९) इति भसंज्ञकत्वात् पदसंज्ञानिबन्धनरुत्वाभावः । आज्यमधुक्षीरैर्लिप्तसर्वाङ्ग[7] इत्यर्थः । सहस्रप्राणः सर्वदेवानुगृहीतत्वात् तदीयापरिमितबलहेतुकबल इत्यर्थः । शतयोनिः ऐन्द्रवर्मपरिहितत्वेन तदीयशतसंख्याकवीर्योपेत इत्यर्थः । योनिशब्देन शत्रुसंगमननिमित्तं शत्रुवियोजनसाधनं वा बलं विवक्ष्यते । यु मिश्रणामिश्रणयोः । अस्माद् औणादिको निप्रत्ययः । यद्वा शतसंवत्सरजीवनवीर्येन्द्रियरूपफलहेतुत्वेन शतयोनिरिति उक्तम् । श्रूयते हि— 'शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रियः' (ऐब्रा ४,१९) इति । वयोधाः मणिधारकस्य पुरुषस्य अन्नं धारयिता शंभूः सुखस्य भावयिता मयोभूः मय इति सुखनाम तस्य भावयिता । शंमयःशब्दाभ्यां शारीरं पुत्रादिगतं च सुखं विवक्ष्यते । यद्वा शं शान्तिः सर्वोपद्रवनिवारणं तस्य भावयिता इत्यनेन अनिष्टनिवृत्तिः मयोभूरित्यनेन इष्टप्राप्तिर्विवक्ष्यते । ऊर्जस्वान् ऊर्जः अन्नं तद्वान् । ऊर्जयतेः असुन्प्रत्ययः । अन्नस्य

---

१. व्याघ्रप्रतीति S'.  २. प्रोत्सार्यते S'.  ३. घृताद्दुल्लुप्तो S^m,WM.; घृतादुल्लुप्तो D; घृतादुल्लब्धो पै ४,२३,४.  ४. °हस्रं प्राणः B^h,C,D,K,K^m,V,Dc,WM.; °हस्रप्राणः S^m,R,Cs,WM.  ५. सहस्रम् । प्राणः P,P^2,J,WM.  ६. दुल्लुप्तः S'.  ७. लिप्तं स° S'.

दाता। यद्वा ऊर्जस्विनः पुत्रादयः ते पोष्यत्वेन यस्य सन्तीति । पयस्वान् पयः क्षीरादिकं तद्वान् तत्प्रदाता। परस्परसमुच्चयार्थाः चकाराः। [1]एतादृशगुणविशिष्टः अस्तृतः[1] एतन्नामा मणिः त्वा त्वां धारकम् अभि रक्षतु अभितः सर्वतः पालयतु ।

यथा त्वमुत्तरोऽसो[2] असपत्नः सपत्नहा ।
सजातानामसद्[3] वशी तथा त्वा सविता करदस्तृतस्त्वाभि रक्षतु ॥ ७ ॥

यथा । त्वम् । उत्ऽतरः । असः । असपत्नः । सपत्नऽहा । सऽजातानाम् । असत् । वशी । तथा । त्वा । सविता । करत्[4] । अस्तृतः । त्वा । अभि । रक्षतु ॥ ७ ॥

अनेन मणिधारकस्य पुरुषस्य मणिप्रभावात् सर्वोत्तरत्वं शत्रुधर्षणसामर्थ्यं च सर्वस्य प्रेरकः सविता करोत्विति आशास्यते। हे साधक त्वम् उत्तरः उत्कृष्टः सर्वोत्तरो यथाऽसः भवेः। अस्तेः पञ्चमलकारे अडागमः। असपत्नः अशत्रुः। शत्रूणाम् अत्यन्ताभावो विवक्षितः। सपत्नहा तथापि ये केचन सपत्ना उद्गच्छेयुस्तेषामपि हन्ता यथा भवेः। किं च सजातानाम् समानजातानां पुरुषाणां मध्ये वशी वशैः सजातैस्तद्वान् असत् भवेत्। भवच्छब्दयोगे प्रथमपुरुषः पुरुषव्यत्ययो वा । समानविद्यावयोवित्तकर्माणः पुरुषा यथा त्वां[5] सेवेरन् तथा भवेरित्यर्थः। सविता सर्वस्य प्रेरको देवः तथा तेनोक्तप्रकारेण त्वा त्वां मणिबन्धकं करत् कुर्यात् । करोतेः पूर्ववद् अडागमः । यद्वा करोतेश्छान्दसे लुङि 'कृमृदृरुहिभ्यः°' (पा ३,१,५९) इति च्लेः अङ्। 'ऋदृशोऽङि गुणः' (पा ७,४,१६) इति गुणः। '"अमाङ्योगेऽपि' (पा ६,४,७५) इति अडभावः। अस्तृतः एतन्नामा मणिः त्वा त्वाम् अभि रक्षतु इति पूर्ववत्।

इति एकोनविंशे काण्डे षष्ठेऽनुवाके प्रथमं सूक्तम्।

'आ रात्रि पार्थिवम्' इति सूक्तद्वयम् अर्थसूक्तम्। 'इषिरा योषा' इति सूक्तद्वयमपि अर्थसूक्तम्। अस्य सूक्तद्वययुगलस्य रात्रीकल्पे रात्र्युपस्थाने जपे च विनियोगः। 'अथ पिष्टमयीं रात्रिं चतुर्भिर्दीपकैः सह' (अप ४,३,१) इति प्रक्रम्य उक्तं परिशिष्टे—"'आ रात्रि पार्थिवम्', 'इषिरा योषा' इति सूक्ताभ्याम् अन्वारभ्य जपेत्" (अप ४,४,१;२) इति, "पैष्टीं[6] रात्रिं कृत्वा ××× चतुर्भिर्दीपकैरर्चयित्वा 'आ रात्रि पार्थिवम्', 'इषिरा योषा' इति सूक्तद्वयेन रात्रिम् उपस्थाय" (अप ४,५,४;७) इति च। अर्थसूक्तद्वयेनेत्यर्थः।

आ रात्रि पार्थिवं रजः पितुरप्रायि[7] धामभिः ।
दिवः सदांसि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः ॥ १ ॥

---

१. °गुणहिंसिसितः S'. २. त्वमुत्तरोसौ RW.; वैप १, ८८७ u अपि द्र. ३. °मसो RW. पै ४,२३,७; वैप १,५१३ g अपि द्र. ४. अकरत् P²; करत् > अकरत् J; अकरत् P. ५. त्वा त्वां S'. ६. पिष्टमयीं Bol. ७. पितरः प्रायु खिसा २६,१.

आ । रात्रि । पार्थिवम् । रजः । पितुः । अप्रायि । धामऽभिः ।
दिवः । सदांसि । बृहती । वि । तिष्ठसे । आ । त्वेषम् । वर्तते । तमः ॥ १ ॥

हे रात्रि। 'रात्रेश्चाजसौ' (पा ४,१,३१) इति ङीप्। संबुद्धौ ह्रस्वः। त्वया पार्थिवम् पृथिवीरूपम्। प्रज्ञादेराकृतिगणत्वात् पृथिवीशब्दात् स्वार्थे अण्प्रत्ययः। व्यत्ययेन आद्युदात्तः। रजः लोकः। 'लोका रजांस्युच्यन्ते' (नि ४,१९) इति यास्कः। यद्वा पार्थिवम् पृथिव्यां भवम्[1]। उत्सादित्वाद् अञ्प्रत्ययः। 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तः। रजः स्थानं पृथिवीसंबन्धिस्थलगिरिनदीसमुद्रादिकम्। पितुः। पितृशब्देन द्युलोकोऽभिधीयते। 'द्यौः पिता पृथिवी माता' (तैब्रा ३,७,५,४) इति हि मन्त्रवर्णः। अत्र तृतीयस्य स्वर्गलोकस्य पृथगभिधानाद् मध्यमभूतान्तरिक्षलोको विवक्षितः। तस्य धामभिः स्थानैः सह। 'वृद्धो यूना' (पा १,२,६५) इति निपातनात् सहशब्दाभावेऽपि तृतीया। अन्तरिक्षलोकेन सह अप्रायि आपूरि तल्लोकद्वयं तमसा आपूरि। प्रा पूरणे। कर्मणि लुङि चिण्। आतो युगागमः। तथा बृहती महती सर्वत्र व्यापिनी सती दिवः द्युलोकस्य तृतीयस्य सदांसि। सीदन्त्यत्रेति अधिकरणे सदेरसुन्। स्थानानि वि तिष्ठसे विशेषेण व्याप्नोषि। 'समवप्रविभ्यः स्थः' (पा १,३,२२) इति तिष्ठतेरात्मनेपदम्। एवं लोकत्रयव्यापित्वेन त्वदीयेन त्वेषं दीप्यमानं नीलवर्णं तमः अन्धकारः आ वर्तते सर्वम् आवृत्य तिष्ठति। अथवा पृथिवीलोकाद् उत्थाय द्युलोकम् आवृणोति तस्माच्च पृथिवीम् इति तमःकैवल्यमेव वर्तते।

**न यस्याः पारं ददृशे न योयुवद् विश्वमस्यां नि विशते यदेजति।**
**अरिष्टासस्त उर्वि तमस्वति रात्रि पारमशीमहि भद्रे पारमशीमहि ॥ २ ॥**

न । यस्याः । पारम् । ददृशे । न । योयुवत् । विश्वम् । अस्याम् । नि । विशते[3] । यत् । एजति । अरिष्टासः । ते । उर्वि । तमस्वति । रात्रि । पारम् । अशीमहि । भद्रे । पारम् । अशीमहि ॥ २ ॥

यस्या रात्रेः पारम् परतीरम् अन्तो न ददृशे न दृश्यते। अस्याम् अनवच्छिन्नायां लोकत्रयव्यापिन्यां रात्र्यां विश्वम् चराचरात्मकं जगद् न योयुवत् विभजमानं विभक्तं नासीत् किंतु विश्वम् एकाकारमेवाभूत्। यौतेर्यङ्लुगन्तात् शतरि ङित्त्वाद् गुणाभावे उवङ् आदेशः। 'अभ्यस्तानामादिः' (पा ६,१,१८९) इति आद्युदात्तत्वम्। [4]यत् जगत्[4] एजति कम्पते। एजृ कम्पने। लटि व्यत्ययेन परस्मैपदम्। प्राणिजातं तद् अस्यां नि विशते इतस्ततो गन्तुम् असमर्थं सत् तत्रतत्रैव निविष्टं निद्राणं भवति। यद्वा एजतेः[5] शतृप्रत्ययः। एजमाने कम्पमाने इतस्ततः संचलति यत्। सप्तम्या लुक्। यस्मिन् तमसि

---

१. भवा S'.　२. ददृशे RW.　३. विशते J.　४. यद्वा यज्ञ° S'.
५. यजतेः S'.

नि विशते विभक्तत्वेन अपरिदृश्यमानं विश्वं तत्रतत्रैव संविशति। विश प्रवेशने। 'नेर्विशः' (पा १,३,१७) इति आत्मनेपदम्। हे उर्वि प्रभूते 'वोतो गुणवचनात्' (पा ४,१,४४) इति उरुशब्दाद् ङीष्। प्रभूते सर्वलोकव्यापिनि हे तमस्वति बहुलान्धकारवति। भूमार्थे मतुप्प्रत्ययः। 'तसौ मत्वर्थे' (पा १,४,१९) इति भसंज्ञत्वात् पदसंज्ञानिबन्धनरुत्वाभावः। हे रात्रि ते तव पारम् परतीरम् अन्तम् अरिष्टासः अरिष्टाः। रिशतेर्हिंसार्थात् कर्मणि क्तप्रत्ययः। सर्पव्याघ्रचोरप्रभृतिभिरबाधिताः सन्तः वयम् अशीमहि प्राप्नुयाम। हे भद्रे भन्दनीये कल्याणरूपे श्रेयस्करि वा रात्रि पारम् अशीमहि पारम् अवधिम् अशीमहि। आदरार्था पुनरुक्तिः। अश्नोतेर्लिङि विकरणस्य लुक्।

ये[1] ते रात्रि[2] नृचक्षसो द्रष्टारो[3] नवतिर्नव।
अशीतिः[4] सन्त्यष्टा[5] उतो[6] ते सप्त सप्ततिः[6] ॥ ३ ॥

ये। ते। रात्रि। नृऽचक्षसः। द्रष्टारः। नवतिः[7]। नव।
अशीतिः[8]। सन्ति[9]। अष्टौ। उतो इति। ते। सप्त[10]। सप्ततिः ॥ ३ ॥

अत्र सार्धमन्त्रद्वयेन सर्वलोकव्यापिन्या रात्रेः प्रभावस्य द्रष्टारो गणदेवा उच्यन्ते। हे रात्रि ते तव संबन्धिनां महिम्नाम् इति शेषः। नृचक्षसः नृणां कर्मफलस्य द्रष्टारो *[नवतिर्नव] नवोत्तरनवतिसंख्याका ये गणदेवा द्रष्टारो रात्रिप्रभावस्य आलोकयितारो ये सन्ति। ये च *[अशीतिः अष्टौ] अष्टोत्तराशीतिसंख्याका गणदेवा राय्या द्रष्टारः सन्ति। उतो अपि च सप्त सप्ततिः सप्तोत्तरसप्ततिसंख्याका ये गणदेवाः ते तव द्रष्टारः सन्ति। 'तेभिर्नः पाहि' (५) इत्युत्तरेण संबन्धः। अत्र नवत्यशीतिसप्तत्यादयः शब्दा नव दशतः परिमाणम् अस्येत्यर्थे नवशब्दात् तिप्रत्ययः, अष्टशब्दात् तिप्रत्ययः अशीभावश्च, सप्तानां दशतां सप्तभावः तिश्च प्रत्ययः इति व्युत्पादनीयाः। ते च 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्' (पा ५,१,५९) इति सूत्रेण परिमाणार्थे[11] निपातिताः।

षष्टिश्च षट् च रेवति पञ्चाशत् पञ्च सुम्नयि[12]।
चत्वारश्चत्वारिंशच्च त्रयस्त्रिंशच्च वाजिनि ॥ ४ ॥

---

१. यत् A. २. रात्रे पै ६,२०,३. ३. युक्तासो खि ४,२,२ शांश्रौ ९,२८,१०. ४. अशीतिः A,Bh,C,D,R,Cs,Sm,Dc. ५. सन्त्यष्टा Sm; सन्त्युष्टा K,Km,V,RW.; सन्त्वष्टा खि. पै. शांश्रौ. ६. ते सप्त सप्ततिः A,Bh,C,D,R,Cs,RW.; ते सप्त सप्तति Sm. ७. नवती: P,P², J. ८. अशीतिः P,J. ९. संति P,P¹,J. १०. सप्त P,J. ११. °माणार्थ S'. १२. नशंनिहि? पै ६,२०,४.

षष्टिः । च । षट् । च । रेवति । पञ्चाशत् । पञ्च । सुम्नयि ।
चत्वारः । चत्वारिंशत् । च । त्रयः । त्रिंशत् । च । वाजिनि ॥ ४ ॥

हे रेवति रयिमति । रयिशब्दाद् मतुपि 'छन्दसीरः' ( पा ८,२,१५ ) इति मतुपो वत्वम् । "[1]रयेर्मतौ बहुलम्" ( पा ६,१,३७ ) इति संप्रसारणम् । पूर्वरूपत्वे गुणः । हे धनवति धनप्रदे हे रात्रि षष्टिश्च षट् च षडुत्तरषष्टिसंख्याका ये गणदेवाः सन्ति । परस्परसमुच्चयार्थौ चकारौ । हे सुम्नयि सुम्नं सुखं तद्वति तत्प्रापिके पञ्चाशत् पञ्च पञ्चोत्तरपञ्चाशत्संख्याका ये गणदेवा द्रष्टारः सन्ति । तथा चत्वारश्चत्वारिंशत् चतुरुत्तराश्चत्वारिंशत्संख्याकाश्च ये सन्ति । हे वाजिनि वाजः अन्नं तद्वति वेगो वा वाजः तद्युक्ते त्रयस्त्रिंशत् त्र्युत्तरात्रिंशत्संख्याका ये तव द्रष्टारो गणदेवाः सन्ति । 'तेभिर्नः पाहि' (५) इत्युत्तरेण संबन्धः । षण्णां दशतां षड्भावः तिश्च प्रत्ययः । अपदत्वं च । षड् दशतः परिमाणम् अस्य षष्टिः । पञ्चानां दशतां पञ्चभावः[2] आशच्च प्रत्ययः[2] । चत्वारः । 'चतुरनडुहोरामुदात्तः' ( पा ७,१,९८ ) इति आमागमः । चतुर्णां दशतां चत्वारिन्भावः शच्च प्रत्ययः । त्रयाणां दशतां त्रिन्भावः शच्च प्रत्ययः । त्रयो दशतः परिमाणम् अस्य त्रिंशत् । एवं परिमाणार्थे 'पङ्क्तिविंशति°' ( पा ५,१,५९ ) इति सूत्रेण षष्ट्यादिशब्दा निपातिताः ।

द्वौ[3] च ते विंशतिश्च ते रात्र्येकादशावमाः ।
तेभिर्नो अद्य पायुभिर्नु[4] पाहि दुहितर्दिवः[5] ॥ ५ ॥

द्वौ । च । ते । विंशतिः । च । ते । रात्रि । एकादश । अवमाः ।
तेभिः । नः । अद्य । पायुऽभिः । नु[6] । पाहि । [7]दुहितः । दिवः[7] ॥ ५ ॥

हे रात्रि विभावरि ते तव द्वौ विंशतिः द्व्यधिकविंशतिसंख्याका ये गणदेवा द्रष्टारः सन्ति । परस्परसमुच्चयार्थौ चकारौ । द्वयोर्दशतोर्विंन्भावः शतिश्च प्रत्ययः । द्वौ दशतौ परिमाणम् अस्य विंशतिः । अत्र नवत्यादयो विंशतिपर्यन्ताः शब्दाः संख्येयवचनाः । तथा अवमाः संख्यातो निकृष्टा न्यूना एकादश एकश्च दश च एकोत्तरदशसंख्याका ये गणदेवास्त्वदीयव्याप्तिद्रष्टारः सन्ति । एकश्च दश चेति द्वन्द्वे 'संख्या' ( पा ६,२,३५ ) इति पूर्वपदप्रकृतिस्वरत्वम् । हे दिवो दुहितः द्युलोकस्य पुत्रि । आलोकाभावे रात्रिः आकाशाद् आपतन्तीव दृश्यते अतो रात्रिर्द्युलोकस्य पुत्रीत्यभिधीयते । 'परमपि च्छन्दसि' ( पावा २,१,२ ) इति षष्ठ्यन्तस्य

---

१. °र्मतोर्बं° S'. २. पञ्चाभावः शच्च प्र° इति पाका. प्रभृ. ( ५,१,५९ ). ३. द्वा पै ३,२०,५. ४. °भिर्न A.B[h],C,D,K,K[m],R,S[m],V,WM.; °भिर्नि RW. ५. दुहितर्दिवः K,K[m],V,Dc,Cs,WM.; दुहितर्दिवः D; दुहितर्दिवः S[m]. ६. न P,P[2],J. ७. दुहितः । दिवः P[a]; दुहितः । दिवः P,J.

आमन्त्रिताङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य सर्वानुदात्तत्वम्। एवंविधे हे रात्रि त्वम् अद्य इदानीं नु क्षिप्रं तेभिः पूर्वमन्त्रोक्तैर्नवनवत्यादिभिः एकादशान्तैस्त्वदीयव्याप्तिदर्शकैः पायुभिः रक्षकैः। 'कृवापाजिमि°' (पाउ १,१) इति पातेः उण्प्रत्ययः। गणदेवैः नः अस्मान् पाहि रक्ष।

रक्षा[1] माकिर्नो[2] अघशंस ईशत मा नो दुःशंस ईशत।
मा नो अद्य गवां स्तेनो मावीनां वृक ईशत ॥ ६ ॥
माश्वानां भद्रे तस्करो मा नृणां यातुधान्यः।[3]
परमेभिः पथिभिः स्तेनो [4]धावतु तस्करः[4]।[3]
परेण दत्वती रज्जुः परेणाघायुरर्षतु ॥ ७ ॥[3]

रक्ष। माकिः। नः। अघऽशंसः। ईशत। मा। नः। दुःऽशंसः। ईशत। मा। नः। अद्य। गवाम्। स्तेनः। मा। अवीनाम्। वृकः। ईशत ॥ ६ ॥
मा। अश्वानाम्। भद्रे[5]। तस्करः[6]। मा। नृणाम्। यातुऽधान्यः। परमेभिः। पथिऽभिः। स्तेनः। धावतु। तस्करः। परेण। दत्वती। रज्जुः। परेण। अघऽयुः। अर्षतु ॥ ७ ॥

हे रात्रि रक्ष पालय नः अस्मान्। रक्षणं नाम परकृतबाधापरिहारः। तद् आह — अघशंसः अघं पापं हिंसालक्षणं तत् शंसति कथयतीति[7] अघशंसः त्वाम् अहं हन्मि इत्येवंवादी। अघेन पापेन क्रूरेण शस्त्रादिना शंसति हिनस्तीति[7] वा अघशंसः। शस हिंसायाम् इति धातुः। एतादृशो माकिः न कश्चनापि नः अस्माकम् ईशत मा ईष्टाम्। माकिरिति निपातसमुदायः। तत्र मा इति निपातः क्रियापदेन संबध्यते। किशब्दः कश्चनेत्यर्थं कथयन् अघशंसेन संबध्यते। हिंसकः कश्चनापि अस्मान् बाधितुम् ईश्वरः समर्थो मा भवत्वित्यर्थः। ईश ऐश्वर्ये। अस्मात् 'स्मोत्तरे लङ् च' (पा ३,३,१७६) इति स्मोत्तरत्वाभावेऽपि माङि उपपदे लङ्। 'बहुलं छन्दसि' (पा २,४,७३) इति शपो लुगभावः। तथा दुःशंसः दुष्टं दुर्वचनस्य कथयिता दुष्टं वा हिंसिता शत्रुः नः अस्माकं मा ईशतेति पूर्ववद् योज्यम्। हे रात्रे स्तेनः चोरः अद्य इदानीं नः अस्मदीयानां गवाम्। मा ईशतेति क्रियानुषङ्गः। गवापहर्ता मा भवतु। वृकः वर्कते आदत्त इति वृकः आरण्यश्वा।

---

१. रक्षा RW. २. °किर्णो पै ६,२०,६. ३. माऽश्वा°...°धान्यः॥७॥ पर°...°र्षतु ॥ ८ ॥ अघं...जहि ॥९॥ त्वयि...°षेभ्यः ॥ १० ॥ इति सा. मन्त्रविभागः; माऽश्वा°...तस्करः॥ ७ ॥ परेण...कृणु ॥ ८ ॥ हनू...जागृहि ॥ ९ ॥ गोभ्यो...षेभ्यः ॥ १० ॥ इति RW. मन्त्रविभागः. ४. धावतु तस्करः A,B[b],C,D; धावतु तस्करः S[m]. ५. भद्रे P; भद्रे > भद्रे J. ६. तस्करः > तस्करः J. ७. एवं स्वरः ?

इगुपधलक्षणः कप्रत्ययः[1]। अवीनाम् अविजातीयानां पशूनां मा ईशत बलाद् अपहर्तुं शक्तो मा भवतु [६]। हे भद्रे भन्दनीये रात्रि तस्करः तत् प्रसिद्धम् अनर्थजातं करोतीति[1] तस्करश्चोरः। 'तद्बृहतोः करपत्योः°' (पा ६,१,१५७) इति चोरेभिधेये सुडागमः तच्छब्दस्य तलोपश्च। अश्वानाम् अस्मदीयानां तुरंगमाणाम्। मा ईशतेत्यनुषङ्गः। तथा नृणाम् नेतॄणां कर्मसु व्याप्रियमाणानां पुत्रभृत्यादीनाम्। 'नृ च' (पा ६,४,६) इति दीर्घस्य विकल्पितत्वाद् अत्र दीर्घाभावः। यातुधानाः[2] यातवो यातनाः पीडा धीयन्ते विधीयन्ते जनानाम् एभिः इति करणे ल्युट्। यातूनां धातारो वा। 'कृत्यल्युटो बहुलम्' (पा ३,३,११३) इति कर्तरि ल्युट्। ईदृशाः पिशाचादयो मा ईशत नृणां बाधका मा भवन्तु। स्तेनतस्करयोरेको यौगिकः। तस्करः तद् धनापहरणादिकं करोतीति तस्करः तादृशः स्तेनः चोरः परेभिः अतिदूरैः पथिभिः मार्गैः साधनैः धावतु शीघ्रं गच्छतु पलायताम्। त्वदीयोपस्थानबलाद्[3] अस्मदभिमुखश्चोरो व्याकुलः सन् अतिदूरं देशं गच्छतु। सर्तेर्वेगितायां गतौ धावादेशः। तथा दत्वती दन्तवती। 'छन्दसि च' (पा ५,४,१४२) इति दन्तशब्दस्य दद्भावः। 'झयः' (पा ८,२,१) इति मतुपो वत्वम्। रज्जुः रज्जुवद् आयतः सर्पादिः परेण अतिदूरेण मार्गेण धावतु। तथा अघायुः अघं पापं हिंसालक्षणं परस्य इच्छतीति अघायुः। 'छन्दसि परेच्छायामपि' (पा ३,१,८) इति क्यच्। 'अश्वाघस्यात्' (पा ७,४,३७) इति आत्त्वम्। 'क्याच्छन्दसि' (पा ३,२,१७०) इति उप्रत्ययः। एवंविधो बाधकः परेण दूरेण अर्षतु गच्छतु। ऋषी गतौ। भौवादिकः [७]।

अध रात्रि[4] तृष्टधूममशीर्षाणमहिं[5] कृणु[6]। हनू वृकस्य जम्भयास्तेन[7] तं द्रुपदे जहि ॥८॥[8]

अध[8]। रात्रि। तृष्टऽधूमम्। अशीर्षाणम्। अहिम्। कृणु। हनू इति। वृकस्य। जम्भयाः[9]। तेन। तम्। द्रुऽपदे। जहि ॥ ८ ॥

अध अथ। अपि चेत्यर्थः। हे रात्रि तृष्टधूमम्। ञितृष पिपासायाम्। अस्माद् 'गत्यर्थाकर्मक°' (पा ३,४,७२) इति कर्तरि क्तः। अत्र पिपासार्थेन तृषिणा तज्जन्या आर्तिर्विवक्ष्यते। आर्तिकारी धूमः विषज्वालाधूमः निश्वासधूमो[10] वा यस्य तं परोपद्रवकारिविषज्वालापरिवृतम् अहिम् सर्पम् अशीर्षाणम् अशिरस्कं कृणु कुरु। विषपरीतम् अहेः शिरश्छिन्धीत्यर्थः। 'शीर्षश्छन्दसि (पा ६,१,६०) इति शिरसः शीर्षभावः। किं च वृकस्य अजादिप्रभृतीनाम् अपहर्तुः आरण्यशुनो हनू मुखस्य अन्तःस्थूलदन्तयुक्तौ पार्श्वौ पश्वादानसाधनभूतौ जम्भयाः जम्भयेः।

---

१. एवं स्वरः? २. वैतु. मंग. ३. मदीयोप° S'. ४. अर्ध A,B[b],C,D,K,K[m],S[m], V,Dc; अन्ध रा° RW.; अन्धो? रा° पै ६,२०,८. ५. तिग्टधू° पै. ६. पूर्वपृष्ठे टि ३ द्र.
७. जुंभाया° A,C,D,S[m],Dc,WM,S; जुभाया° Cs; जम्भया स्तेनं RW.; वैप १,१३६२ r; १४०७ i अपि द्र. ८. अंध P,P[a],J,WM. ९. जुंभायाः P[a],J.
१०. विश्वास° S',

जम्भिर्हिंसाकर्मा । जभी जृभि गात्रविनामे । अस्माल्लेटि आडागमः । तेन यतो हनू निर्मर्दितौ तेन कारणेन तं निष्पिष्टहनुकं वृकं द्रुपदे द्रुर्द्रुमः तस्य पदे स्थाने जहि घातय । द्रुपदे इति रात्रेर्विशेषणं[1] वा । द्रुः सर्वतोभिद्रवणम् । अभिद्रवण-साधनपादयुक्ते सर्वतो व्यापिनि रात्रि तं जहीति । हन्तेर्लोटि 'हन्तेर्जः' ( पा ६,४, ३६ ) इति जादेशे 'असिद्धवदत्रा भात्' ( पा ६,४,२२ ) इति जादेशस्य असिद्धत्वात् हेर्लुक् न भवति ।

त्वयि॑ रात्रि [2]वसाम॒सि स्वपि॒ष्याम॑सि जागृ॒हि[2] ।[3]
गोभ्यो॑ नः॒ शर्म॑ य॒च्छाश्वे॑भ्यः[4] पुरु॑षेभ्यः ॥ ९ ॥[3]

त्वयि॑ । रा॒त्रि॒ । व॒सा॒म॒सि॒ । स्व॒पि॒ष्याम॑सि[5] । जा॒गृ॒हि[6] ।
गोभ्यः॑ । नः॒ । शर्म॑ । य॒च्छ॒ । अश्वे॑भ्यः । पुरु॑षेभ्यः ॥ ९ ॥

हे रात्रि त्वयि । देवताभिप्रायेण अधिकरणत्वं त्वत्कृतरक्षणनिमित्ते वा । वसामसि वसामः । एकत्र निवसामः । न केवलं निवासमात्रं किंतु स्वपिष्यामसि स्वप्स्यामः । निद्रां करिष्यामः । उभयत्र 'इदन्तो मसि' ( पा ७,१,४६ ) । स्वदेः व्यत्ययेन इडागमः । पुत्रमित्राद्यपेक्षया बहुवचनम् । यद्वा त्वयि अस्मदीयं सर्वं भारं निधायेति शेषः । वसामः स्वप्स्यामश्च । त्वं तु जागृहि । अस्मान् रक्षितुम् अवहिता भव । जागृ निद्राक्षये । आदादिकः । न केवलम् अस्मद्रक्षणे जागरिता किंतु नः अस्माकं गोभ्यः गोष्ठे निवसद्भ्यः अश्वेभ्यः पुरुषेभ्यश्च गृहे निवसद्भ्यः शर्म सुखं यच्छ । यथा निद्राणास्ते तव पारं क्षेमेण प्राप्नुयुस्तथा कुर्वित्यर्थः ।

इति षष्ठेऽनुवाके द्वितीयं सूक्तम् ।

'अथो यानि च' इति सूक्तस्य रात्रिकल्पे रात्र्युपस्थाने जपे च विनियोगः पूर्वसूक्तेन सहोक्तः ।

अथो॑[7] [8]यानि॑ च॒[8] यस्मा॑ ह॒ [9]यानि॑ चा॒न्तः[9] परी॒णहि॑[10] । तानि॑ ते॒ परि॑ दद्मसि[11] ॥१॥

---

१. एवं स्वरः ? २. वसाम॒सि स्वपि° A,Bh,C,D,Sm,Cs, WM.; °सि जागृहि A,Bh,C,D,Sm,Cs,WM.; °सि॒ जागृ॑हि K,Km,V,Dc,WM.; विशामसि° पै ६, २०,९. ३. पृ. १९५० टि ३ द्र. ४. यच्छादश्वे° पै. ५. स्वपि॒स्याम् । अ॒सि J,WM.; स्वपि॒स्याम् । असि॑ P,P2,WM. ६. जा॒गृ॒हि P,J,WM ; जागृ॑हि P2,WM. ७. अ॒थो RW. ८. यानि॑च॒यस्मा॑ह॒ A,Bh,D,Sm,WM.; यानि॑च॒यस्मा॑श्चाह॒ C,K,Km,Cs,WM.; यानि॑च॒यस्मा॑श्चह॒ V; यानि॑च॒यस्मा॑ह॒ > यानि॑च॒यस्मा॑श्चाह॒ Dc; यानि॒ चया॑मह॒े RW.; यानि च यस्मा ह S; यानि तमस्सहे ? पै ६,२१,१. ९. यानि॑वान्तः WM.; यानि॑ वा॒न्तः A,Bh,D,Sm,C,K,Km,Cs,V,Dc,RW. १०. परि॑णहि A; परी॑णहि Bh,D, Sm,C,K,Km,Cs,V,Dc. ११. दध्मसि A,Bh,D,Sm,Cs; दध्मसि > दद्मसि Dc.

रात्रि मातरुषसे नः परि देहि ।
उषा नो अह्ने परि ददात्वहस्तुभ्यं विभावरि ॥ २ ॥

अथो इति । यानि । च । यस्मै । ह[1] । [2]यानि । च[2] । अन्तः । परिऽणहि[3] । तानि । ते । परि । दद्मसि ॥ १ ॥

रात्रि । मातः । उषसे । नः । परि । देहि । उषाः । नः । अह्ने । परि । ददातु । अहः । तुभ्यम् । विभावरि[4] ॥ २ ॥

पूर्वमन्त्रे गवादयो विशेषेण उक्ताः । अत्र तु उक्तान्यनुक्तानि वा बहिःस्थानि गृहवर्तीनि च संग्रहेणाह—अथो अपि च यस्मै ह । हशब्दः पूरणः । यस्य मम संबन्धीनि बहिःस्थानि गोचरप्रदेशे अनावृतदेशे वर्तमानानि[5] यानि वस्तूनि वर्तन्ते । यानि च परीणहि परितो नद्धे परिश्रिते गृहादौ अन्तः मध्ये यानि वर्तन्ते । परस्परसमुच्चयार्थौ चकारौ । परिपूर्वाद् नहेः क्विपि 'नहिवृतिवृषि°[6]' (पा ६,३,११६) इत्यादिना उपसर्गस्य दीर्घः । परीणच्छब्दो गृहवाची तैत्तिरीयके समाम्नायते— 'तमसीव[7] वा एषोन्तश्चरति यः परीणहि' (तैब्रा ३,२,४,७) इति । तानि प्रकाशानि अप्रकाशानि द्विविधानि वस्तूनि ते तुभ्यं परिदद्मसि । रक्षणार्थं दानं परिदानम् । रक्षितुं प्रयच्छामः । 'इदन्तो मसि' (पा ७,१,४६) [१]।
हे मातः मातृवत्परिपालयित्रि हे रात्रि नः अस्मान् उषसे त्वत्समनन्तरभाविने प्रभातकालाय परि देहि रक्षणार्थं प्रयच्छ । तव पारम् उषःकालपर्यन्तं सुखेन अस्मान् प्रापयेत्यर्थः । उषाः उषःकालः सूर्योदयसमीपवर्ती समयः अह्ने सूर्यप्रकाशवते उषःकालानन्तरभाविने प्रातःसंगवमध्याह्नापराह्णसायाह्नरूपाय दिवसाय नः अस्मान् परि ददातु । उषःकालो दिवससमाप्तिपर्यन्तम् अस्मान् रक्षत्वित्यर्थः । हे विभावरि रात्रि । भा दीप्तौ । विपूर्वाद् 'आतो मनिन्°' (पा ३,२,७४) इति क्वनिप् । 'वनो र च' (पा ४,१,७) इति ङीप्, नकारस्य च रेफः । अहः उक्तलक्षणोपेतः अहःकालश्च तुभ्यं नः परि ददातु । एवं पुनःपुनरावर्तमानौ अहोरात्रौ अस्मान् रक्षताम् इत्यर्थः [२]।

यत्[8] किं चेदं पतयति[9] यत् किं चेदं सरीसृपम्[10] ।

---

१. आहु P,P², J, WM. २. यान्ऽइव P,P², WM.; यानि । वा > यान्ऽइव J.
३. परिणहि P,P²; परिणहि > परि । णहि J; परिणहि WM. ४. विभाऽवरि ऋ. पपा.
५. वस्तमानानि S'. ६. °वृषि S'. ७. तमसी S'. ८. यदि पै ४,२१,३.
९. पतयति A; पतयति D,S^m,Cs; पतेद्ध पै. १०. सरीसृपं S^m.

यत् किं च पर्वतायासत्वं[1] तस्मात् त्वं रात्रि पाहि नः ॥ ३ ॥

यत् । किम् । च । इदम् । पतयति । यत् । किम् । च । इदम् । सरीसृपम् ।
यत् । किम् । च । पर्वताय । असत्वम्[1] । तस्मात् । त्वम् । रात्रि । पाहि । नः ॥ ३ ॥

यत्किंच **यत्किंचिद्** इदं **परिदृश्यमानं श्येनपक्ष्यादिकं** पतयति **आकाशे संचरति । पत गतौ । चुरादिः । अदन्तः ।** यत्किंचेदं सरीसृपम् **भूमौ सरणशीलं सर्पादिकं यद् अस्ति । सृप्लृ गतौ । अस्माद् यङि** 'रीगृदुपधस्य च' ( पा ७,४,९० ) **इति अभ्यासस्य रीगागमः । पचाद्यचि** 'यङोचि च' ( पा २,४,७४ ) **इति यङो लुकि** 'न धातुलोप आर्धधातुके' (पा १,१,४) **इति गुणप्रतिषेधः ।** यत्किंच पर्वताय **पर्वतस्य संबन्धि** असत्वम् । **सत्वशब्दः प्राणिवाची । दुष्टं सत्वम् असत्वम् व्याघ्रसिंहादिकम् अस्ति** तस्माद् **उक्तात् सर्वस्मात् पक्षिसर्पदुष्टमृगादिरूपाद् बाधकात् हे** रात्रि त्वं नः **अस्मान्** पाहि **रक्ष ।** 'भीत्रार्थानाम्°' (पा १,४,२५) **इति अपादानत्वात् तस्माद् इति पञ्चमी ।**

सा पश्चात् पाहि सा पुरः सोत्तरादधरादुत[3] ।
गोपाय[4] नो विभावरि स्तोतारस्त इह स्मसि ॥ ४ ॥

सा । पश्चात् । पाहि । सा । पुरः । सा । उत्तरात्[5] । अधरात् । उत ।
गोपाय[4] । नः । विभावरि । स्तोतारः । ते । इह । स्मसि ॥ ४ ॥

**हे रात्रि** सा **पूर्वोक्तलक्षणा त्वं** पश्चात् **पश्चिमभागे यत्र वयं वसामः स्वप्स्यामश्च तस्य पश्चिमभागे** पाहि **रक्ष अस्मान्[6] । तथा** सा त्वं पुरः **पूर्वस्यां दिशि पाहि ।** 'पूर्वाधरावराणाम् असि पुरधवश्चैषाम्' ( पा ५,३,३९ ) **इति पूर्वशब्दाद् असिप्रत्ययः पुरादेशश्च ।** उत **अपि च सा** त्वम् उत्तरात् **उत्तरतः** अधरात् **दक्षिणतः पाहि । उत्तरप्रतियोगिकः अधरशब्दो दक्षिणदिग्वाची ।** 'उत्तराधरदक्षिणाद् आतिः' ( पा ५,३,३४ ) **इति उभयत्र आतिप्रत्ययः । किं च हे** विभावरि **रात्रि** नः **अस्मान्** गोपाय **। पूर्वं दिग्विशेषनिबन्धनं रक्षणम् उक्तम् । अत्र सामान्येन रक्षणं विवक्ष्यते ।** 'गुपूधूप°' ( पा ३,१,२८ ) **इति आयप्रत्ययः । रक्षणे आवश्यकत्वम् आह चतुर्थपादेन ।** इह **अस्मिन् काले** ते तव स्तोतारः स्मसि **स्तुतिकर्तारो भवामः ।** 'इदन्तो मसि' ( पा ७,१,४६ ) ।

---

१. °तायासत्वं A,B^h,C,D,S^m; °तायासत्वं Dc; °तायासत्वं Cs; पर्वण्यासक RW.; वैप १,५२८ i; ११६४ n अपि द्र.; पद्वदासुन्वन् पै ६,२१,३. २. सः । त्वम् P,P²,J. ३. सोत्तरा° C,D. ४. तु. WI; वैतु. शंपा. RW. गोपायं. ५. उत्ऽतरात् P,P²; उत्तरात् > उत्ऽतरात् J; उत्तरात् Cp. ६. अस्मात् S'.

ये रात्रिमनुतिष्ठन्ति ये च भूतेषु जाग्रति ।
पशून् ये सर्वान् रक्षन्ति[१] ते न आत्मसु जाग्रति[२] ते नः [३]पशुषु जाग्रति[३] ॥५॥

ये । रात्रिम् । अनुऽतिष्ठन्ति । ये । च । भूतेषु । जाग्रति ।
पशून् । ये । सर्वान् । रक्षन्ति । ते । नः । आत्मऽसु । जाग्रति[४] । ते । नः । पशुषु । जाग्रति[४] ॥

ये जना रात्रिम् । 'रात्रेश्चाजसौ' (पा ४,१,३१) इत्यत्र 'अजसादिषु'[०] (पावा ४,१,३१) इति वचनात् जसादिपर्युदासेन अत्र ङीबभावः । अनुतिष्ठन्ति[५] रात्रिविषयं कर्म अर्चनजपोपासनरूपं कुर्वन्ति । ये च जना भूतेषु भवनवत्सु प्राणिषु । विषयसप्तमी । तद्विषये जाग्रति रक्षणार्थम् अवहिता भवन्ति । ये च सर्वान् गवाश्वादीन् पशून् रक्षन्ति रात्रौ भयहेतुभ्यः पालयन्ति । ते सर्वे नः अस्माकम् [६]आत्मसु स्वशरीरे । तत्संबन्धिविवक्षया[६] बहुवचनम् । अस्मदीयपुत्रमित्रादिषु विषये जाग्रति जागृयुः । रक्षणार्थम् अवहिता भवेयुः । ते च नः अस्माकं पशुषु विषये जाग्रति जागृयुः । अत्र लिङर्थे लट् द्रष्टव्यः । जागृ निद्राक्षये । आदादिकः ।

वेद वै रात्रि ते नाम घृताची नाम वा असि ।
तां त्वां[७] [८]भरद्वाजो वेद[८] सा नो [९]वित्तेऽधि जाग्रति[९] ॥ ६ ॥

वेद । वै । रात्रि । ते । नाम । घृताची । नाम । वै । असि ।
ताम् । त्वाम्[१०] । भरत्ऽवाजः[११] । वेद । सा । नः । वित्ते । अधि । जाग्रति[१२] ॥ ६ ॥

हे रात्रि ते तव नाम नामधेयं वेद वेद्मि । 'विदो लटो वा' (पा ३,४,८३) इति मिपो णल् आदेशः । वैशब्दः प्रसिद्धौ । स्वेन ज्ञातं नामधेयं निर्दिशति— घृताची नाम इति । घृताची । घृ क्षरणदीप्त्योः । अस्माद् भावे क्तः । घृतं दीप्तिम् अञ्चतीति घृताची दीप्तिमती । घृतपूर्वाद् अञ्चतेः क्विन् । 'अञ्चतेश्चोपसंख्यानम्' (पावा ४,१,६) इति ङीप् । 'अचः' (पा ६,४,१३८) इति अकारलोपः । 'चौ' (पा ६,३,१३८) इति दीर्घः । इति नाम असि । नामशब्दः प्रसिद्धौ । घृताचीति नाम्ना व्यव-

---

१. रक्षन्तु पै ६,२१,५. २. जाग्रति A,B[h],C,D,K,K[m],R,S[m],V,Dc,Cs,WM.; जाग्रतु पै.; वैप १,१२२९ m अपि द्र. ३. पशुषु जाग्रति A,B[h],C,D,K,K[m],R,S[m],V, Dc,Cs,WM.; पशुभिर्जाग्रतु पै. ४. जाग्रति P,P[२],J,WM. ५. °तिष्ठन्ते S'. ६. आत्मसुखशरीरतत्सं° S'. ७. त्वा RW. पै ६,२१,६. ८. भरद्वाजो° A,B[h],C, D,S[m],C,Cs,WM.; °वेद A,B[h],Cs,D,S[m]; भरद्वाजो वेद > भरद्वाजो वेद Dc. ९. वित्तेधि जाग्रति K,K[m],V,B[h],C,D,S[m],Cs,Dc; वित्तेऽधि जागृहि RW. पै.; वैप १,१२२९ m,n अपि द्र. १०. त्वाम् P,WM.; त्वम् P[२],WM. ११. भरत्ऽवाजः P,J. १२. जाग्रति P,P[२],J.

ह्रियस[1] इत्यर्थः। वैशब्दः प्रसिद्धौ। ताम् उक्तनामिकां त्वां भरद्वाजः भरत् पोषकं वाजः अन्नं यस्य सः। भृञ् भरणे। भौवादिकात् शतृप्रत्ययः। एतन्नामा महर्षिः वेद जानाति। अत एव रात्रेर्भरद्वाजसंबन्धित्वं कात्यायन आह—'रात्रिर्वा भारद्वाजी रात्रिस्तवम्' (ऋअ २,१०,१२७) इति। सा उक्तलक्षणोपेता भरद्वाजेन विदितप्रभावा रात्रिः नः अस्माकं वित्ते पशुपुत्रादिरूपे धने। अधिशब्दः सप्तम्यर्थानुवादी। वित्तविषये अधिकं वा जाग्रति जागर्तु। रक्षणार्थम् अवहिता भवतु। जागर्तेर्लेटि अडागमः। गुणाभावश्छान्दसः।

इति षष्ठेऽनुवाके तृतीयं सूक्तम्।

'इषिरा योषा' इति सूक्तद्वयम् अर्थसूक्तम्। रात्रीकल्पे पुरोहितकर्तव्ये रात्रीसमर्चनकर्मणि रात्र्युपस्थाने च अस्य सूक्तस्य विनियोगः। 'अथ पिष्टमयीं रात्रिं चतुर्भिर्दीपकैः सह' (अप ४,३,१) इति प्रक्रम्य उक्तं परिशिष्टे—"'आ रात्रि पार्थिवम्' (अ १९,४७), 'इषिरा योषा' इति सूक्ताभ्याम् अन्वारभ्य जपेत्" (अप ४,४,१;२) इति, "पैष्टीं[2] रात्रिं कृत्वा ××× चतुर्भिर्दीपकैरर्चयित्वा 'आ रात्रि पार्थिवम्', 'इषिरा योषा' इति सूक्तद्वयेन रात्रिम् उपस्थाय" (अप ४,५,४;६;७) इति च। *[अर्थसूक्तद्वयेनेत्यर्थः]।

इ॒षि॒रा योषा॑ यु॒व॒तिर्दमू॑ना॒ रात्री॑ दे॒वस्य॑ सवि॒तुर्भग॑स्य।
अ॒श्व॒क्ष॒भा[3] सु॒हवा॒ संभृ॑तश्रीरा[4] प॑प्रौ द्यावा॑पृथि॒वी म॑हि॒त्वा ॥ १ ॥

इ॒षि॒रा। योषा॑। यु॒व॒तिः। दमू॑नाः[5]। रात्री॑। दे॒वस्य॑। स॒वि॒तुः। भग॑स्य। अ॒श्व॒ऽक्ष॒भा। सु॒ऽहवा॑। सम्ऽभृ॑तश्रीः[6]। आ। प॒प्रौ। द्यावा॑पृथि॒वी इति॑। म॒हि॒ऽत्वा ॥ १ ॥

इषिरा एष्टव्या सर्वैः प्रार्थनीया। 'अजिरशिशिर°' (पाउ १,५३) इत्यादिवद् इषेः किरच्प्रत्ययान्तत्वेन निपातनं द्रष्टव्यम्। यद्वा इष गतौ। औणादिक इक्प्रत्ययः। रो मत्वर्थीयः। गतिमती सर्वत्र व्यापनशीला युवतिः यौवनवती न कदाचिद् अवस्थान्तरम् आप्तवती अपक्षयरहिता दमूनाः दान्तमनाः सवितुः सर्वस्य प्रेरकस्य भगस्य भजनीयस्य। भजतेः 'पुंसि संज्ञायाम्°' (पा ३,३,११८) इति घः[7]। एतन्नामधेयस्य देवस्य योषा योषिद् अश्वक्षभा अशूनि आशूनि स्वविषये शीघ्रप्रवृत्तीनि अक्षाणि चक्षुरादीन्द्रियाणि अभिभवति तिरस्करोतीति अश्वक्षभा[8]। चक्षुरादिनिरोधिकेति यावत्। अश्नोतेः 'कृवापाजिमि°' (पाउ १,१) इति उण्प्रत्ययः। 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः। भवतेः 'डोऽन्यत्रापि दृश्यते' (पावा ३,२,४८) इति डः। अत्र केवलो भवतिरभिभवनार्थे वर्तते। यद्वा 'अश्वस्य बुध्नं[9] पुरुषस्य मायुम् आ ददे' इति उत्तरत्र (४) वक्ष्यमाणत्वाद् अयम् अर्थः—अश्वान् क्षायति क्षपयतीति अश्वक्षा। अश्वक्षा भा दीप्तिर्यस्याः[10] सा। अन्धतमसेऽपि

---

१. °यते S'. २. पिष्टमयीं Bol. ३. विश्वव्यचाः RW.; वैप १,४८७ a अपि द्र.; अश्वक्षरा पै १४,४,१. ४. संभृतः श्रीरा A,B^h,C,V, पै. ५. तु. सा.; वैतु. P,P², J °ना. ६. °भृतः। श्रीः V. ७ घप्र. स्वरः ? ८. वैतु. पपा. अवग्रहः. ९. वैतु मंपा. १०. वैतु. स्वरावग्रहौ.

**अश्वा दूरं पश्यन्तीति प्रसिद्धिः । तद्दर्शनशक्तिप्रतिबन्धकदीप्तियुक्तेत्यर्थः । अश्नोतेः** 'अशूप्रुषि°' ( पाउ १,१५१ ) **इत्यादिना क्वन्प्रत्ययः । क्षै जै षै क्षये । अस्मात् अश्वोपपदाद्** 'आतोऽनुपसर्गे कः' ( पा ३,२,३ ) । सुहवा **सुष्ठु ह्वातव्या** संभृतश्रीः **संपूर्णकान्तिः सर्वजगद्व्यापनात् स्वयमेव एका प्रतीयते यतः अतः संभृतश्रीः । एवंविधलक्षणोपेता** रात्री महित्वा **महत्त्वेन महिम्ना** द्यावापृथिवी **द्यावापृथिव्यौ** आ पप्रौ **आपूरितवती । प्रा पूरणे ।** 'आत औ णलः' ( पा ७,१,३४ ) **इति ।**

अति[1] [2]विश्वान्यरुहद् गम्भीरो[2] [3]वर्षिष्ठमरुहन्त[3] श्रविष्ठाः[4] ।
उशती[5] [6]रात्र्यनु सा भद्राभि[6] तिष्ठते[7] मित्र इव स्वधाभिः ॥ २ ॥

अति[8] । विश्वानि । अरुहत्[9] । गम्भीरः । वर्षिष्ठम्[10] । अरुहन्त[11] । श्रविष्ठाः[12] ।
उशती । [13]रात्री । अनु । सा । भद्रा । अभि[13] । तिष्ठते । मित्रःऽइव । स्वधाभिः ॥ २ ॥

गम्भीरा[14] **दुष्प्रवेशा रात्रीः** विश्वानि **सर्वाणि चराचरात्मकानि वस्तूनि** अत्यर्हति[14] **अतिक्रम्य व्याप्य वर्तते । तत्रापि** श्रविष्ठा[14] । 'श्रव इति अन्ननाम । श्रूयत इति सतः' ( नि १०,३ ) **इति हि यास्कः । अतिशयेन श्रवस्विनी अन्नवती । श्रवस्विशब्दाद् इष्ठनि** 'विन्मतोर्लुक्' ( पा ५,३,६५ ) । 'टेः' ( पा ६,४,१४३ ) **इति टिलोपः । यद्वा श्रूयमाणा सर्वैरतिशयेन स्तूयमाना रात्रिः** वर्षिष्ठम् **उरुतरं वनस्पतिपर्वतसमुद्रादिकम्** अर्हति[14] । **अतीत्युपसर्गोऽनुषज्यते । अतिक्रम्य व्याप्य वर्तत इत्यर्थः । सर्वाभिभावित्वेन वर्तनमेव अर्हणम् । वृद्धशब्दाद् इष्ठनि वर्षादेशः ।** उशती **अनन्तरं स्वगतजनम् आकाङ्क्षन्ती सर्वं वा क्रमितुं कामयमाना** रात्री अनु **अनुक्षणं** वि तिष्ठते **विशेषेण जगद् व्याप्नोति** मित्र इव **सूर्यो यथा** स्वधाभिः **यजमानादिप्रत्तैर्हवीरूपैरन्नैः साधनैः क्षणेक्षणे स्वतेजसा विश्वम् आक्रामति एवम् इयं रात्रिरिति ।**

---

१. अवि A,$B^h$,C,D,$K^m$,$S^m$,Dc; अभि.V, पै १४,४,२; अर्वि Cs; अधि RW.; वैप १,१४९ e अपि द्र. २. विश्वान्यरुहद् गंभीरो A,$B^h$,C,D,$K^m$,$S^m$,Dc,Cs; विश्वान्यर्हद्गंभीरो S,V; विश्वान्यरुहद् गभीरा RW.; विश्वान्यर्हद् गभीरोद् पै. ३. °मरुहन्तः A,C,$K^m$,$S^m$,Dc; वर्षिष्टमरुहत $B^h$,WM.; वरिषिष्टमरुहन्तः D; वर्षिष्ठमर्हति S,V; वर्षिष्ठमरुहंत Cs; वर्षिष्ठं द्यामरुहच् RW.; वर्षिष्ठमर्हद् पै. ४. श्रविष्ठा A,C,$K^m$,$S^m$,Dc,V,S; श्रविष्टा $B^h$,R,Cs; श्रमिष्टा D; छविंष्ठा RW.; वैप १,३१४३ e अपि द्र.; अश्रविष्ठा पै. ५. उशार्ती A. ६. राञ्यँनुसामद्राहि A,C; राञ्यँनुसामद्राहि $B^h$; राञ्यनुंसामद्राहि D,$K^m$,R,Dc; राञ्यनुंसामप्राहि $S^m$; राञ्यनुंसामद्रा वि S,V; राञ्यनुंसामद्राहि Cs; राञ्यनु मा भद्राभिर्वि RW.; राञ्यवसानभद्राद् वि पै. ७. तिष्ठते A,C,$K^m$,$S^m$,Dc,V,S; तिष्ठते Cs; तिष्टते $B^h$,D; तिष्टते R. ८. अर्वि P,$P^2$,J. ९. अरुहत् P,$P^2$,J. १०. वर्षिष्टम् $P^2$. ११. अरुहंतः P,$P^2$,J. १२. श्रविष्ठा P.$P^2$; श्रविष्ठाः > श्रविष्ठा J. १३. रात्रि । अनुऽसाम । द्राहिम् ( द्राहिंम् $P^2$; द्राहिम् > द्राहिंम् J. ) P,$P^2$,J. १४. वैतु. मंपा.

वर्ये[1] वन्दे[2] सुभगे सुजात[3] [4]आजगन् रात्रि[4] सुमना [5]इह स्याम्[5] ।
अस्मांस्त्रायस्व नर्याणि जाता अथो यानि [6]गव्यानि पुष्ट्या[6] ॥ ३ ॥

वर्ये । वन्दे । सुऽभगे । सुऽजाते । आ । अजगन्[7] । रात्रि । सुऽमनाः । इह । स्याम् ।
अस्मान् । त्रायस्व । नर्याणि । जाता[8] । अथो इति । यानि । गव्यानि । पुष्ट्या[9] ॥३॥

हे वर्ये अनिरुद्धप्रभावे । 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' ( पा ३,१,१०१ ) इति वृणोतेः अनिरोधेऽर्थे यत्प्रत्ययान्तत्वेन निपातनम् । हे वंदे[10] सर्वैरभिष्टूयमाने । 'घञर्थे कविधानम्' ( पावा ३,३,५८ ) इति कर्मणि वदेः कप्रत्ययः । यजादित्वात् संप्रसारणे 'सम्प्रसारणाच्च' ( पा ६,१,१०८ ) इति परपूर्वत्वस्य छन्दसि विकल्पितत्वाद् अत्र परपूर्वत्वाभावः । हे सुभगे । भगो भाग्यम् । सौभाग्यवति सर्वैः सुष्ठु संभजनीये वा । 'पुंसि संज्ञायां घः प्रायेण' ( पा ३,२,११८ ) इति भजतेर्घप्रत्ययः । हे सुजाते सुष्ठु प्रादुर्भूते हे रात्रि आ अजगन् आगतासि । गमेर्लङि मध्यमपुरुषे सिपि 'बहुलं छन्दसि' ( पा २,४,७६ ) इति शपः श्लुः। 'मो नो धातोः' ( पा ८,२,६४ ) इति नत्वम् । 'हल्ङ्या' ( पा ६,१,६८ ) इत्यादिना सिपो लोपः । इह अस्यां त्वय्यागतायाम् अहं सुमनाः सुमनस्कः स्याम् भवेयम् । अनन्तरम् अस्मान् त्वदागमनेन सुमनस्कान् । पुत्रपश्वाद्यपेक्षया बहुवचनम् । त्रायस्व पालय । त्रैङ् पालने । भौवादिकः । 'अनुदात्तङितः°' ( पा १,३,१२ ) इति आत्मनेपदम् । तथा जाता जातानि उत्पन्नानि नर्याणि नरहितानि वस्तूनि । 'तस्मै हितम्' ( पा ५,१,५ ) इति नरशब्दाद् यत् । अथो अपि च पुष्टा[10] पुष्टानि पोषकाणि गव्यानि गोभ्यो हितानि । उपलक्षणम् एतत् । गवाश्वादिहितानि यानि वस्तूनि तान्यपि त्रायस्व । मनुष्यगवादिहितरक्षणेन तेषां रक्षणं कैमुतिकसिद्धम् ।

[11]सिंहस्य रात्र्युशती पींषस्य[11] व्याघ्रस्य द्वीपिनो वर्च आ ददे ।
अश्वस्य ब्रध्नं पुरुषस्य मायुं पुरु रूपाणि कृणुषे विभाती[12] ॥ ४ ॥

सिंहस्य । रात्री[13] । उशती । पींषस्य । व्याघ्रस्य । द्वीपिनः । वर्चः । आ । ददे ।
अश्वस्य । ब्रध्नम् । पुरुषस्य । मायुम् । पुरु । रूपाणि । कृणुषे । विऽभाती[12] ॥ ४ ॥

---

१. वार्ये RW.; नर्ये पै १४,४,३; वैप १,२९८५ i द्र. २. वन्द्ये $K^{m}$,$S^{m}$,V,RW.; वेंदे Cs; वदे S. ३. सुजात C,$S^{m}$; सुजात् Cs; सुजाता पै.; सुजाते S. ४. अजागन् रात्रि $B^{h}$; आजागन् रात्रि C,D,$K^{m}$,R,V,Dc,Cs; आजागन् रात्रिं $S^{m}$; अजंगन् रात्रि RW.; चाग्नि ? रात्रि पै. ५. इह स्यांः RW.; वैप १,७२२ b द्र.; इस्याम् पै. ६. गव्यानि पुष्ट्यां K,$K^{m}$,V; गव्यांनि पुष्ट्यां Dc; गव्यांनि पुष्टा S,RW. ७. जा । अगन् P,$P^{2}$,J. ८. जाताः P,$P^{2}$,J. ९. पुष्ट्यां $P.^{2}$ १०. वैतु. मंपा. ११. सिंहस्य राव्युशती पीषस्य ( पींष° C,R; पिंष° > पींष° Dc. ) A,$B^{h}$,D,$S^{m}$,Cs,C,R,Dc; °पिशस्य RW.; निपस्य पै १४,४,४; वैप १,२०१९ m अपि द्र. १२. °तीः A,$B^{h}$,C,R, V,Cs,P,$P^{2}$,J. १३. रात्रि P,$P^{2}$,J.

उशती कामयमाना रात्री देवता पिषस्य[1] संचूर्णकस्य सामर्थ्याद् गजयूथस्य। पिषॢ संचूर्णने। 'इगुपधज्ञाप्रीकिरः कः' (पा ३,१,१३५)। सिंहस्य। द्वीपिनः द्विधा गता आपो[2] यस्मिन्। 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (पा ६,३,९७) इति अप्शब्दाकारस्य[3] ईकारादेशः। द्वीपम् अस्य निवासस्थानत्वेन अस्तीति। मत्वर्थीय इनिप्रत्ययः। स्वाच्छन्द्येन[4] द्वीपे उदकावेष्टिते दुर्गादौ संचरतो व्याघ्रस्य व्याजिघ्रतः शार्दूलस्य वर्चः तेजः पराभिधर्षणसामर्थ्यरूपम् आ ददे अपहृतवती। सिंहादेः परोपद्रवकारकं सामर्थ्यम् अपजहार। तथा अश्वस्य शीघ्रगामिनस्तुरंगस्य बुध्नम्[1] मूलम्। अश्ववीर्यस्य वेगो हि मूलम्। तच्च पुरुषस्य प्राणिनः मायुम् शब्दम् आह्वानादिलक्षणं च आ ददे। अश्वगतिनिरोधिका कुत्रापि पदार्थस्य अदर्शनात् तद्विषयवाग्व्यवहारनिरोधिका च बभूवेत्यर्थः। अथ विभाती स्वयमेव विशेषेण भासमाना रात्री त्वं पुरु। सुपो लुक्। पुरूणि नानाविधानि रूपाणि कृणुषे करोषि[5]। कृवि हिंसाकरणयोश्च। 'धिन्विकृण्व्योर च' (पा ३,१,८०) इति उप्रत्ययः।

'शिवां रात्रिमनुसूर्यं च[6] हिमस्य माता सुहवा नो अस्तु।
[7]अस्य स्तोमस्य[7] 'सुभगे नि[8] बोध[9] येन त्वा वन्दे[10] विश्वासु दिक्षु[11] ॥५॥

शिवाम्। रात्रिम्[12]। अनुऽसूर्यम्। च। हिमस्य। माता। सुऽहवा। नः। अस्तु।
अस्य[13]। स्तोमस्य। सुऽभगे। नि। बोध[9]। येन। त्वा। वन्दे। विश्वासु। दिक्षु ॥५॥

हे रात्रि[1] त्वां शिवाम् शिवकारिणीम्। वन्दे इति उत्तरक्रियापदेन संबन्धः। तथा महि[1] महान्तं सूर्यं रात्रेर्भर्तारं भगं च। वन्दे इति संबन्धः। रात्री सवितुर्भगस्य योषा इति पूर्वम् (१) उक्तम्। अवयुत्य रात्रीं परोक्षेण स्तौति द्वितीयपादेन। हिमस्य तुहिनस्य माता जननी हिमोत्पादिका रात्री। रात्रौ हिमं वर्धते इति सर्वलोकसंप्रतिपन्नम्। तादृशी रात्रिः नः अस्माकं सुहवा सुष्ठु ह्वातव्या अस्तु भवतु। अथ प्रत्यक्षवद् उक्तिः। हे सुभगे सौभाग्यवति यद्वा भगः सूर्यः शोभनभगसंज्ञकपतियुक्ते त्वम् अस्य इदानीं क्रियमाणस्य अस्मदीयस्य स्तोमस्य स्तोत्रस्य स्तोत्रं नि बोध नितरां जानीहि। अनुग्रहानुकूलबुद्ध्या[14] अनुमन्यस्व।

---

१. वैतु. मंपा. २. अपो S'. ३. अपिशब्दा° S'. ४. स्वाछन्देन S'. ५. इतः परम्—ज [ग] द्व्यापनसाधनानि स्वीयान्येव पुरुषेण किंचिद् वस्तु प्रदीयत इत्यर्थः S' टि. ६. शिवां (शिवा Cs.) रात्रिमहि (°महि > °मनु° $K^m$; °माहि $S^m$) सूर्यं च A,D,K,$K^m$,R,$S^m$,Dc,Cs,WM.; शिवं रात्रिमन्वसूर्यं चं RW.; शिवा मे राञ्यनूत्सूर्यं च W.; शिवां रात्रिमहि सूर्यं च S; शिवां रात्रिमह्नि सूर्यं च पै १४,४,५; वैप १,२२१ b; २६५८ c अपि द्र. ७. अश्व स्तो° A,$B^h$,C,R,$S^m$,Cs,WM.; अश्व स्तो° V,WM.; अश्वस्तो° पै. ८. °ोऽव पै. ९. बोध $K^m$,V,$P^2$. १०. वंद्ये $S^m$,V,WM.; वद्ये R,V,Cs,WM. ११. विक्षु पै. १२. रात्रिम् > रात्रि J. १३. अश्व P,J; अश्व $P^2$. १४. °नुबुद्ध्या S'.

'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी । 'चतुर्थ्यर्थे बहुलम्' (पा २,३,६२) इति षष्ठी । बुधिर् बोधने । भौवादिकः । अस्माल्लोटि मध्यमे हेर्लुक् । येन स्तोमेन विश्वासु सर्वासु दिक्षु व्याप्तां त्वा त्वां वन्दे अभिष्टौमि । वदि अभिवादनस्तुत्योः ।

स्तोमस्य नो विभावरि रात्रि राजेव जोषसे ।
असाम सर्ववीरा भवाम[1] सर्ववेदसो व्युच्छन्तीरनूषसः[2] ॥ ६ ॥

स्तोमस्य । नः । विभावरि । रात्रि । राजाऽइव । जोषसे ।
असाम । सर्वऽवीराः । भवाम[3] । सर्वऽवेदसः । विऽउच्छन्तीः । [4]अनु । उषसः[4] ॥ ६ ॥

हे विभावरि विशेषेण भासमाने हे रात्रि नः अस्मदीयस्य स्तोमस्य स्तोत्रस्य स्तोत्रं जोषसे जुषस्व[5] सेवस्व । तत्र दृष्टान्तः—राजेव यथा राजा स्तोतृभिः क्रियमाणां स्तुतिं प्रीत्या[6] सेवते अवहितः शृणोति एवम् अवहिता अस्मदीयं स्तोत्रम् अवधारयेति । जुषी प्रीतिसेवनयोः । अस्माल्लेटि अडागमः । 'छन्दस्युभयथा' ( पा ३,४,११७ ) इति तिङ आर्धधातुकत्वात् लघूपधगुणः । यदि स्तोत्रं शृणुयास्तर्हि व्युच्छन्तीः । उछी विवासे । तमो विवासयन्तीः अपसारयन्तीः प्रकाशमाना उषसः उषसः उषःकालान् अनु । लक्षणार्थे अनुः कर्मप्रवचनीयः । उषःकालबहुत्वात् सार्वकालं विवक्षितम् । सर्वदा सर्ववीरा असाम । वीरः कर्मणि कुशलः पुत्रादिः । सकलपुत्रमित्रादिसमेता असाम भवाम । अस्तेर्लोटि 'आडुत्तमस्य पिच्च' ( पा ३,४,९२ ) इति आडागमः । तथा सर्ववेदसः । वेद इति धननाम । संपूर्णधनयुक्ता भवाम । वेत्तेर्वा असुन् । सर्वविषयज्ञाना रात्रौ निद्रावशेन सर्वेन्द्रियव्यापाराणां विरामाद् मूढाः सन्तः उषःकाले तमोविगतेः सर्वेन्द्रियविषयज्ञानवन्तो भवाम इति । भवतेः पूर्ववद् आडागमः ।

शम्या[7] ह नाम दधिषे[8] मम दिप्सन्ति ये धना[9] ।
[10]रात्रीहि तानसुतपा य[10] स्तेनो न विद्यते यत्[11] पुनर्न विद्यते ॥ ७ ॥

शम्या । ह । नाम । दधिषे । मम । दिप्सन्ति । ये । धना[9] । [12]रात्रि । इहि ।
तान् । असुऽतपा[12] । यः । स्तेनः । न । विद्यते । यत् । पुनः । न । विद्यते ॥ ७ ॥

---

१. भवामस् पै १४,४,६. २. °न्तीरनूषसः A,$B^h$,C,D,$K^m$,R,$S^m$,V,Dc,Cs,WM. ३. भवाम P; भवाम > भवाम J. ४. अनुऽउषसः P,$P^2$,J,WM. ५. जुष S'. ६. यथा प्रीत्या S'. ७. राम्या RW.; १,२०८३ k अपि द्र. ८. तरुषे? पै १४,४,७. ९. धनाः $B^h$,C,D,$K^m$,$S^m$,V,P,$P^2$,WM.; धना > धनाः Dc,J. १०. रात्रिंहिर्नानः सु° $B^h$,$S^m$; रात्रिहितानसु° K; रात्रीहितानसु° $K^m$,V; रात्रीहितानसु° Cs; रात्रीहितानः सु° A,D,R; रात्रीहितानसु° C; रात्रीहितानसुतपा > रात्रीहितानसुतपा Dc; रात्रि हि तानुनु तप यथा RW.; रात्रि हीचांनसदपात? पै. ११. यथा RW.; यः S. १२. रात्री । हिता (हि । ता WM.) । नः । सुतऽपा (सुतऽपा J.) P,$P^2$,J,WM.

हे रात्रि त्वं शम्या नाम शम्येति नामधेयं दधिषे । शत्रुशमनसमर्था शम्या। शमशब्दाद् अर्हार्थे यत् । शमयतेर्वा व्यत्ययेन कर्त्तरि यत् । इत्थं शत्रुधर्षणसमर्थं शम्येति नामधेयं दधिषे धारयसि । हशब्दः प्रसिद्धौ । शम्येति नामधारणस्य प्रयोजनम् आह — ममेत्यादिना । ये शत्रवः मम धना धनानि । शेर्लोपः । दिप्सन्ति दम्भितुं हिंसितुम् अपहर्तुम् इच्छन्ति । दम्भु दम्भे । अस्माद् इच्छार्थे सनि ‘सनीवन्तर्ध°’ (पा ७,२,४९) इति इडभावे ‘दम्भ इच्च’ (पा ७,४,५६) इति इकारः । ‘अत्र लोपोऽभ्यासस्य’ (पा ७,४,५८) इति अभ्यासलोपः । हे रात्रि त्वं तान् दिप्सून् शत्रून् असुतपा असून् प्राणान् शात्रवीयान् तपन्ती तापयन्ती सती इहि गच्छ प्राप्नुहि । असूपपदात् तपेर्मूलविभुजादित्वात् कप्रत्ययः । एतेर्लोटि अदादित्वात् शपो लुक् । हेरपित्त्वाद् गुणाभावः । यद्वा सुष्ठु तपतीति सुतपा । सुपूर्वात् तपेः कर्तरि कप्रत्ययः[1] । न सुतपा असुतपेति नञ्समासः[2] । दुःष्ठु तापयन्ती पाणिपादशिरोग्रीवादीनां व्यत्यासे हननेन विपरीतं क्लेशयन्ती सती तान् शत्रून् प्राप्नुहीति संबन्धः । तदेवाह — यः स्तेनः चोरः न विद्यते सत्तां न लभते नाविर्भवति न दृश्यते तथा इहि । यः[3] च पुनर्न विद्यते पुनर्नोत्पद्यते। सपुत्रपशुबान्धवं शत्रुं मारयेत्यर्थः ।

भद्रासि रात्रि ‘[4]चमसो न[4]’ विष्टो[5] ‘[6]विष्वङ् गोरूपं[6]’ युवतिर्बिभर्षि[7] ।
‘[8]चक्षुष्मती मे उशती[8]’ वपूंषि ‘[9]प्रति त्वं दिव्या न क्षाममुक्थाः[9]’ ॥ ८ ॥

भद्रा । असि । रात्रि । चमसः । न । विष्टः । विष्वङ् । गोऽरूपम् । युवतिः[10] । बिभर्षि । चक्षुष्मती । मे । उशती । वपूंषि । प्रति । त्वम्[11] । दिव्या । [12]न । क्षाम्[11] । अमुक्थाः ॥

हे रात्रि त्वं भद्रा भन्दनीया कल्याणरूपा असि चमसो न । न उपमार्थीयः। चमन्ति अदन्ति अत्रेति चमसः पात्रं विष्टः भोजनार्थं परिविष्टश्चमसः पात्रमिव। विष्वङ् विषूची । स्त्रीप्रत्ययस्य लुक् । विषूची सर्वत्र व्याप्ता युवतिः यौवनवती उत्तरोत्तरबहलतमःपुञ्जयुता गोरूपम् धेन्वाकृतिं बिभर्षि धारयसि । रात्रेर्गोरूपत्वम् अन्यत्राम्नायते — ‘या प्रथमा व्यौच्छत् सा धेनुरभवद् यमे’ (तै ४,३,११,५) इति ।

---

१. यत्प्रत्य° S′. २. एवं स्वरोऽवग्रहश्च ? ३. वैतु. मंपा. ४. तपसो नु पै १४,४,८. ५. पिष्टो A,Bh,D,R,Cs; शिष्टो C,Km,Sm,Dc,V; पिष्टो RW. ६. विश्वं गोरूपं A,Bh,C,D,Km,R,Sm,Dc,Cs,V, पै.; विश्वाङ्क रूपं RW.; वैप १,२९५८ c अपि द्र. ७. युवतिं बि° Bh,C. ८. चक्षुष्मते म उशती RW.; चक्षुष्मती वेयुवती ? पै. ९. प्रति त्वां दिव्या तक्मा अमुक्थाः ( अमुक्ताः Cs; तक्मा अमुक्थाः > तुक्मा अमुक्थाः Dc. ) A,Bh, C,D,Km,R,Sm,Dc,Cs,V; प्रति त्वं दिव्या तुक्मा अमुक्थाः V; प्रति त्वं दिव्यास्तारका अमुक्थाः RW.; ?प्रत्यां दिर्त्यां दिव्यां अरुक्मम् अमुग्धः ? पै. १०. युवतिम् P,P२,J. ११. त्यां, त्वां V; त्यां K,P,P२,J. १२. तुक्माः P,J; तुक्माः P२.

प्रथमा रात्रिः व्यौच्छत् विवासितवती उषोरूपेण संपन्नेति तस्यार्थः । तथा 'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्' ( पागृ ३,२,२ ) इति धेनोरुपमानत्वात् तत्समानधर्मसद्भावो रात्रेः प्रतिपादितो भवति । अत्र रूपशब्दो धर्मवाची । यतो गोरूपं बिभर्षि अतः उशती अस्मान् पोषयितुं कामयमाना चक्षुष्मती चक्षुर्दर्शनशक्तिः तद्वती अस्मद्विषयदर्शनशक्तिमती अस्मान् रक्षितुम् अनुग्रहबुद्ध्या सर्वदा लोकमाना । एवंविधा त्वं मे मम वपूंषि शरीराणि । बहुवचनेन पुत्रादिशरीराणि विवक्ष्यन्ते । तानि प्रति अभिलक्ष्य क्षाम् । पृथिवीनामैतत् । क्षियन्ति निवसन्ति भूतान्यत्रेति क्षा भूमिः । तां नामुक्थाः न मुञ्च । तत्र दृष्टान्तः— दिव्या न इति । दिव्या दिव्यानि दिवि भवानि शरीराणीव यथा दिव्यशरीराणि न मुञ्चसि एवम् आस्माकानीति । मुञ्चतेश्छान्दसे लुङि स्वरितेत्त्वाद् आत्मनेपदम् । 'झलो झलि' ( पा ८,२,२६ ) इति सिचो लोपः ।

यो अद्य[1] स्तेन आयत्यघायुर्मर्त्यो[2] रिपुः ।[3]
रात्री तस्य प्रतीत्य[4] प्र ग्रीवाः प्र शिरो हनत् ॥ ९ ॥

यः । अद्य । स्तेनः । आऽअयति । अघऽयुः । मर्त्यः[5] । रिपुः ।
रात्री । तस्य । प्रतिऽइत्य । प्र । ग्रीवाः । प्र । शिरः । हनत् ॥ ९ ॥

प्र पादौ न यथायति प्र हस्तौ न यथाशिषत्[6] ।[3]
यो मलिम्लुरुपायति[7] स संपिष्टो अपायति ।
अपायति स्वपायति शुष्के स्थाणावपायति[8] ॥ १० ॥[3]

प्र । पादौ । न । यथा । अयति । प्र । हस्तौ । न । यथा । अशिषत्[9] ।
यः । मलिम्लुः । उपऽअयति । सः । सम्ऽपिष्टः । अप । अयति ।
अप । अयति । सुऽअपायति । शुष्के । स्थाणौ । [10]अप । अयति[10] ॥ १० ॥

अद्य इदानीं यः स्तेनः आयति आगच्छति । अस्मद्धनम् अपहर्तुम् इति शेषः । तथा अघायुः अघं हिंसालक्षणं पापं तत् परस्येच्छन् । अघशब्दात्

---

१. °ऽद्य पै १४,४,९. २. °र्मर्त्यो A,B^h,C,D,R,S^m,Cs. ३. यो मम रात्रि सुरूप आयति स संपिष्टो अपायति इति अन्यप्रमाणेषु अनुपलब्धेन उत्तरार्धेन नवमीमृचं विरचय्य रात्री···ऽशिषत् इति दशमीं यो···स्थाणावपायति इति च एकादशीं मत्वा व्याख्याति सा. ४. प्रगीयस्व पै. ५. मर्त्यः J; मर्त्युः P. ६. °शिषः A,B^h,C,R,S^m,V; यथा रिषत् RW. ७. मलिम्लुरु° K,K^m,V,Dc. ८. तु. सा.; वैतु. A,B^h,C,D,K,R,S^m,Dc, Cs °वपायतः; V °वपायति, °वपायतः; RW. स्थले अपायति. ९. अशिषः P,P^२,J. १०. तु. सा.; वैतु. P,P^२,J अपऽअयतः.

क्वचि 'अश्वाघस्यात्' (पा ७,४,३७) इति आकारः। मर्त्यः मरणधर्मा रिपुः शत्रुश्च आयति। इ गतौ। भौवादिकः। अय पय गतौ इत्यस्माद् वा व्यत्ययेन परस्मैपदम्। हे सुरूपे शोभनरूपे रात्रि मम। समीपम् इति शेषः। यः च शत्रुः आयति स सर्वः स्तेनादिः संपिष्टः स्वत्तेजसा सम्यक् चूर्णितः अर्दितः सन् अपायति अपसृत्य अपक्रम्य अयतु गच्छतु। त्वया बाधितः शत्रुः अस्मत्तो दूरदेशं गच्छत्वित्यर्थः। अयतेर्लेटि अडागमः। स संपिष्टो अपायतीत्युक्तम्। परोक्षवादेन संपेषप्रकारं विशिनष्टि—एवंमहिमोपेता रात्री देवता तस्य शत्रोः परोपद्रवकारित्वलक्षणम् अभिप्रायं प्रतीत्य सम्यग् ज्ञात्वा ग्रीवाः कन्धराः। अवयवापेक्षया बहुत्वम्। यद्वा तस्य पूर्वोक्तस्य स्तेनादेर्ग्रीवाः प्र हरत्[१] प्रहरतु छिनत्तु। शिरः च प्र हरत् प्रच्छिनत्तु। हरतेर्लेटि अडागमः। पादौ च। प्र। हरत् इति क्रियानुषङ्गः [९]। यथा नायति पुनर्नागच्छति तथा पादौ गमनसाधनभूतौ प्रच्छिनत्तु। हस्तौ बाहू च प्र हरत् यथा नाश्लिषत्[१] न संश्लेषयेत् मिथो न संयोजयेत्। परं प्रहर्तुम् इति शेषः। तथा हस्तौ प्रच्छिनत्तु। श्लिष आलिङ्गने इति धातुः। 'श्लिष आलिङ्गने' (पा ३,१,४६) इति आलिङ्गनेर्थे क्सस्य विधानाद् अत्र तदर्थाभावात् च्लेः अङ् आदेश एव। ङित्त्वात् लघूपधगुणाभावः। यो मलिम्लुः मलिम्लुचस्तस्करः उपायति अस्मदीयधनम् अपहर्तुं बाधितुं वा समीपम् आगच्छति स शत्रुः संपिष्टः त्वया सम्यक् चूर्णितः सन् अपायति अस्मत्तः अपगच्छतु। आवश्यकत्वद्योतनार्थम् अपायतीति पुनर्वचनम्। स्वपायति सुष्ठु सम्यग् निःशेषम् अपगच्छतु। गन्तव्यस्थानेपि सुखलेशस्याप्यभावम् आह—शुष्के नीरसे स्थाणौ शाखोपशाखारहितवृक्षमूले आश्रये अपायति अपायतु अपगच्छतु। अस्मत्तोऽपगतः शत्रुश्छायारहितं नीरसवृक्षमूलम् आश्रयत्वित्यर्थः। अत्र सर्वत्र एतेर्लेटि अडागमः [१०]।

इति षष्ठेऽनुवाके चतुर्थं सूक्तम्।

'अध रात्रि तृष्टधूमम्' इति सूक्तस्य रात्रीकल्पे रात्र्युपस्थाने जपे च विनियोगः पूर्वसूक्तेन सह उक्तः।

अध[२] रात्रि तृष्टधूममशीर्षाणमहिं कृणु।
अक्षौ[३] वृकस्य [४]निर्जह्यास्तेन तं[४] द्रुपदे जहि ॥ १ ॥

अध[५]। रात्रि। तृष्टऽधूमम्। अशीर्षाणम्। अहिम्। कृणु।
अक्षौ[६]। वृकस्य। निः। जह्याः। तेन। तम्। द्रुऽपदे। जहि ॥ १ ॥

---

१. वैतु. मंपा. २. अंध A,Bh,C,D,K,Km,R,Sm,V,Dc,Cs पै १४,४,११; अन्धं RW. ३. अक्षौ Bh; अक्षौ > अक्ष्यौ C; अक्षू D; अक्ष्यौ Km,V; आक्षौ Sm; अक्षौ > अक्ष्यौ Dc; अक्षो Cs; अक्ष्यौ RW.; ह्नौ ? पै. ४. निर्जह्या स्तेनं RW.; वैप १,१४०७ i अपि द्र.; निर्जह्या त्वेनं पै. ५. अंध P,P²,J. ६. अक्ष्यौ P,P²,J.

एषा ऋक् 'आ रात्रि पार्थिवम्' (अ ४७,८) इति सूक्ते व्याख्याता। अक्षौ निर्जह्याः इत्येतावान् विशेषः। अक्षौ अक्षिणी चक्षुषी निर्जह्याः। जहातिरत्र अन्तर्णीतण्यर्थः। निर्हापयेः निर्मोचयेः। उत्पाटयेरिति यावत्। ओहाक् त्यागे। जौहोत्यादिकः। 'लोपो यि' (पा ६,४,११८) इति यकारादौ प्रत्यये धातोराकारस्य लोपः।

ये ते॑ रात्र्यन॒ड्वाह॒स्तीक्ष्णशृ॑ङ्गाः[1] स्वा॒शवः॑।
तेभि॑र्नो अ॒द्य पा॑र॒याति॑[2] दु॒र्गाणि॑ वि॒श्वहा॑ ॥ २ ॥

ये। ते॒। रा॒त्रि॒। अ॒न॒ड्वाहः॑। ती॒क्ष्णऽशृ॑ङ्गाः[1]। सु॒ऽआ॒शवः॑।
तेभिः॑। नः॒। अ॒द्य। पा॒र॒य[3]। अति॑। दुः॒ऽगानि॑। वि॒श्वहा॑ ॥ २ ॥

हे रात्रि ते तव संबन्धिनो वाहनभूताः तीक्ष्णशृङ्गाः निशितविषाणाः स्वाशवः अतिशयेन शीघ्रगामिनो ये अनड्वाहः अनोवहनशक्ताः पुंगवाः सन्ति। 'चतुरनडुहोराम् उदात्तः' (पा ७,१,९८) इति आम् आगमः। तेभिः तैः उक्तलक्षणोपेतैरनडुद्भिः नः अस्मान् अद्य इदानीं विश्वहा विश्वेषु सर्वेषु अहःसु रात्रिषु च दुर्गाणि दुर्गमाणि कृच्छ्राणि दुर्जयानि अनर्थजातानि अति पारय अतिक्रामय। यथा दुस्तरं नद्यादिकम् अनड्वाहः पुरुषांस्तारयन्ति एवम् एभिः अस्मान् शत्रुकृतारिष्टेभ्यस्तारयेति।

रात्रि॑रात्रि॒मरि॑ष्यन्त॒स्तरे॑म त॒न्वा॑ व॒यम्।
ग॒म्भी॒रमप्ल॑वा इ॒व न त॑रेयु॒ररा॑तयः ॥ ३ ॥

रात्रि॑म्ऽरात्रिम्। अरि॑ष्यन्तः। तरे॑म। त॒न्वा॑। व॒यम्।
ग॒म्भी॒रम्। अप्ल॑वाःऽइव। न। त॒रे॒युः॑। अरा॑तयः ॥ ३ ॥

अत्र परोक्षवादः। रात्रिंरात्रिम्। 'नित्यवीप्सयोः' (पा ८,१,४) इति द्विर्वचनम्। सर्वां रात्रिम् अरिष्यन्तः गमिष्यन्तः। आगामिरात्र्यपेक्षया भविष्यत्प्रयोगः। अर्तेः स्यप्रत्यये 'ऋद्धनोः स्ये' (पा ७,२,७०) इति इडागमः। वयं तन्वा स्वशरीरेण। तनोति विस्तारयति कुलम् इति वा तनुशब्दः पुत्रवाची। पुत्रादिभिः सह तरेम। रात्रिरेव कर्म। सर्वस्या रात्रेः पारम् अश्नुवीमहीत्यर्थः। अरातयः अस्मदीयाः शात्रवस्तु न तरेयुः रात्रिं नातिक्रामेयुः। रात्रावेव विनष्टा भवन्तु। अत्र दृष्टान्तः— गम्भीरम् अप्लवा इवेति। प्लवः तरणसाधनम् उडुपम् तद्रहिता जना यथा गम्भीरम्

---

१. तु. RW.; वैतु. मूको. शंपा. °तीक्ष्णशृङ्गाः (पपा. तीक्ष्णऽशृङ्गाः). २. पा॑रयुत्यति॑ A,B[h],C,D,K[m],V,Cs,Dc; पा॑रयुत्यति R,S[m]. ३. पा॒र॒याति॒ P; पा॒र॒यति॒ P[2],J.

**अगाधं नद्यादिकं तरन्तो मध्येनदि निमज्जन्ति एवं त्वद्रक्षणरूपप्लवराहित्यात् रात्रिमध्य एव ते विनश्यन्तु इत्यर्थः ।**

**यथा॑ शाम्या॒कः[1] प्र॒पत॑न्नप॒वान्[2] नानु॑वि॒द्यते॑ ।**
**[3]ए॒वा रा॑त्रि[3] प्र पा॑तय॒ यो अ॒स्माँ अ॑भ्यघा॒यति॑[4] ॥ ४ ॥**

यथा॑ । शा॒म्या॒कः[5] । प्र॒ऽपत॑न्[6] । अ॒प॒ऽवान् । न । अ॒नु॒ऽवि॒द्यते॑ ।
ए॒व[7] । रा॒त्रि॒ । प्र । पा॒त॒य॒ । यः । अ॒स्मान् । अ॒भि॒ऽअ॒घा॒यति॑[4] ॥ ४ ॥

शाम्याकः **श्यामाकाख्यो धान्यविशेषः । स** यथा प्रपतन् **पक्वः सन् निपतन्** अपवान् **अपकर्षवान् दुर्बलो निःसारो** नानुविद्यते **अवस्थितिं न लभते । नोपलभ्यते । विनश्यतीति यावत् ।** एव **एवम् हे** रात्रि **त्वं** प्र पातय **प्रकर्षेण अवाङ्मुखं निपातय । तम् आह—**यः **शत्रुः** अस्मान् अभ्यघायति **अभिलक्ष्य अघं हिंसालक्षणं पापं कर्तुम् इच्छति हिनस्ति । तं प्रपातयेति संबन्धः ।**

**[8]अप॑ स्ते॒नं वासो॒ गो॑अ॒जमु॒त[8] तस्क॑रम् ।**
**अथो॒ यो अर्व॑तः शिरो॑ऽभि॒धाय॒ निनी॑षति ॥ ५ ॥**

अप॑[9] । स्ते॒नम् । वास॑: । गो॒ऽअ॒जम्[10] । उ॒त । तस्क॑रम् ।
अथो॒ इति॑ । यः । अर्व॑तः । शिर॑: । अ॒भि॒ऽधाय॑ । निनी॑षति ॥ ५ ॥

**यः स्तेनः** वासः **वस्त्रं** गोअजम् । **द्वन्द्वैकवद्भावः । स्फोटायनव्यतिरिक्ताचार्यमते अवङादेशाभावः ।** 'सर्वत्र विभाषा गोः' (पा ६,१,१२२) **इति विकल्पितत्वात् पूर्वरूपत्वाभावः । गा अजांश्च निनीषति तं** स्तेनम् अप । **उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । अपगमय ।** उत **अपि च** तस्करम् **चोरम् अपसारय ।** अथो **अपि च** यः **तस्करः** अर्वतः **अश्वान्** शिरः **शिरांसि** अभिधाय । **अभिपूर्वो दधातिर्बन्धने**

---

१. श्यामाकः RW. पै १४,४,१४.; वैर १,३०९५ d अपि द्र.  २. प्रपतनपवान् A· प्रपवान् K; प्रपतंश्नपुवान् Km,V; प्रपतन्नपुवान् Bh,Sm,Cs; प्रपतन्नपवा C; प्रपतन्नपुवान् D, प्रपतंश्नपरं RW.; प्रपतन्ते दिवां? पै.  ३. एतात्रा° Bh; एतावा° A,C,D,Km,R,Sm, V,Dc; एतावा रात्रि Cs.  ४. °यति A,Bh,D,K,Km,V,Dc,P,P², J.  ५. शाम्याकः > श्यामाकः P; श्याम्याकः P²,J.  ६. प्रऽपतन् P,J.  ७. एतौ । आ P,P²,J.  ८. अप स्तेनं वासो गोरजमुत (Km °जं उत; Cs °जंनुत) A,Bh,C,D,K,Km,Sm,Cs; अप स्तेनं वासो गोरजमुत > अप स्तेनं वासो गोरजं उत Dc; अप स्तेनं वासो गो अजं उत, अप स्तेनं वासो गोरजमुत V; अपं स्तेनमंवासयो गोरजमुत RW.; अप स्तेनं वासमथं गोमथमुत पै १४,४,१५; वैप १,२७७५ q; १२५६ a अपि द्र.  ९. अपः P,P²,J.  १०. गोरजः P,P²; गोऽजः > गोअजः J.

वर्तते । 'अश्वाभिधानीम् आ दत्ते' (तै ५,१,२,१) इतिवत् । रज्ज्वादिना बद्ध्वा निनीषति अपजिहीर्षति तं तस्करम् अपजहीति । स्तेनतस्करयोः पर्यायत्वेपि अपहार्यद्रव्यगौरवेण पृथगपहननम् उक्तम् इति वेदितव्यम् ।

यद॒द्या रा॑त्रि [1]सुभगे वि॒भज॒न्त्ययो॑[1] वसु॑ ।
यदे॒तद॒स्मान्[2] भो॑जय॒[3] यथे॒द॒न्याना॑नुपाय॑सि[4] ॥ ६ ॥

यत् । अ॒द्य[5] । रा॒त्रि॒ । सु॒ऽभ॒गे॒ । वि॒ऽभज॑न्ति[6] । अय॑: । वसु॑ ।
यत् । ए॒तत् । अ॒स्मान् । भो॒ज॒य॒ । यथा॑ । [7]इ॒त् । अ॒न्यान् । उ॒प॒ऽअय॑सि[7] ॥ ६ ॥

सुभगे सौभाग्यवति भगस्य वा पत्नि हे रात्रि अद्य अस्मिन् काले यद् अयः अयोमयं वस्तु वसु कनकादिकं च विभजन्ति विश्लेषयन्ति पृथक्कुर्वन्ति अपहरन्ति । शत्रव इत्यर्थः । तद् एतत् वसु । यच्छब्दो वाक्यालंकारे । अस्मान् धनस्वामिनः भोजय तद्धनस्य भोक्तृत्वं संपादय । भुजेर्हेतुमण्णिच् । तद् धनम् अस्मभ्यम् आहरेति यावत् । यथा येन प्रकारेण । इच्छब्दः अवधारणे । अन्यान् पदार्थान् वासोगोजादीन् शत्रुभिरपहृतान् उपायसि । अयतिरत्र अन्तर्णीतण्यर्थः । उपगमयसि । इ गतौ । भौवादिकः । अयतेर्वा व्यत्ययेन परस्मैपदम् । लेटि वा अडागमः ।

उ॒षसे॑ नः॒ परि॑ देहि[8] [9]सर्वा॑न् रा॒त्र्य॑ना॒गसः॑[9] ।
उ॒षा नो॒ अह्ने॑[10] आ [11]भ॒जा॒द॒ह॒स्तुभ्यं॑ विभावरि ॥ ७ ॥

उ॒षसे॑ । नः॒ । परि॑ । दे॒हि॒ । सर्वा॑न् । रा॒त्रि॒[12] । अ॒ना॒गस॑: ।
उ॒षाः । नः॒ । अह्ने॑ । आ । भ॒जा॒त् । अह॑: । तुभ्य॑म् । वि॒भा॒व॒रि॒ ॥ ७ ॥

हे रात्रि अनागसः अनपराधान् त्वद्विषये अनादरम् अनाचरतः स्तुतिकर्तॄन् सर्वान् नः पशुपुत्रमित्रादिसकलान् अस्मान् उषसे प्रभातकालाय परि देहि रक्षणार्थं प्रयच्छ । उषःकालपर्यन्तं पालयेति यावत् । उषाः च नः अस्मान् अह्ने प्रातरादिसायाह्नकालपर्यन्ताय दिवसाय प्रकाशवते आ भजत्[13] आभजतु । परिपालयत्विति

---

१. सुभगे वि भंजंत्ययो A,Bʰ,C,D,K,Kᵐ,R,Sᵐ,V,Dc,Cs. २. तदे॒तद॒स्मान् RW.; यथेतदस्मान् पै १४,४,१६. ३. इताजय? पै. ४. यथे॒दंनानु॑ पा॒यसि॑ A,Bʰ,C,K,Kᵐ,Sᵐ,V,Cs; यथे॒दं नानु॑पा॒यति॑ D; यथे॒द॒न्यानु॑पा॒यसि॑ R; यथे॒दं॑न्यनु॒पायसि॑ > यथे॒दं नानु॑पा॒यसि॑, Dc; यथे॒दं नापा॑यति RW.; यथेद॑न्यानुपायति पै. ५. अ॒द्य । आ P,P², J. ६. वि । भ॒जन्ति॑ P,P²,J. ७. इ॒दम् । न । अनु॒ऽपा॒यसि॑ P,P²,J. ८. धेहि D. ९. तु॰ RW.;P; वैतु॰ शंपा॰ सर्वा॑न् रा॒त्र्य॑°. १०. अह्व RW. ११. भंजा Bʰ; भंज S,K,V, पै १४,४,१७. १२. रात्रि॑ P²,J. १३. वैतु॰ संपा.

यावत् । अहः अपि उक्तलक्षणम् हे विभावरि विशेषेण भासमाने रात्रि तुभ्यं परि ददातु । एवम्[1] अनवरतं परस्परानुपदित्वेन आवर्तमानौ अहोरात्रौ अस्मान् शत्रुबाधापरिहारेण पशुधनादिसमेतान् कुरुताम्[2] इति तात्पर्यार्थः ।

इति षष्ठेऽनुवाके पञ्चमं सूक्तम् ।

'अयुतोहम्' इति यजुर्मन्त्रात्मकं सूक्तम् । अस्य विनियोगो लिङ्गाद् अवगन्तव्यः ।

अयुतोहमयुतो म आत्मायुतं मे चक्षुरयुतं मे श्रोत्रमयुतो मे [3]प्राणोयुतो मेपानोयुतो[3] मे व्यानोयुतोहं सर्वः ॥ १ ॥

अयुतः । अहम् । अयुतः । मे । आत्मा । अयुतम् । मे । चक्षुः । अयुतम् । मे । श्रोत्रम् । अयुतः । मे । प्राणः । अयुतः । मे । अपानः । अयुतः । मे । विऽआनः । अयुतः । अहम् । सर्वः ॥ १ ॥

देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां[4] पूष्णो हस्ताभ्यां प्रसूत आ रभे ॥२॥

देवस्य । त्वा । सवितुः । प्रऽसवे । अश्विनोः । बाहुऽभ्याम् । पूष्णः[5] । हस्ताभ्याम् । प्रऽसूतः । आ । रभे ॥ २ ॥

अहं साङ्गशरीराभिमानी कर्मानुनिष्ठासुरहम् अयुतः संपूर्णः । मे मम आत्मा जीवः अयुतः संपूर्णः । अथवा आत्मशब्देन[6] शरीरम् उच्यते

'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' ( तु. अको ३,३,१०९ )

इति अभिधातृभिः शरीरवाचकत्वेन प्रयुक्तत्वात् । तथा चक्षुः सर्वपदार्थविषयज्ञानसाधनं चक्षुरिन्द्रियं श्रोत्रम् वैदिकमन्त्रश्रवणसाधनं श्रवणेन्द्रियम् । प्राणः हृदयाद् आरभ्य नासिकारन्ध्रान्निर्गच्छन् वायुः प्राण इत्युच्यते । अपानः पायुद्वारान्निर्गच्छन् वायुः । अपानिति अवाङ्मुखं चेष्टत इति व्युत्पत्तेः । व्यानः प्राणापानसंधिरूपो वायुः । केचिच्छरीरवायोः प्राणादिपञ्चवृत्तित्वं समामनन्ति । अन्ये तु वृत्तित्रयवत्त्वम् । अयुतोहं सर्वः इति उक्तानुक्तावयवेन्द्रियसाकल्याय उक्तम् [१] । सवितुः सर्वस्य प्रसवितुः देवस्य प्रसवे अनुज्ञायाम् अश्विनोः देवयोः अध्वर्य्वोः[7] बाहुभ्यां पूष्णो देवस्य हस्ताभ्याम् । अंसप्रभृतिप्रकोष्ठपर्यन्तं बाहू । तदाद्यङ्गुल्यग्रपर्यन्तौ हस्तौ इति विभागः । प्रसूतः प्रेरितः अनुज्ञातो वा त्वा त्वाम् । क्रियमाणं कर्म संबोध्यते । आ रभे उपक्रमे प्रयोक्ता अहम् । सर्वेन्द्रियसंपूर्णः सविशा-

---

१. एनम् S'.   २. वा नास्ति S'.   ३. °युतो मेपानोयुतो A.   ४. प्रसवेऽश्विनो॑" RW.   ५. पूष्णः P.   ६. आत्मने S'.   ७. अध्वर्यो: S'.

अनुज्ञातः अश्विनोर्बाहुभ्यां[1] पूष्णश्च हस्ताभ्यां कर्मसु व्याप्रिय इत्यर्थः। रभ राभस्ये भौवादिकः आत्मनेपदी। राभस्यम् उपक्रमः [२]।

इति षष्ठेऽनुवाके षष्ठं सूक्तम्।

'कामस्तदग्रे' इति सूक्तेन प्रतिगृह्यमाणं द्रव्यम् अभिमन्त्र्य प्रतिग्रहीता स्वीकुर्यात्। सूत्रितं हि संहिताविधौ — "'क इदं कस्मा अदात्' (अ ३,२९,७,), 'कामस्तदग्रे' (अ १९,५२), 'यदन्नं' (अ ६,७१), 'पुनर्मैत्विन्द्रियम्' (अ ७,६९) इति प्रतिगृह्णाति" (कौसू ४५,१७) इति।

सवयज्ञप्रतिग्रहेऽपि इदं सूक्तं विनियुक्तम्। सूत्रितं हि कौशिकेन — "अमूं ते ददामीति नामग्राहम् उपस्पृशेत्। सदक्षिणं 'कामस्तदग्रे' इत्युक्तम्" (कौसू ६८,२८;२९) इति।

तथा दर्शस्य पूर्णमासस्य वा व्यतिक्रमे जाते आज्यहोमे [2]शान्तसमिदाधाने वा विनियुक्तम्। सूत्रितं हि — "एतेनैवामावास्यो व्याख्यातः। ऐन्द्राग्नोऽत्र द्वितीयो भवति। तयोर्व्यतिक्रमे 'त्वमग्ने व्रतपा असि' (अ १९,५९), 'कामस्तदग्रे' इति शान्ताः" (कौसू ६,३५-३७) इति।

सौवर्णभूमिप्रतिकृतिदाने अनेन कामसूक्तेन आज्यं जुहुयात्। 'अथ रोहिण्याम्' इति प्रक्रम्य उक्तं परिशिष्टे — 'अन्वारभ्याथ[3] जुहुयात्। कामसूक्तं कालसूक्तं पुरुषसूक्तम् ××× इति[4]। अथ सुवर्णमयीं भूमिम्' (अप १०,१,१;६;८) इत्यादि।

कामस्तदग्रे समवर्तत[5] मनसो रेतः प्रथमं यदासीत्।
स काम[6] कामेन बृहता सयोनी[7] रायस्पोषं यजमानाय धेहि ॥ १ ॥

कामः। तत्। अग्रे। सम्। अवर्तत। मनसः। रेतः। प्रथमम्। यत्। आसीत्। सः। काम। कामेन। बृहता। सऽयोनिः। रायः। पोषम्। यजमानाय। धेहि ॥ १ ॥

एतत् सूक्तं कामप्रतिपादकत्वात् कामसूक्तम् इति अभिधीयते। प्रलयकाले सर्वेषु जगत्सु वासनाशेषेण मायायां विलीनेषु पुनरीश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं तदेव किंनिबन्धनम् इति तद् आह — कामस्तदग्रे इति। अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत सम्यग् अजायत। सिसृक्षा जातेत्यर्थः। अत्र मनोव्यतिरेकेण कामनाया

---

१. बाहुभ्यां नास्ति S′. २. शान्तिस° S′. ३. अथ नास्ति S′. ४. इति नास्ति BN. ५. वर्तताधि ऋ १०,१२९,४ तैब्रा २,४,१,१० तैआ १,२३,१. ६. काम RW. ७. सयोनि A,Bh,Km; सयौनी > सयोनी Dc.

उत्पत्त्यसंभवात्[1] मनस्तत्त्वमपि प्रथमं मायातो जातम् इत्यर्थः। श्रूयते हि— 'तद् असदेव सन्मनोऽकुरुत स्याम् इति' (तैब्रा २,२,९,१) इति। ईदृशस्य मनसः उत्पत्तेरनन्तरं कामः समवर्ततेत्यर्थः। ईश्वरस्य सिसृक्षा किंहेतुकेत्यत आह— मनसः इति। मनसः अन्तःकरणस्य[2] संबन्धि वासनाशेषेण मायायां विलीने अन्तःकरणे समवेतम्। सामान्यापेक्षम् एकवचनम्। सर्वप्राण्यन्तःकरणेषु समवेतम् इत्यर्थः। एतेन आत्मनो गुणाधारत्वं प्रत्याख्यातम्। तादृशमनःसंबन्धि रेतः भाविनः प्रपञ्चस्य बीजभूतं प्रथमम् अतीते कल्पे प्राणिभिः कृतं पुण्यापुण्यात्मकं कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवद् भूष्णु वर्धिष्णु समजायत। परिपक्वं सत् फलोन्मुखम् आसीद् इत्यर्थः। तत् ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षाजायतेत्यर्थः। तस्यां च जातायां द्रष्टव्यं पर्यालोच्य ततः सर्वं जगत् सृजति। तथा च आम्नायते—'सोकामयत बहु स्यां प्रजायेयेति। स तपोतप्यत। स तपस्तप्त्वा इदं सर्वम् असृजत यद् इदं किं च' (तैआ ८,६,१) इति। हे काम सः सर्वजगत्सर्जनार्थं परमेश्वरेण उत्पादितस्त्वं[3] बृहता महता देशकालवस्तुपरिच्छेदरहितेन कामेन कामयित्रा परमेश्वरेण। कामयतेः पचाद्यच्। सयोनिः समानकारणः। परमेश्वरव्यतिरिक्तकारणान्तररहित इत्यर्थः। यजमानाय धनप्रदात्रे हविःप्रदात्रे वा पुरुषाय [4]रायो धनस्य पोषम् पुष्टिं समृद्धिं धेहि स्थापय प्रयच्छ। अत्र कामो[4] जगद्विषयकामरूपत्वेन स्वफलसिद्ध्यर्थं स्तूयते।

त्वं का॒म॒ सह॑सासि॒ प्रति॑ष्ठितो वि॒भुर्वि॒भावा॑ [5]सख॒ आ स॑खीय॒ते[5]।
त्वमु॒ग्रः पृत॑नासु सास॒हिः सह॒ ओजो॒ यज॑मानाय धेहि ॥ २ ॥

त्वम्। का॒म॒। सह॑सा। अ॒सि॒। प्रति॑ऽस्थितः। वि॒ऽभुः। [6]वि॒भाऽवा॑। स॒खे॒[6]। आ। स॒खी॒य॒ते[7]। त्वम्। उ॒ग्रः। पृत॑नासु। स॒स॒हिः। सहः॑। ओजः॑। यज॑मानाय। धे॒हि॒ ॥ २ ॥

हे काम त्वं सहसा परधर्षणसामर्थ्येन प्रतिष्ठितोसि। विभुः सर्वविषयत्वाद् व्याप्तः विभावा विशेषेण दीप्यमानः। अल्पविषयत्वाभावात्। भातेः क्वनिप्। हे सखे सखिवद्धितकारिन् काम आ सखीयते अस्मान् अभिलक्ष्य सखिवद् आचरति[8]। भवच्छब्दाध्याहारेण प्रथमपुरुषः। सखिशब्दात् 'कर्तुः क्यङ् सलोपश्च' (पा ३,१,११) इति क्यङ्। 'अकृत्सार्वधातुकयोः०' (पा ७,४,३५) इति दीर्घः। ङित्त्वाद् आत्मनेपदम्। किं च हे काम त्वम् उग्रः उद्गूर्णः पृतनासु शत्रुसंग्रामेषु

---

१. उत्पत्तिसंभवात् S′, २, अन्तकरणस्य S′. ३. उत्पादित्वं S′. ४. यो··· कामो नास्ति S′. ५. पाठः? सखा॒ आ सं॑खीयते RW.; सष॒ आ सं॑षीयते > सख॒ आ सं॑खीयते Dc; °सं॑खीयते K^m,S^m,V; सु॒षखा॑ सखीयु॒ते ऋ १०,९१,१ पै १,३०,२. ६. वि॒ऽभौ। आ॒ऽस॒खे॒ P,P², J ७. स॒खी॒य॒ते P,P²,J. ८. क्रियापदे स्वरः?

सासहिः **सोढा । सहेर्यङन्तात् किप्रत्ययः ।** सहः **शत्रुधर्षणसमर्थम्** ओजः **बलं** यजमानाय **यष्ट्रे जनाय** धेहि **विधेहि प्रयच्छ ।**

**दूराच्चकमानाय प्रतिपाणायाक्षये[1] ।**
**आस्मा अशृण्वन्नाशाः कामेनाजनयन्त्स्वः[2] ॥ ३ ॥**

दूरात् । चकमानाय । प्रतिऽपानाय[3] । अक्षये[4] ।
आ । अस्मै । अशृण्वन् । आशाः । कामेन । अजनयन् । स्वः ॥ ३ ॥

दूरात् **दूरविषयम् अत्यन्तदुर्लभं फलं** चकमानाय **कामयमानाय । कमेर्लिटः कानच् ।** 'आयादय आर्धधातुके वा' (पा ३,१,३१) **इति णिङभावः ।** अस्मै **जनाय** प्रतिपाणाय **सर्वतोरक्षणाय अभिमतफलप्रापणाय** अक्षये **क्षयराहित्ये निमित्ते अनिष्टनिवृत्तये च** आशाः **दिशः सर्वाः प्राच्यादयः** आशृण्वन् **आश्रवणं फलं प्रदातुम् अङ्गीकरणं कृतवत्यः ।** 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (पा १,४,४०) **इति अस्मा इत्यत्र संप्रदानत्वाच्चतुर्थी । न केवलं प्रतिश्रवणं किं तु** कामेन **अभिमतफलविषयेण** स्वः **। सुखनामैतत् । सुखम्** अजनयन् **उदपादयन् ।**

**कामेन मा काम आगन्[5] हृदयाद्धृदयं परि[6] ।**
**यदमीषामदो[7] मनस्तदैतूप[8] मामिह[9] ॥ ४ ॥**

कामेन । मा । कामः । आ । अगन् । हृदयात् । हृदयम् । परि ।
यत् । अमीषाम् । अदः । मनः । तत् । आ । एतु । [10]उप । माम्[10] । इह ॥४॥

कामेन **फलविषयया इच्छया** कामः **काम्यमानं फलं** मा **माम्** आ अगन् **आगच्छतु । गमेर्लुङि च्लेर्लुकि मकारस्य नकारः । कामनाया मनोमूलत्वात् तन्मनः संपादयति । पूर्वं जगत्सृष्ट्यर्थं ब्रह्मणा उत्पादिता जगत्सृष्टिविषये कामयितारो नव ब्रह्माणः** अमीषाम् **इत्यदःशब्देन विवक्ष्यन्ते । तेषां**

---

१. प्रतिपाणायाक्षये > प्रविपाणायाक्षये A; प्रविपाणायाक्षये Bh,R; प्रतिपाणायाक्षये C; परिपाणायाक्षये D; प्रविपाणायाक्षये; प्रविपाणायाक्षये Dc; प्ररिपाणायाक्षये Cs; प्रतिपाणायाक्रये RW.; प्रविपाणायाक्षये पै १,३०,३; प्रवेपनाय मृत्यवे तैआ ३,१५,१. २. °जनयत् सहः पै.; जनयन् पुनः तैआ ३,१५,२. ३. प्रविऽ° P². ४. आऽक्षये P; आऽक्षये P'; आऽक्षये J. ५. आगात् तैआ. ६. मृत्योः तैआ. ७. °षां कामदो पै १,३०,४. ८. तदैतूप A,Bh,C,K,Km,Sm,V,Dc,Cs; °तदैतु उप D; प्रियं तदै° तैआ. ९. मामभि तैआ. १०. उपऽमाम् P,P²,J.

विप्रकृष्टानां ब्रह्मणां यद् अदो मनः अस्तित्वभावनानिमित्तं तत् हृदयात् । प्रत्येक-विवक्षया एकवचनम् । हृदयेभ्यः हृदयम् मदीयं हृदयप्रदेशं परि अभिलक्ष्य। लक्षणादिष्वर्थेषु परिः कर्मप्रवचनीयः। तत् तदीयं सर्वविषयं मनः इह अस्मिन् फलकामे मां कामयितारम् उपैतु उपगच्छतु ।

यत्काम कामयमाना इदं कृण्मसि[1] ते हविः ।
तन्नः सर्वं समृध्यतामथैतस्य हविषो वीहि स्वाहा ॥ ५ ॥

[2]यत् । काम[2] । कामयमानाः । इदम् । कृण्मसि[1] । ते । हविः । तत् । नः । सर्वम् । सम् । ऋध्यताम् । अथ । एतस्य । हविषः । वीहि । स्वाहा ॥ ५ ॥

हे काम वयं यत् फलं कामयमानाः सन्तः ते त्वदर्थम् इदम् इदानीं दीयमानं हविः चरुपुरोडाशादिकं कृण्मसि कुर्मः प्रयच्छामः। 'लोपश्चास्यान्यतरस्यां म्वोः' (पा ६,४,१०७) इति उप्रत्ययस्य लोपः। अथ अनन्तरम् एतस्य प्रत्तस्य हविषः। 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी। चतुर्थ्यर्थे षष्ठी। हविषो भागं वा वीहि भक्षय स्वाहा इदं हविः सुहुतम् अस्तु। वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु[3] । आदादिकः। तत् काम्यमानं नः अस्मदीयं सर्वं फलं समृध्यताम् समृद्धं संपूर्णं भवतु ।

इति षष्ठेऽनुवाके सप्तमं सूक्तम् ।

'कालो अश्वो वहति' इति सूक्तद्वयस्य सौवर्णभूमिदाने आज्यहोमे विनियोगः। उक्तं हि परिशिष्टे—'अन्वारभ्याथ जुहुयात् । कामसूक्तं कालसूक्तं पुरुषसूक्तम् ××× । अथ सुवर्णमयीं भूमिम्' (अप १०,१,६;८) इति। कालप्रतिपादकत्वात् कालसूक्तम् इत्युच्यते।

कालो अश्वो वहति[4] सप्तरश्मिः सहस्राक्षो अजरो[5] भूरिरेताः ।
तमा रोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वा ॥ १ ॥

कालः । अश्वः । वहति । सप्तऽरश्मिः । सहस्रऽअक्षः । अजरः । भूरिऽरेताः । तम् । आ । रोहन्ति । कवयः । विपःऽचितः । तस्य । चक्रा । भुवनानि । विश्वा ॥१॥

अनेन[6] सूक्तद्वयेन सर्वजगत्कारणभूतः कालरूपः परमात्मा स्तूयते। तत्र प्रथमया कालोऽश्वात्मना रूप्यते । सप्तरश्मिः सप्तसंख्याका रश्मयो रज्जवो

---

१. कृण्मसि A,B[b],C,D,R,S[m],Cs,WM.; कृण्मसि K[m],V,Dc,WM.; कृण्मसि P,P[2],J,WM. २. यत्ऽकामः P,P[2],J,WM. ३. °कान्त्यशन° S'. ४. वहतु पै १२,२,१. ५. अक्षरो पै. ६. अस्मिन् अनेन S'.

मुखग्रीवापादावबद्धा[1] यस्य सः सहस्राक्षः सहस्रलोचनः अजरः जरारहितः नित्ययुवा भूरिरेताः। रेतः शुक्ररूपः[2] सप्तमो धातुः। प्रभूतवीर्यः रेतःसेचनसमर्थः अपत्योत्पादनशक्तः कालः कलयिता अश्वो वहति स्वारोहकान्[3] अभिमतं प्रदेशं प्रापयति । तम् अश्वं विपश्चितः अश्वारोहणावरोहणादिषु कुशला अश्वशास्त्रनिष्णाताः कवयो धीमन्तः आ रोहन्ति। तस्य अश्वस्य चक्रा चक्राणि । 'चङ्क्रमणाच्चक्रम्' ( नि ४,२७ ) इति यास्कः । गन्तव्यानि स्थानानि विश्वा विश्वानि भुवनानि। इति अश्वपक्षेऽर्थः[4] । विवक्षितस्तु—अश्वः अश्नुते व्याप्नोति भूतभविष्यद्वर्तमानकालवर्तीनि वस्तूनीति अश्वः। कालः कलयिता सर्वस्य जगतः अनवच्छिन्नकालरूपः परमेश्वरः। सप्तरश्मिः । रश्मिशब्देन ऋतव उच्यन्ते । सप्तर्तुः एकैक ऋतुर्मासद्वयात्मकः सप्तमस्तु त्रयोदशो मासः । तथा च दाशतय्याम् आम्नायते— 'साकंजानां सप्तथम् आहुरेकजं षळिद्यमा ऋषयो देवजा इति' ( ऋ १,१६४,१५ ) इति। अत्रापि समाम्नातं प्राक् (अ ९,१४,१६ ) । सहस्राक्षः । अत्र अक्षिशब्देन दिनानि रात्रयश्च उच्यन्ते । सहस्रसंख्याकाहोरात्रयुक्तः । अजरः जरारहितः सर्वदा एकरूपः । भूरिरेताः प्रभूतजगत्सर्जनसमर्थशक्तिसंपन्नः । एवंरूपः कालो वहति प्राणिजातं स्वस्वकर्मसु प्रापयति । तं कालं कवयः क्रान्तदर्शिनो विपश्चितः विद्वांसः आ रोहन्ति स्वाधीनं कुर्वन्ति । स्वाधीनकाला भवन्तीत्यर्थः । तस्य कालात्मकस्य रथस्य चक्रा चक्राणि विश्वा विश्वानि भुवनानि भूतजातानि। लोकान् अभिगच्छन्तीति शेषः । अथवा अश्वशब्देन आदित्य उच्यते। तथा च यास्कः— 'एको अश्वो वहति सप्तनामा आदित्यः । [5]सप्तास्मै रश्मयो[5] रसान् अभिसंनामयन्ति सप्तैनम् ऋषयः स्तुवन्तीति वा' ( नि ४,२७ ) इति । कालात्मकोऽश्वः सूर्यः सप्त रश्मयः प्रधानभूता यस्य । ते चैव सप्त सूर्या इत्युच्यन्ते । 'देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष नः' ( ऋ ९,११४,३ ) इति निगमः । तेषां च नामानि तैत्तिरीया अधीयते—'आरोगो भ्राजः पटरः पतङ्गः[6] स्वर्णरो ज्योतिषीमान् विभासः' ( तैआ १,७,१ ) इति । असौ तु प्रधानभूतः कश्यपाख्य[7] आदित्यः । 'कश्यपोऽष्टमः स महामेरुं न जहाति' ( तैआ १,७,१ ) इति श्रुतेः । यद्वा रश्मिशब्देन च्छन्दांस्यभिधीयन्ते । सप्त गायत्र्यादीनि च्छन्दांसि यस्य। तथा च निगमः— 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः[8]' ( तैब्रा ३,१२,९,१ ) इति। यद्वा रश्मिवन्तोऽश्वा रश्मिशब्देन उच्यन्ते। मत्वर्थीयस्य लोपः । सप्ताश्वः । 'सप्त युञ्जन्ति रथम् एकचक्रम्' ( अ ९,१,२४ ) इति निगमः । सहस्राक्षः अक्षिवद् अक्षीणि किरणाः सहस्रकिरणोपेतः अजरः अविनश्वरो नित्यः भूरिरेताः । उदकवाची रेतःशब्दः । 'यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति' ( तै २,४,१०,२ ) इति श्रुतिः । एवंरूप आदित्यो

---

१. °पादाबद्धा S'. २. शुक्ल° S'. ३. श्वारोहकान् S'. ४. अश्वक्षेर्थः S'.
५. सप्तादित्यस्य रश्मयो S'. ६. पतंगाः S'. ७. कश्यपस्या S'. ८. शून्यः S'.

वहति कालचक्रं धारयति । तं कालात्मकं सूर्यं विद्वांसः अधिगतपरमार्थाः आ रोहन्ति सूर्यमण्डलं भित्त्वा उपगच्छन्ति ।

'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥' ( महाभारत ५,३३,५३ )

इति स्मृतेः । यद्वा स्वात्मभावेन अधितिष्ठन्ति । अत एव आदित्यं पुरुषं प्रकृत्य श्रूयते—"तद् योऽहं सोऽसौ योऽसौ सोऽहम् । तद् उक्तम् ऋषिणा— 'सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋ १,११५,१ ) इति" ( ऐआ २,२,४ ) इति । तस्य सूर्यस्य चक्रा चक्राणि चङ्क्रमणानि व्याप्तिस्थानानि सर्वाणि जगन्तीति ।

**स॒प्त च॒क्रान् [1] व॑हति [1] का॒ल ए॒ष स॒प्तास्य॒ नाभी॑र॒मृतं॒ न्वक्षः॑ [2] ।**
**स इ॒मा विश्वा॒ भुव॑नान्यञ्ज॒त् [3] का॒लः स ई॑यते प्रथ॒मो नु दे॒वः ॥ २ ॥**

स॒प्त । च॒क्रान् । व॒हति॒ । का॒लः । ए॒षः । स॒प्त । अ॒स्य॒ । नाभीः॑ । अ॒मृत॑म् । नु॒ । अक्षः॑ ।
सः॑ । इ॒मा । विश्वा॑ । भुव॑नानि । अञ्ज॒त् [4] । का॒लः । सः । ई॑य॒ते । प्र॒थ॒मः । नु । दे॒वः ॥२॥

अनया संवत्सररूपकालचक्रं वर्ण्यते । तस्य संवत्सरकालस्य चक्राणि एकं त्रीणि पञ्च षट् सप्त द्वादशेति तत्रतत्र आम्नायते । 'सप्त युञ्जन्ति रथम् एक-चक्रम्' ( अ ९,१४,२ ), 'त्रिनाभि चक्रम्' ( अ ९,१४,२ ), 'सप्तचक्रे षडरे' ( अ ९,१४,१२ ), 'द्वादशारम्' ( अ ९,१४,१३ ) इत्यादिषु । तथा च शौनकोऽप्याह—

[5] 'त्रिधा द्वादशधा षोढा पञ्चधा सप्तधा तथा । [5]
संवत्सरं चक्रवच्च पराभिः कीर्तयत्यृषिः ॥' ( बृदे ४,३५ ) इति ।

एष सर्वजगत्कारणत्वेन अनुभूयमानः कालः परमात्मा सप्त चक्रा [6] चक्राणि सप्त ऋतून् अनु [6] अनुक्रमेण वहति धारयति । अस्य संवत्सरस्य सप्त नाभीः नाभयः । नह्यते नाभिः । अक्षबन्धकानि मध्यच्छिद्राणि सप्त ऋतुसंधिकालाः । अस्य अक्षः तनु [6] संततं सूक्ष्मम् अमृतम् अमरणधर्मकम् अविनश्वरं तत्त्वम् । सप्तचक्रच्छिद्रेषु प्रोतः अनुस्यूतोऽक्षः [7] सत्यम् अबाध्यं तत्त्वम् । सः पूर्वोक्तसंवत्सररूपः प्रथमः सर्वस्य आदिभूतो देवः द्योतमानः नित्यज्ञानरूपः कालः परमात्मा इमा इमानि नामरूपात्मना व्याकृतानि विश्वा विश्वानि भुवनानि भवनवन्ति चराचरात्मकानि जगन्ति अञ्जत् अञ्जन् । अनक्तेः शतरि [6] 'अनित्यम् आगमशासनम्' इति नुमभावः ।

---

१. चक्रानुवहति S; चक्रा वं° RW., °न् वहतु पै १२,२,२. २. तन्वक्षः S.
३. °न्यञ्जत् Km,Sm,V,Dc; °न्युन्यत्, °न्ययत् WM.; °न्युर्वाङ् RW.; वैप १,६८ f अपि द्र.; न्यञ्जन् पै १२,२,२. ४. अंजत् P,J. ५. पञ्चधा च त्रिधा चैव षोढा द्वादशधैव च । मैकडानल. ६. वैतु. मंपा. ७. °स्यूतो इति ऽक्षः इत्येतयोर्मध्ये पञ्चदशानां वर्णानां स्थानं रिक्तम् S'.

व्यक्तीकुर्वन् स्वेन कालेन अवच्छिन्नानि कुर्वन् उत्पादयन् सः स्यति संहरतीति सः। षो अन्तकर्मणि। कर्तरि कप्रत्ययः। आतो लोपः। संहरंश्च ईयते गच्छति व्याप्नोति सर्वम् आवृत्य वर्तते। ईङ् गतौ। दैवादिकः। नुशब्दः[1] प्रसिद्धौ। यद्वा अध्यात्मपरत्वेन योज्यः। कालः कलयिता सर्वेन्द्रियव्यापारकर्ता शरीराभिमानी देवः। बन्धकाः विषया रूपादयः। तनु सूक्ष्मं दुर्दर्शम्। अमृतम् चैतन्यम्। अक्षः सर्वेन्द्रियेषु तद्विषयेषु च अनुगतः। एवं सर्वाणि प्राणिजातानि अञ्जत्[2] प्रेरयन् ईयते। स उपसंहरंश्च स कालः ईयते तत्त्वज्ञैर्ज्ञायते। इण् गतौ। कर्मणि यक् प्रत्ययः।

पूर्णः कुम्भोऽधि काल आहितस्तं वै पश्यामो[3] बहुधा नु सन्तम्[4]।
स इमा विश्वा भुवनानि प्रत्यङ् कालं तमाहुः परमे व्योमन् ॥ ३ ॥

पूर्णः। कुम्भः। अधि। काले। आऽहितः। तम्। वै। पश्यामः। बहुऽधा। नु। सन्तम्[4]।
सः। इमा। विश्वा। भुवनानि। प्रत्यङ्। कालम्। तम्। आहुः। परमे। विऽओमन् ॥ ३ ॥

काले सर्वजगत्कारणभूते नित्ये अनवच्छिन्ने परमात्मनि स्वस्वरूपे। अधिशब्दः सप्तम्यर्थानुवादी। पूर्णः सर्वत्र व्याप्तः कुम्भः कुम्भवत् कुम्भः अहोरात्रमासर्तुसंवत्सरादिरूपः अवच्छिन्नो जन्यः कालः आहितः निहितो वर्तते। सर्वस्य कार्यस्य स्वकारणेऽवस्थानात्। अत्र विद्वदनुभवश्रुतिं प्रमाणयति — तं जन्यं कालं सन्तः[5] सत्पुरुषा बहुधा नानाप्रकारम् अहोरात्रादिभेदेन पश्यामो नु अनुभवामः खलु। अथवा तं जन्यकालाधारं परमात्मानं बहुधा बहुभिः श्रवणमनननिदिध्यासनैः पश्यामः साक्षात्कुर्मः। सन्तः सद्रूपब्रह्मोपासका वयम्। 'अस्ति ब्रह्मेति चेद् वेद सन्तम् एनं ततो विदुः' (तैआ ८,६,१) इति हि श्रुतिः। वैनु-शब्दौ प्रसिद्ध्यर्थौ। स कालः इमा इमानि परिदृश्यमानानि विश्वा विश्वानि व्याप्तानि भुवनानि भूतजातानि प्रत्यङ् प्रत्यञ्चनः अभिमुखाञ्चनः आव्याप्नुवन्[6] भवति। तं कालं परमे उत्कृष्टे सांसारिकसुखदुःखादिद्वन्द्वदोषरहिते व्योमन् व्योमनि आकाशवन्निर्लेपे[7] सर्वगते विविधं रक्षके परमानन्दप्रदायके स्वस्वरूपे वर्तमानम् आहुः विद्वांसः। व्योमन्निति। 'सुपां सुलुक्°' (पा ७,१,३९) इति सप्तम्या लुक्। 'न ङिसम्बुद्ध्योः' (पा ८,२,८) इति नलोपप्रतिषेधः।

स एव सं भुवनान्याभरत् स एव सं भुवनानि पर्यैत्।
पिता सन्नभवत् पुत्र एषां[8] तस्माद् वै नान्यत् [9]परमस्ति तेजः[9] ॥ ४ ॥

---

१. उशब्दः S'. २. अंजन् S'. ३. पश्यामो RW. ४. तु. RW. पै १२,२,३; वैतु. P³ सन्तुः; अन्ये मूको. शंपा. च सन्तः. ५. वैतु मंपा. ६. अव्या° S'. ७. व्योम आका° S'. ८. एषां C,D. ९. पर° A,C,D; पर° Bʰ,Sᵐ; पर° Cs; परमस्तु पै १२,२,४.

सः । एव । सम्[1] । भुवनानि । आ । अभरत् । सः । एव । सम् । भुवनानि । परि । ऐत् ।
पिता । सन् । अभवत् । पुत्रः । एषाम् । तस्मात् । वै । न । अन्यत् । परम् । अस्ति[2] । तेजः ॥

स एव कालः भुवनानि भूतजातानि सम् आ अभरत् आहरत् आहरति उत्पादयति । 'हृग्रहोर्भः°' (पावा ८,२,३२) । यद्वा भृञ् भरणे । भौवादिकः । स्वेनोत्पादितानि भुवनानि समन्तात् पुष्णाति । स एव कालः भुवनानि सं पर्यैत् सम्यक् परिगच्छति व्याप्नोति । इण् गतौ । छान्दसे लङि[3] 'आडजादीनाम्' (पा ६,४,७२) इति आडागमः । 'आटश्च' (पा ६,१,९०) इति वृद्धिः । स एव पिता एषां भुवनानां जनकः सन् एषां पुत्रः अभवत् भवति । काल एव पितृत्वेन पुत्रत्वेन[4] च व्यवह्रियते । यः पूर्वजन्मनि पितृत्वेन जातः स एव अस्मिन् जन्मनि पुत्रत्वेन[5] व्यवह्रियते अवच्छेदककालाधीनत्वात् सर्वस्य । अथवा एकस्मिन् जन्मन्येव पितुः पुत्रत्वम् आम्नायते—'अङ्गाद् अङ्गात् संभवसि हृदयाद् अधि जायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम्' (कौउ २,११) इति । तस्मात् सर्वोत्पादकात् सर्वगतात् पुत्रादिरूपेण भविष्यतश्च तस्मात् कालाद् अन्यत् परम् उत्कृष्टं तेजो नास्ति । वैशब्दः प्रसिद्धौ । तेजो नास्तीति निषेधात् स्वस्यापि तेजोरूपत्वम् अर्थसिद्धम् । 'तस्य भासा सर्वम् इदं विभाति' (कउ ५,१५) इति श्रुतेः ।

का॒लो॑ऽमूं[6] दिव॑मजनयत् का॒ल इ॒माः पृ॑थि॒वीरु॒त ।
[7]का॒ले ह॑[7] भू॒तं भव्यं॑ चेषि॒तं [8]ह॒ वि ति॑ष्ठते[8] ॥ ५ ॥

का॒लः । अ॒मूम्[9] । दिव॑म् । अ॒ज॒न॒य॒त् । का॒लः । इ॒माः । पृ॒थि॒वीः । उ॒त ।
का॒ले । ह॒ । भू॒तम् । भव्य॑म् । च॒ । इ॒षि॒तम् । [10]ह॒ । वि[10] । ति॒ष्ठ॒ते॒ ॥ ५ ॥

कालः परमात्मा अमूं विप्रकृष्टां दिवम् द्युलोकम् अजनयत् उत्पादितवान् । उत अपि च कालः इमाः परिदृश्यमानाः सर्वप्राण्याधारभूताः[11] पृथिवीः । व्यत्ययेन बहुवचनं कक्ष्याभेदेन वा । तथा च मन्त्रवर्णः—'यद् इन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्याम् उत स्थः' (ऋ १,१०८,९) इति । तथा हशब्दः एवार्थे । काले एव भूतम् भूतकाले आधारे अवच्छिन्नं भव्यम् भविष्यच्च इषितम् इष्टम् इष्यमाणं वर्तमानकालावच्छिन्नं च जगद् वि तिष्ठते विशेषेण आश्रितं वर्तते । 'समवप्रविभ्यः स्थः' (पा १,३,२२) इत्यात्मनेपदम् ।

---

१. सन् P. २. अस्ति J. ३. लुङि S'. ४. पितृत्वेन S'. ५. सएव पुत्रत्वेन S'. ६. कालोमु A,B^b,C,D,R,V,RW.; कालोमु > कालोमूं Dc; कालोमु Cs. ७. कालेन RW. पै १२,२,५. ८. हुविस्तिष्ठते A,B^b,C,D,K,K^m,R,S^m,Dc,Cs. ९. अमुम् P,P^2,J. १०. हुविः P,P^2,J. ११. °प्राणाधार° S'.

कालो भूतिमसृजत[1] काले तपति[2] सूर्यः ।
काले ह विश्वा भूतानि काले चक्षुर्वि पश्यति ॥ ६ ॥

कालः । भूतिम् । असृजत । काले । तपति । सूर्यः ।
काले । ह । विश्वा । भूतानि । काले । चक्षुः । वि । पश्यति ॥ ६ ॥

कालः **कालरूपः परमात्मा** भूतिम् **भवनवज्जगद्** असृजत[3] । **सृज विसर्गे । तौदादिकः । व्यत्ययेन आत्मनेपदम्**[4] । **दैवादिकाद् वा आत्मनेपदिनो व्यत्ययेन शः ।** काले **प्रेरके सति** सूर्यः **आदित्यः** तपति **जगत् प्रकाशयति ।** काले **एव आश्रये** विश्वा **विश्वानि** भूतानि **वर्तन्ते ।** काले चक्षुः । **उपलक्षणम् एतत् । चक्षुरादीन्द्रियाणि** वि पश्यति । **इदमपि उपलक्षणम् । दर्शनादिकर्माणि कुर्वन्ति । यद्वा चक्षुः ।** [5]**चक्षुःशब्दो लुप्तमत्वर्थीयः**[5] **। चक्षुष्मान् सर्वेन्द्रियाधिष्ठाता वि पश्यति स्वस्वेन्द्रियव्यापारं करोति ।**

काले मनः काले प्राणः काले नाम समाहितम् ।
कालेन सर्वा नन्दन्त्यागतेन प्रजा इमाः ॥ ७ ॥

काले । मनः । काले । प्राणः । काले । नाम । समऽआहितम् ।
कालेन । सर्वाः । नन्दन्ति । आऽगतेन । प्रऽजाः । इमाः ॥ ७ ॥

काले **परमात्मनि** मनः **जगत्सिसृक्षानिमित्तभूतं मनो वर्तते । तस्मिन्नेव** काले प्राणः **सूत्रात्मा सर्वजगदन्तर्यामी वर्तते । अन्तर्यमनोपाधिकत्वेन काले वर्तते इति आधारव्यपदेशः । यद्वा मनः जात्येकवचनम् । सर्वेषां प्राणिनां मनांसि । प्राणः पञ्चवृत्तिकः**[6] **प्राणा अपि परमात्मन्येव वर्तन्ते । तथा** नाम **नामधेयं सर्वेषां वस्तूनां संज्ञा अपि तत्रैव** काले समाहितम् । **स्त्रीपुरुषादिसंज्ञाभिः काल एव उच्यत इत्यर्थः । यद्वा सर्वेषां रूपाणि कृत्वा**[7] **तेषां नामान्यपि स्वयमेव व्यवहरतीत्येतदभिप्रायेण 'काले नाम समाहितम्' इत्युक्तम् ।** 'सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाभिवदन् यदास्ते' (तैआ ३,१२,७) **इति हि श्रुतिः ।** कालेन **वसन्तादिरूपेण** आगतेन सर्वा इमाः प्रजा नन्दन्ति **संतुष्यन्ति स्वस्वकार्यसिद्धेः ।**

काले तपः काले ज्येष्ठं काले ब्रह्म समाहितम् ।
कालो ह सर्वस्येश्वरो यः पितासीत् प्रजापतेः ॥ ८ ॥

---

१. भूमिमसृजत R W.W.; भूतमसृजत पै १२,२,६. २. तपतु पै. ३. °जत् S'. ४. परस्मैपदम् S'. ५. चक्षुर्लुप्त° S'. ६. °वृत्तिकाः S'. ७. कृतत्वा S'.

काले । तपः । काले । ज्येष्ठम् । काले । ब्रह्म । सम्ऽआहितम् ।
कालः । ह । सर्वस्य । ईश्वरः । यः । पिता । आसीत्[१] । प्रजाऽपतेः ॥ ८ ॥

काले परमात्मनि तपः जगत्सर्जनविषयं पर्यालोचनम् । तप पर्यालोचने। अस्माद् असुन् । 'तपसा चीयते ब्रह्म' ( मुंउ १,१,८ ) इत्यादौ तपःशब्दः पर्यालोचनार्थत्वेन व्याख्यातः । तथा काले ज्येष्ठम् सर्वस्य आदिभूतं हिरण्यगर्भाख्यं तत्त्वं वर्तते। तथा काले ब्रह्म साङ्गो वेदस्तत्प्रतिपादकः समाहितम् सम्यगाहितः । यद्वा तपः कृच्छ्रचान्द्रायणादिकम् । तत्फलप्रदातृत्वात् तत्रैव वर्तनम् । एकः कालशब्दो यौगिकः कलयितरि काले ज्येष्ठं ब्रह्म हिरण्याख्यम् । 'ज्येष्ठं ब्रह्म श्रेष्ठं ब्रह्म' इति हि श्रुत्यन्तरम् । हशब्दः अवधारणे । कालः सर्वस्य जगत ईश्वरः स्वामी। यः कालः प्रजापतेः प्रजानां स्रष्टुश्चतुर्मुखस्य ब्रह्मणः पिता जनक आसीत् ।

तेनेषितं तेन[२] जातं तदु तस्मिन् प्रतिष्ठितम् ।
कालो ह ब्रह्म भूत्वा बिभर्ति परमेष्ठिनम् ॥ ९ ॥

तेन । इषितम् । तेन । जातम् । तत् । ऊं इति । तस्मिन् । प्रतिऽस्थितम् ।
कालः । ह । ब्रह्म । भूत्वा । बिभर्ति । परमेऽस्थिनम् ॥ ९ ॥

तेन कालेन इषितम् इष्टं सर्वं स्रष्टव्यं जगत् । कामितम् इत्यर्थः । 'तीषसह'' ( पा ७,२,४८ ) इति इडागमः । तेन एव जातम् उत्पादितं जगत् । तत् तज्जगत् । उशब्दः अवधारणे । तस्मिन् एव काले प्रतिष्ठितम् । कालो ह काल एव ब्रह्म देशकालावच्छिन्नं सच्चित्सुखयितृरसम्[३] अबाध्यं परमार्थतत्त्वं भूत्वा परमेष्ठिनम् परमे स्थाने सत्यलोके तिष्ठन्तं चतुर्मुखब्रह्माणं [४]बिभर्ति ।

कालः प्रजा असृजत कालो अग्रे प्रजापतिम् ।
स्वयंभूः कश्यपः कालात् तपः कालादजायत ॥ १० ॥

कालः । प्रऽजाः । असृजत । कालः । अग्रे । प्रजाऽपतिम् ।
स्वयम्ऽभूः । कश्यपः । कालात् । तपः । कालात् । अजायत ॥ १० ॥

कालः[४] अग्रे सृष्ट्यादौ प्रजापतिम् ब्रह्माणम् असृजत उदपादयत् । कालः प्रजाः च असृजत । स्वयंभूः स्वयम् आत्मना भवतीति स्वयंभूः । कालव्यतिरिक्तकालान्तरनिषेधकः[५] स्वयंशब्दः । कश्यपः आरोगभ्राजादिसप्तसूर्यापेक्षया अष्टमः सूर्यः । 'कश्यपोऽष्टमः स महामेरुं न जहाति' ( तैआ १,७,१ ) इति श्रुत्यन्तरम् उदाहृतम् ( १ ) । कश्यपशब्द-

---

१. आसीत् P,P². २. तेन A,Sᵐ. ३. °यितरसम् S'. ४. इतः प्रभृति उत्तरमन्त्रभाष्यस्थं कालः इति यावत् नास्ति S'. ५. °निषेधायकः S'.

**निर्वचनं यास्केन (?) एवं कृतम्—**'कश्यपः पश्यको भवति यत् सर्वं परिपश्यतीति सौक्ष्म्यात्' ( तैआ १,८,८ ) **इति। तादृशः सर्वस्य द्रष्टा सूर्यः** तपः **संतापकं तेजश्च** कालाद् अजायत।

**इति षष्ठेऽनुवाके अष्टमं सूक्तम्।**

'कालादापः' **इति सूक्तं कालप्रतिपादकत्वात् कालसूक्तम् इत्युच्यते। तस्य पूर्वसूक्तेन सह उक्तो विनियोगः।**

**कालादापः समभवन्[1] कालाद् [2]ब्रह्म तपो[2] दिशः।**
**कालेनोदेति[3] सूर्यः काले नि विशते पुनः॥ १॥**

कालात्। आपः। सम्। अभवन्[4]। कालात्। ब्रह्म। तपः। दिशः।
कालेन। उत्। एति। सूर्यः। काले। नि। विशते। पुनः॥ १॥

कालात् **सर्वजगत्कारणात् परमात्मनः सकाशाद्** आपः **ब्रह्माण्डाधारभूताः** समभवन्। **स्मर्यते हि—**

'अप एव ससर्जादौ तासु [5]वीर्यमवाकिरत्[5]।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।' ( मस्मृ १,८;९ ) **इति।**

व्रततपः[6] **व्रतम्। कर्मनामैतत्। यज्ञादि कर्म। तपः कृच्छ्रचान्द्रायणादिकम्। द्वन्द्वैकवद्भावः। यद्वा व्रततप इति पञ्चमी। जगत्संर्जनकर्मणे तप्यमानात्** कालाद् दिशः **प्राच्याद्याः समभवन्।** कालेन **प्रेरकेण** सूर्य उदेति **उदयं गच्छति।** 'भीषाऽस्माद् वातः पवते भीषोदेति सूर्यः' ( तैआ ८,८,१ ) **इति हि निगमः। पुनः सूर्यः** काले नि विशते **विलीयते। अस्तम् एतीत्यर्थः।** 'नेर्विशः' ( पा १,३,१७ ) **इति आत्मनेपदम्।**

**कालेन वातः पवते कालेन पृथिवी मही।**
**द्यौर्मही काल आहिता॥ २॥**

कालेन। वातः। पवते। कालेन। पृथिवी। मही।
द्यौः। मही। काले। आऽहिता॥ २॥

**[7]कालो ह[7] भूतं भव्यं च पुत्रो[8] [9]अजनयत् पुरा[9]।[10]**
**कालादृचः समभवन्[11] यजुः कालादजायत॥ ३॥**

---

१. °भवत् A,Bʰ,C,D,K,Kᵐ,Sᵐ,V,Dc, पै १२,२,११ [मूको.]. २. व्रततपो S, सा. ३. °नोदयतु पै. ४. अभवत् P,P¹,J,Cp. ५. बीजमवासृजत् इत्युपलभ्यमानः पाठः. ६. वैद्ध. मंपा. ७. काले ह A,Bʰ,K,Kᵐ,V,Dc,RW.; कालेन S, सा. ८. मन्त्रौ RW. ९. अजनयत्पुरः A,Bʰ,C,D,K,Kᵐ,R,Sᵐ,V,Dc, पै १२,२,१३; अजनयत्पुरा Cs. १०. कालेन वातः…पुरा॥ २॥ कालाद्…°क्षितम्॥ ३॥ काले…तिष्ठतः॥ ४॥ इमं…देवः॥ ५॥ इति सा. मन्त्रविभागः. ११. °भवद् D,R,Sᵐ; °भवन् > °भवद् Dc.

का॒लः । ह॒ । भू॒तम् । भव्य॑म् । च॒ । पु॒त्रः । अ॒ज॒न॒य॒त् । पु॒रा[1] ।
का॒लात् । ऋच॑ः । सम् । अ॒भ॒व॒न्[2] । यजु॑ः । का॒लात् । अ॒जा॒य॒त ॥ ३ ॥

**का॒लो[3] य॒ज्ञं सम॑ैरयद्दे॒वेभ्यो[4] भा॒गमक्षि॑तम् ।[5]**
**का॒ले ग॑न्धर्वाप्स॒रस॑ः[6] का॒ले लो॒काः प्रति॑ष्ठिताः[7] ॥ ४ ॥**

का॒लः । य॒ज्ञम् । सम् । ऐ॒र॒य॒त्[8] । दे॒वेभ्य॑ः । भा॒गम् । आक्षि॑तम् ।
का॒ले । ग॒न्ध॒र्व॒ऽअ॒प्स॒रस॑ः । का॒ले । लो॒काः । प्रति॑ऽस्थिताः ॥ ४ ॥

**का॒लेऽयमङ्गि॑रा[9] दे॒वोऽथ॑र्वा[10] चाधि॑ तिष्ठतः ।[5]**
**इ॒मं च॑ लो॒कं प॑र॒मं च॑ लो॒कं पुण्यां॑श्च लो॒कान् विधृ॑तीश्च॒[11] पुण्या॑ः ।[12]**
**सर्वा॑ल्लो॒कान॑भि॒जित्य॒ ब्रह्म॑णा का॒लः स ई॑यते पर॒मो नु दे॒वः ॥ ५ ॥[5,12]**

[12]का॒ले । अ॒यम्[13] । अङ्गि॑राः । दे॒वः[14] । अथ॑र्वा । च॒ । अधि॑ । ति॒ष्ठ॒तः । इ॒मम् । च॒ ।
लो॒कम् । प॒रम॒म् । च॒ । लो॒कम् । पुण्या॑न् । च॒ । लो॒कान् । विऽधृ॑तीः । च॒ । पुण्या॑ः ।
सर्वा॑न् । लो॒कान् । अ॒भि॒ऽजित्य॑ । ब्रह्म॑णा । का॒लः । सः । ई॒य॒ते॒ । प॒र॒मः । नु॒ । दे॒वः ॥ ५ ॥

कालेन **प्रेरयित्रा परमात्मना** वातो **वायुः** पवते । **पवतिर्गतिकर्मा । सर्वदा वाति ।** 'भीषास्माद् वातः पवते' ( तैआ ८,८,१ ) **इति श्रुतिरुदाहृता** ( १ ) । **तेनैव** कालेन मही **महती** पृथिवी **आहिता दृढं स्थापिता वर्तते ।** मही **महती** द्यौः **च** काले **आधारे** आहिता **निहिता स्थापिता** [२] । कालेन[15] **एव पित्रा प्रेरकेण** पुत्रः **प्रजापतिः** भूतम् **भूतकालावच्छिन्नं** भव्यम् **भविष्यत्कालावच्छिन्नम् । चशब्दः अनुक्तसमुच्चयार्थः । वर्तमानं** पुरा **पुरस्तात् पूर्वम्** अजनयत् उत्पादितवान् । कालात् **परमात्मनः** ऋचः **पादबद्धा मन्त्राः** समभवन् । कालाद् यजुः **प्रश्लिष्टपाठरूपो मन्त्रः** अजायत । **उपलक्षणम् एतत् सामवेदादीनाम् । तथा च पुरुषसूक्ते समाम्नातम्—** 'तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद् यजुस्तस्माद् अजायत' ( अ १९,६,१३ ) **इति** [३] । **तथा** कालः **एव** देवेभ्य **इन्द्रादिभ्यः** अक्षि-

---

१. पुरः P,P²,J. २. °वत् P². ३. काले RW. ४. °रयन् दे° A,B^h,C, D,K,K^m,R,S^m,V,Dc,Cs,RW. ५. पूर्वपृष्ठे टि १० द्र. ६. गन्धर्वा अप्सरसः A,R; गन्धर्वाप्सरसः B^h,C. ७. समाहिताः पै १२,२,१४. ८. °यन् P²,J,Cp; °यन् > °यत् P. ९. कालेय° O; कालेऽय° RW. १०. दिवो° A,B^h,C,D,K,K^m,R,S^m, V,Dc,Cs,WM.RW. ११. विधृतींश्च A,C,D,WM.; विधृतींश्च > विधृतीश्च K^m; विधृतिंश्च R,Cs; विधृतीश्च Dc. १२. कालेय°···पुण्याः ॥ ५ ॥ सर्वां°···देवः ॥ ६ ॥ इति RW. मन्त्रविभागः. १३. कालेयम् P,J,WM.; कालेयम् P²,WM.; कालेयम् Cp. १४. दिवः P,P²,J,Cp,WM. १५. वैदु. मंपा.

तम् **क्षयरहितं** भागम् **भागत्वेन परिकल्पितं** यज्ञम् **प्रकृतिविकृत्यात्मकं सोमयागं** समैरयत् **उदपादयत् । इन्द्रादिदेवभागत्वेन यज्ञं जनयामास । अक्षितम् इति । क्षि क्षये ।** 'निष्ठायाम् अण्यदर्थे' ( पा ६,४,६० ) **इति ण्यदर्थपर्युदासेन अत्र दीर्घाभावः । अत एव** 'क्षियो दीर्घात्' ( पा ८,२,४६ ) **इति नत्वाभावः । ण्यदर्थौ भावकर्मणी इति व्याख्यातम् ।** गन्धर्वाः । **गां वाचं धारयन्तीति** 'गवि गन् धृञो वः' (पाउना ५,८४ ) **इति वप्रत्ययः । गोशब्दस्य गन् इति आदेशः । धातोर्गुणः । गन्धर्वा गायकाः** अप्सरसः । **अप्सु उदकेषु अन्तरिक्षे वा सरन्ति गच्छन्तीति अप्सरसः मध्यमलोकस्थानाः** काले **एव आधारे वर्तन्ते**[1] **। किं बहुना** लोकाः **सर्वेपि** काले प्रतिष्ठिताः । **लोकशब्दो जनवाची भुवनवाची च [४]** । अयम् **अथर्ववेदस्य स्रष्टा देवः दीप्यमानः** अङ्गिराः **परमात्माङ्गरसोद्भूतः अङ्गिरा नाम** देवः । अथर्वा । 'अथार्वाग् एनम् एतास्वेवाप्स्वन्विच्छ' ( गोब्रा १,१,४ ) **इति ब्राह्मणे अशरीरया वाचा स्वसृष्टास्वेव अप्सु अर्वाग् अभिमुखम् एनं परमात्मानम् अन्विच्छेति अभिहितः परमात्मा अथर्वशब्दवाच्य इति बहुधा प्रपञ्चितम् । सोयम् अथर्वा अथर्ववेदस्रष्टा देवश्च** काले **स्वजनके** अधि तिष्ठति[2] **। अधिशब्दः सप्तम्यर्थानुवादी ।** इमं च **सर्वकर्मार्जनस्थानं** लोकम् **भूमिं** परमम् **फलभोगस्थानं** स्वर्गलोकं पुण्यान् **पुण्यकर्मभिरर्जितान्** लोकान् पुण्याः **दुःखलेशासंस्पृष्टा** विधृतीः **लोकधारकान्** सर्वान् **उक्तान् अनुक्तांश्च** लोकान् ब्रह्मणा **स्वकारणेन देशकालवस्तुपरिच्छेदरहितेन सत्यज्ञानानन्तादिलक्षणेन परमात्मना** अभिजित्य **अभिव्याप्य** सः **एतत्सूक्तद्वयप्रतिपाद्यः**[3] परमः **सर्वोत्तमः** कालो देवः ईयते **सर्वं स्थावरजङ्गमात्मकं जगद् व्याप्य वर्तते । नुशब्दः विद्वदविद्वदनुभवप्रमाणद्योतनार्थः [५] ।**

**इति एकोनविंशे काण्डे षष्ठेऽनुवाके नवमं सूक्तम् ।**

**इति षष्ठोऽनुवाकः समाप्तः ।**

**सप्तमेऽनुवाके चतुर्दश सूक्तानि । तत्र** 'रात्रिंरात्रिम्'[4] **इति प्रथमसूक्तस्य प्रातरग्न्युपस्थाने लिङ्गतो विनियोगोऽवगन्तव्यः ।**

रात्रिंरात्रिमप्रयातं[5] भरन्तोऽश्वायेव[6] तिष्ठते घासमस्मै[7] ।
रायस्पोषेण[8] समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम[9] ॥ १ ॥

रात्रिम्ऽरात्रिम् । अप्रऽयातम् । भरन्तः । अश्वायऽइव । तिष्ठते । घासम् । अस्मै[10] ।
रायः । पोषेण । सम् । इषा । मदन्तः । मा । ते । अग्ने । प्रतिऽवेशाः । रिषाम[11] ॥ १ ॥

---

१. वर्तंते S'. २. वैतु. मंभा. ३. °पाद्य S'. ४. रात्रिं रात्रीम् S'. ५. रात्रीं रात्रीमप्रयावं मै २,७,७ काठ १६,७ पै २०,४८,१; अहरहरप्रयावं मा ११,७५; °मप्रयावं RW. तै ४,१,१०,१; वैप १,३११ f अपि द्र. ६. भरतो° R. ७. घासमस्मै मा. तै. मै.; घासमग्ने पै. ८. रायस्पोषेण A,B^h,C,R,S^m,Cs. ९. ऋषाम A,B^h,D,R,S^m,Cs. १०. अस्मै P. ११. ऋषाम P,P^2,J,Cp.

हे अग्ने तिष्ठते सर्वदा यजनीयत्वेन संनिहिताय। तिष्ठते इति चतुर्थ्येकवचने रूपम्। अस्मै गार्हपत्याद्यायतनेषु वर्तमानाय तुभ्यं घासवत् घासम् अदनीयं हविः। यथा अश्वाय घासं तृणादिकम्। रात्रिंरात्रिम्। वीप्सया सर्वेषु कालेष्वित्यर्थः। अत्यन्तसंयोगे द्वितीया। अप्रयावम्[१] अप्रच्छिद्य। सांतत्येनेत्यर्थः। यौतेर्घञन्तः प्रयावशब्दः। णमुलन्तो वा। भरन्तः हरन्तः प्रयच्छन्तो वयं रायः धनस्य पोषेण पुष्ट्या इषा इष्यमाणेन[२] अन्नेन च सं मदन्तः सम्यक् माद्यन्तः ते तव प्रतिवेशाः। संनिहितगृहं प्रतिवेश इत्युच्यते। तत्र वर्तमानास्त्वत्समीपवर्तिनो मा रिषाम मा हिंसिता भूम। यतो रक्षकस्य संनिधौ वर्तामहे अतो लब्धकाङ्क्षितफला निरुपद्रवाश्च भूयास्मेति आशास्यते।

या ते[३] वसोर्वात[४] इषुः सा[५] त एषा तया नो मृड।
रायस्पोषेण[६] समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम[७] ॥ २ ॥

या। ते। वसोः। वातः। इषुः। सा। ते। एषा। तया। नः। मृड।
रायः। पोषेण। सम्। इषा। मदन्तः। मा। ते। अग्ने। प्रतिऽवेशाः। रिषाम[८] ॥ २ ॥

हे अग्ने वासकस्य तव या अनुग्रहबुद्धिः अन्नप्रदस्य[९] च या[९] अनुग्रहबुद्धिः तया अस्मान् सुखय इति तात्पर्यार्थः। रायस्पोषेण इत्यर्धं व्याख्यातम्।

सायंसायं गृहपतिर्नो अग्निः प्रातःप्रातः सौमनसस्य दाता।
वसोर्वसोर्वसुदान एधि[१०] वयं त्वेन्धानास्तन्वं पुषेम ॥ ३ ॥

सायम्ऽसायम्। गृहऽपतिः। नः। अग्निः। प्रातःऽप्रातः। सौमनसस्य। दाता।
वसोःऽवसोः। वसुऽदानः। एधि। वयम्। त्वा। इन्धानाः। तन्वम्। पुषेम ॥ ३ ॥

गृहपतिः गृहस्य स्वामी यजमानरूपः। गृहपतिना आहितो वा गृहपतिः। तद्धितप्रत्ययस्य लुक्। गार्हपत्यः अग्निः नः अस्माकं सायंसायं सर्वेषु सायंकालेषु प्रातःप्रातः सर्वेषु प्रातःकालेषु च सौमनसस्य सुखस्य दाता भवति। अथ प्रत्यक्षकृतः। हे अग्ने वसोर्वसोः [११]सर्वस्य प्रभूतस्य[११] धनस्य वसुदानः धनदाता एधि भव। वृत्त्यवृत्तिभ्यां स्वामित्वं बहुत्वं च विवक्ष्यते। त्वा त्वाम् इन्धानाः हविर्भिर्दीपयन्तो वयं तन्वम्। एकवचनम्

१. वैतु. मंपा. २. माणेन S'. ३. ते RW. ४. वसोर्यात K,V,K[m], WM.; वसोर्वाच C,WM.; वसोर्वात Dc,S; वसोर्या त RW.; वसोवात पै २०,४१,१०. ५. इषसा K,V,S; ईषुः सा C,WM.; एषुः सा R,Cs,WM.; इषुः सा > इषुः सा Dc; इष्टिः सा RW. ६. रायस्पोषेण A,B[h],C,R,S[m],Cs. ७. ऋषाम A,B[h],D,R,S[m], Cs. ८. ऋषाम P,P[a],J,Cp. ९. °सुवा न RW.W.; वैप १,२७८६ p अपि द्र. १०. एधि R,S[m],Cs. ११. सर्वप्र° S'.

अतन्त्रम् । **सर्वाणि पुत्रमित्रादिशरीराणि** पुषेम **पोषयेम । पुषेः** 'लिङ्याशिष्यङ्' ( पा ३,१,८६ ) **इति अङ्प्रत्ययः ।**

**प्रातःप्रातर्गृहपतिर्नो अग्निः सायंसायं सौमनसस्य दाता ।**
**वसोर्वसोर्वसुदान[1] एधीन्धानास्त्वा शतंहिमा[2] ऋधेम[3] ॥ ४ ॥**

प्रातःऽप्रातः । गृहऽपतिः । नः । अग्निः । सायम्ऽसायम् । सौमनसस्य । दाता ।
वसोःऽवसोः । वसुऽदानः । एधि । इन्धानाः । त्वा । शतम्ऽहिमाः । ऋधेम ॥ ४ ॥

**पूर्वमन्त्रे शरीरपुष्टिः प्रार्थिता । अस्मिन् मन्त्रे जीवनं प्रार्थ्यत इत्येतावान् विशेषः ।** शतम् **शतसंख्याका** हिमाः **हेमन्तर्तून्** ऋधेम **ऋध्यास्म । अग्निपरिचर्यया शतसंवत्सरजीवनवन्तो भूयास्म । ऋधु वृद्धौ । पूर्ववद् आशीर्लिङि अङ्प्रत्ययः ।**

**[4]अपश्चा दुग्धान्नस्य[4] भूयासम्[5] ।**
**अन्नादायान्नपतये[6] रुद्राय नमो अग्नये ।[7]**
**सभ्यः[8] सभां मे पाहि ये च सभ्याः[9] सभासदः ॥ ५ ॥**

अपश्चा । दुग्धऽअन्नस्य[10] । भूयासम् । अन्नऽअदाय[11] । अन्नऽपतये । रुद्राय । नमः ।
अग्नये । सभ्यः । सभाम् । मे । पाहि । ये । च । सभ्याः[9] । सभाऽसदः ॥ ५ ॥

अन्नस्य अपश्चादग्धा[12] **पश्चाद्भागे अदग्धा स्थालीपृष्ठभागे दग्धान्नरहितो** भूयासम् । **अल्पान्नस्य स्थालीपृष्ठभागे दुःशृतान्नसद्भावः प्रभूतान्नस्य तु तादृग्दोषसंभवो नास्तीति बह्वन्नलाभ आशास्यते ।** 'पश्च पश्चा च च्छन्दसि' ( पा ५,३,३३ ) **इति पश्चाशब्दो निपातितः । दहतेस्तृचि प्रत्यये रूपं दग्धेति । नञ्समासः । बह्वन्नलाभे कारणम् आह**—अन्नादाय **अन्नस्य भोक्त्रे भोजयित्रे वा** अन्नपतये **अन्नस्य स्वामिने** रुद्राय **रोदयित्रे रुद्रात्मकाय वा** अग्नये नमः । 'रुद्रो वा एष यद् अग्निः' ( तैब्रा १,१,८,४ ) **इति तैत्तिरीयश्रुतेः अग्निपरिचर्यया अन्नलाभो भवतीत्यर्थः ।** सभ्यः

---

१. पूर्वपृष्ठे टि ९ द्र. २. वैप १,३०७१ v द्र. ३. **रुधेम** A. ४. °**दुग्धान्तस्य** W; °**दग्धान्नस्य** M; °**दग्ध्वान्तस्य** P³; **अपश्चादुग्धान्नस्य** RW. [ तु. **ऋ ६,४२,१** तैब्रा ३,७,१०,६ आपश्रौ १४,२९,२ **अपश्चादग्ध्वने**; कौ १,३२ **अपश्चादग्ध्वने**; मै १,९,४ आपश्रौ ७,२८,२ **अपश्चाद् दघ्वांसं** J; वैप १,२८९ b,c अपि द्र. ५. **भूयासम्** A,Bʰ,C,R,Sᵐ. ६. **अन्नादयोर्न°** Sᵐ; **अन्नादयोर्न°** A,C,Kᵐ,V,Cs; **अन्नादुयोर्न°** D,R; **अन्नादुयो** > **अन्नादयो** Dc. ७. **अप°···अग्नये ॥ ५ ॥ सभ्य···°इनवम्** (=°इनवत् [ तु. शंपा.]) ॥ ६ ॥ **अहं°···घासमग्ने । रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम ॥ ७ ॥** इति RW. मन्त्रविभागः. ८. **सभ्य** RW.WI. ९. **सभ्यः** A,Bʰ,C,D,Kᵐ,R,Sᵐ,V, Dc.Cs,P,P¹,J,Cp; **सभ्यां** RW. १०. **दुग्धऽअन्नस्य** P,J. ११. °**अद्यः** P,P²,J,Cp. १२. वैतु. मंपा.

**सभार्हस्त्वम्** । 'सभाया यः' (पा ४,४,१०५) **इति यप्रत्ययः** । मे **मदीयां** सभाम् **पुत्रमित्रपश्वादिसंघं** पाहि **रक्ष** । **अग्निरेव संबोध्यः** । ये च सभासदः **सभायां समाजे सीदन्तस्ते** सभ्याः **सभार्हाः सन्ति ते च अस्मदीयं प्रजासंघं रक्षन्तु इति** ।

त्वमिन्द्रा[1] पुरुहूत[2] विश्वमायुर्व्यश्नवत् ।[3]
अहरहर्बलिमित्ते[4] हरन्तोश्वायेव[5] तिष्ठते घासमंग्ने[6] ॥ ६ ॥[3]

त्वम् । इन्द्र[7] । पुरुऽहूत[8] । विश्वम् । आयुः । वि । अश्नवत् ।
अहःऽअहः । बलिम्[9] । इत् । ते । हरन्तः[10] । अश्वायऽइव । तिष्ठते । घासम्[11] । अग्ने ॥

हे पुरुहूत **बहुभिराहूत** इन्द्र **ऐश्वर्यसंपन्न** अग्ने त्वं विश्वम् **संपूर्णम्** आयुः **अन्नं जीवनं वा** व्यश्नवत् **प्रापय** । **पुरुषव्यत्ययः** । **अश्नोतेर्लेटि अडागमः** । **कस्यायुःप्रापणम्**[12] **इति तम् आह** — तिष्ठते अश्वाय घासं **तृणादिकम्** इव इत्ये[13] **प्राप्तव्ये गृहे वर्तमानाय अग्नये तुभ्यम्** अहरहः **प्रतिदिवसं** बलिं हरन्तो **भवन्ति तेषाम् आयुः प्रापयेति संबन्धः** । **इत्य इति** । **इण् गतौ** । 'एतिस्तुशास्वृ°' (पा ३,१,१०९) **इति क्यप्प्रत्ययः** । **पित्वाद् धातोस्तुगागमः** ।

**इति सप्तमेऽनुवाके प्रथमं सूक्तम्** ।

'यमस्य लोकात्' **इति सूक्तस्य दुःस्वप्ननाशनकर्मणि लैङ्गिकविनियोगोऽवगन्तव्यः** ।

यमस्य लोकादध्या बभूविथ प्रमदा मर्त्यान्[14] प्र युनक्षि धीरः ।
एकाकिना[15] सरथं यासि विद्वान्त्स्वप्नं[16] मिमानो असुरस्य योनौ ॥१॥

यमस्य । लोकात् । अधि । आ । बभूविथ । प्रऽमदा । मर्त्यान् । प्र । युनक्षि । धीरः ।
एकाकिना[15] । सऽरथम् । यासि । विद्वान् । स्वप्नम् । मिमानः । असुरस्य । योनौ ॥ १ ॥

**अस्मिन् सूक्ते दुःस्वप्नप्रभावो वर्ण्यते । हे दुःस्वप्नाभिमानिन् क्रूर पिशाच**

---

१. त्वमिन्द्रा C,D,Cs; स्वा।मिंद्र S; स्वयेद्राः RW. २. तु. सा.; वैतु. A,Bʰ,C,D,K,Kᵐ,R,Sᵐ,V,Dc पुरुहूत्यः Cs पुरुहूत्य. ३. पूर्वपृष्ठे टि ७ द्र. ४. अहरहुर्बलि° A,Bʰ,C,D,R,Sᵐ,Cs,RW.; अहरहुर्बलि° > अहरहर्बलि° Dc; वैप १,२२६८ a अपि द्र.; °मित्ते A,Bʰ,C,D,Kᵐ,V; °मित्ये > °मित्ते Dc; °नित्ये Cs; °मित्ये S, सा. ५. हरतो° Cs. ६. तु. सा.; वैतु A,Bʰ,C,D,K,Kᵐ,R,Sᵐ,V,Dc,Cs जातम्°. ७. इंद्र J; इंद्र > इंद्र P. ८. °हूत्य P,P², J. ९. बलिम् P,J. १०. हुरंतः P²; हरंतः J. ११. तु. सा.; वैतु. P,P²,J,Cp जातम्. १२. °प्राणम् S'. १३. वैतु. मंपा. १४. मर्त्यांन् R,Cs; मर्त्यान् > मर्तान् Dc. १५. एकाकिना A,Bʰ,C,D,R,Sᵐ,Cs,P,J,RW. १६. °स्वाप्नं P³,M,W.

त्वं यमस्य लोकात् । अधिः पञ्चम्यर्थानुवादी । आ बभूविथ आगतोसि । भूलोकं कर्म । भू प्राप्तौ इति धातुः । व्यत्ययेन परस्मैपदम् । आगत्य च धीरः धृष्टः कस्मादपि न भीतस्त्वं प्रमदाः[१] स्त्रियः मर्त्यान् मरणधर्मणः पुरुषांश्च प्र युनक्षि स्वात्मना संयोजयसि । भूलोकनिष्ठान् स्त्रीपुंसान् प्रति मृत्युसूचकदुःस्वप्नं करोषीत्यर्थः । प्रपूर्वाद् युनक्तेर्व्यत्ययेन परस्मैपदम् । अथ विद्वान् देहिनाम् आयुर्वृद्धयवृद्धी जानन् त्वम् असुरस्य । असुः प्राणः । रो मत्वर्थीयः । प्राणवत आत्मनो योनौ उपलब्धिस्थाने हृदये स्वप्नम् कष्टम् अनिष्टफलं मिमानः निर्मिमाणः कुर्वन् एकाकिना त्यक्तपुत्रकलत्रबन्धनादिकेन [२]दृष्टदुःस्वप्नेन म्रियमाणेन पुरुषेण एकाकिना असहायेन सरथम् समानो रथो रंहणसाधनं यस्मिन् कर्मणि तथा यासि गच्छसि । दुःस्वप्रदर्शिनम् एकं पुरुषं यमलोकं प्रापयसीति यावत् । 'एकादाकिनिच्चासहाये' (पा ५,३,५२) इति एकशब्दाद् आकिनिच्प्रत्ययः ।

बन्धस्त्वाग्रे[३] विश्वचया[४] अपश्यत्[५] पुरा रात्र्या जनितोरेके अह्नि ।
ततः[६] स्वप्नेदमध्या[७] बभूविथ [८]भिषग्भ्यो रूपमपगूहमानः[८] ॥ २ ॥

बन्धः । त्वा । अग्रे । विश्वऽचयाः । अपश्यत् । पुरा । [९]रात्र्याः । जनितोः । एके[९] । अह्नि । ततः[६] । स्वप्न । इदम् । अधि । आ । बभूविथ । [१०]भिषक्ऽभ्यः । रूपम्[१०] । अपऽगूहमानः[११] ॥

दुःस्वप्नस्य अहोरात्रसृष्टेः पूर्वभावितम् उच्यते । हे दुःस्वप्नाभिमानिन् त्वा त्वाम् अग्रे सृष्टेः प्राक्काले विश्वचयाः सर्वस्य चेता[१२] संचेता स्रष्टा बन्धुः[१३] प्राणिनः स्वस्वकर्मभिर्बध्नन् विधाता अपश्यत् दृष्टवान् । एके मानसप्रजापत्यादयः राज्या अह्नि । विभक्तिव्यत्ययः । अह्नः अहोरात्रयोः जनितोः जननाद् अहोरात्रकालसृष्टेः पुरा पूर्वम् । अपश्यन्नित्यर्थः । जनी प्रादुर्भावे । 'भावलक्षणे स्थेण्°' (पा ३,४,१६) इति तोसुन्प्रत्ययः । ततः । आरभ्येति शेषः । हे स्वप्न इदं सर्वं जगद् अध्या बभूविथ । अधिरनर्थकः कर्मप्रवचनीयः । व्याप्तवान् असि । आगते दुःस्वप्ने चिकित्सकैः प्रतीकारः कर्तुं शक्यत इत्यत आह — भिषग्भ्यः इति । भिषग्भ्यः चिकित्सकेभ्यो रूपम् स्वकीयाम् आकृतिम् अपगूहमानः संवृण्वन् आच्छादयन् । चिकित्सका[१४] हि

---

१. °दा S'; वैतु. मंपा.; वैप १,२१८९ g अपि द्र. २. दुष्ट° S'. ३. बन्धु° K,V, सा.; बध° Cs; बुध्न' RW.; वैप १,२९३१ c अपि द्र. ४. विश्वव्यचा RW.; विश्ववया पै ३,८,२. ५. अवपश्यत् पै. ६. तर्त A,C,D,K^m,R,S^m,V,Dc,Cs,P, P^२,J; तम: B^h. ७. स्वप्नेनमध्या पै. ८. भिषग्भ्यरूपमप° A,B^h,D,K,K^m,S^m,Dc; भिषग्भ्यरूपमप° C; भिषग्भ्यरूपमुप° Cs; भिषग्भ्यरूपमप° R; गभिषग्रूपमपगूहमानः RW.; भिषज्यं रूपमगूहमानः पै. ९ राज्या । जनितः । रेके P,P^२,J. १०. भिषग्भ्यऽरूपम् P,P^२; भिषग्भ्यः । रूपम् > भिषग्भ्यऽरूपम् J. ११. °मानाः P; अप । गूहमानाः P^२. १२. चेती S'. १३. वैतु. मंपा. १४. चिकित्सा S'.

रोगस्वरूपं तस्य निदानं च ज्ञात्वा औषधादिभिः प्रतीकारं कुर्वन्ति न तथा दुःस्वप्नस्य स्वरूपं निदानं च ज्ञात्वा प्रतिकुर्युरिति स्वरूपाच्छादनाभिप्रायः।

बृहद्गावासुरेभ्योऽधि[1] देवानुपावर्तत[2] महिमानमिच्छन्[3]।
तस्मै[4] स्वप्नाय [5]दधुराधिपत्यं त्रयस्त्रिंशासः स्वरानशानाः[5] ॥ ३ ॥

बृहत्ऽगावा[6]। असुरेभ्यः[7]। अधि। देवान्। उप[8]। अवर्तत। महिमानम्। इच्छन्।
तस्मै। स्वप्नाय। दधुः। आधिऽपत्यम्। त्रयःऽत्रिंशासः[9]। स्वः। आनशानाः॥ ३॥

बृहद्गावा बृहतो महतो दुष्प्रधर्षानपि पुरुषान् गाते गच्छतीति बृहद्गावा। गाङ् गतौ। 'आतो मनिन्क्वनिप्°' (पा ३,२,७४) इति क्वनिप्प्रत्ययः। बृहत् अधिकं गच्छति सर्वं व्याप्नोतीति वा तथाविधः स्वप्नः पूर्वम् असुरेभ्योऽधि असुरेभ्यः सकाशात् स्वयम् असुरपक्षीयः सन् तेभ्यः सकाशाद् देवान् उपावर्तत समीपं प्राप्तवान्। किमर्थम्। महिमानम् महत्त्वं प्रभावम् इच्छन् कामयमानः। महत्त्वैषणाद्धेतोरित्यर्थः। पूर्वम् असुरेषु साधारणपुरुषत्वेन वर्तमानः ततोप्यधिकं श्रेयः कामयमानो देवान् प्राप्नोत्। यथा लोके परराष्ट्रराजसमीपवर्ती बलवान् पुरुषः स्वस्माद् राज्ञो बहुमानम् अलभमानः स्वराजशत्रुभूतराजसमीपं बहुमानार्थं गच्छति एवं दुःस्वप्नोपि आगत इति तस्मै स्वसमीपम् आगताय स्वप्नाय कष्टफलकारिणे दुःस्वप्नाय स्वः स्वर्गम् आनशानाः व्याप्तवन्तः। अश्नोतेर्लिटः कानचि 'अश्नोतेश्च' (पा ७,४,७२) इति नुडागमः। त्रयस्त्रिंशासः त्रयस्त्रिंशत्संख्याकाः 'अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च' (ऐब्रा १,१०) इति समाम्नाता देवाः। सर्वेषां त्रयस्त्रिंशत्संख्यापूरणत्वात् डट्प्रत्ययः कृतः। 'आज्जसेरसुक्' (पा ७,१,५०)। आधिपत्यम् सर्वलोकानिग्रहकारित्वलक्षणं स्वामित्वं दधु विदधुः कृतवन्तः। दत्तवन्तः इत्यर्थः।

[10]नैतां विदुः[10] पितरो नोत देवा येषां[11] जल्पिश्चरत्यन्तरेदम्[12]।
त्रिते[13] स्वप्नमदधुराप्त्ये [14]नर आदित्यासो[14] वरुणेनानुशिष्टाः[15] ॥ ४ ॥

---

१. बृहद्गावासुरे° A,Bh,C,R,WM.; बृहद्‌गावासुरे° D,K,Km,V,Dc; बृहद्‌गावासुरे° Sm; बृहद्‌गावासुरे° Cs; बृहच्छ्रूवा असु° RW.; बृहद्ग्रावासु° पै ३,८,३. २. देवानुपावर्तस्व A,D; देवानुपावर्तत C; देवानुपावर्तत Bh,Km,R,V, Dc,Cs; °पाववर्त पै. ३. °नमृच्छन् पै. ४. यस्मै D. ५. °पत्यं त्रयस्त्रिंशास स्वं° A,Bh,C,D,R,Sm,Cs,WM. ६. बृहत्। ग्रावा P,P², WM.; बृहत्। गावा J,WM. ७. असुरेभ्यः P. ८. उप P². ९. त्रयःऽत्रिंशः। सः P; त्रयःऽत्रिंशाः। सः J,WM. १०. नैतां विदुः A; नेतां विदुः Cs; नैतं विदुः RW. ११. यैषां S. १२. °त्यंतरेतम् A,D,Km,Sm,V,Dc, WM.; °त्यंतरेत Bh,C; °त्यन्तरा RW.; °न्त्यन्तरेदम् पै ३,८,४. १३. तृते A,Bh, C,D,R,Sm,V,Cs,WM. १४. द्र. RW.; वैतु. शंपा. सात. नर् आदित्या°. १५. अरुणे° A,Bh,C,D,K,Km,R,Sm,V,Dc,WM.

न । एताम् । विदुः । पितरः । न । उत । देवाः । येषाम् । जल्पिः । चरति । अन्तरा । इदम् ।
त्रिते । स्वप्नम् । अदधुः । आप्त्ये । नरः । आदित्यासः[१] । वरुणेन[२] । अनुऽशिष्टाः ॥ ४॥

एषां[3] त्रयस्त्रिंशत्संख्याकानां देवानां या[3] जल्पिः दुःस्वप्नाय प्राणिनां तत्तत्कर्मानुसारेण [४]दुःस्वप्नदर्शननिबन्धनानिष्टफलकारित्वलक्षणाधिपत्यप्रदानरूपं यद् वाक्यम् इदं जगत् अन्तरा मध्ये चरति भक्षयति । आधिपत्यप्रदानरूपं वाक्यं जगत् संहरति । चरतिर्भक्षणार्थः । एतां जल्पिं पितरो न विदुः न जानन्ति । उत अपि च देवाः त्रयस्त्रिंशद्देवव्यतिरिक्ता अन्ये देवा न विदुः । केवलं स्वप्नस्य आधिपत्यप्रदातारो देवा दुःस्वप्नश्च एतम् अर्थं जानन्तीत्यर्थः । एवं देवेभ्यो लब्धाधिपत्यो दुःस्वप्नः प्रबलः सन् स्वस्य आधिपत्यप्रदातृषु देवेषु मध्ये आदित्यान् नाम देवान् अनिष्टफलदुःस्वप्नदर्शनेन जग्राह । तदा आदित्याः परस्परं विचार्य अस्मद् एव लब्धप्रभावो दुःस्वप्नः अस्मानेव गृहीतवान् अस्य क उपाय इति वरुणं पृष्टवन्तः । स पृष्टो वरुणः स्वप्नप्रतीकारमपि इमम् उपदिदेश । तद् अत्र उत्तरार्धेन उच्यते— नरः नेतारः आदित्यासः एतत्संज्ञका देवा वरुणेन पापनिवारकेण एतत्संज्ञकेन देवेन अनुशिष्टाः सम्यग् उपदिष्टाः सन्तः आप्त्ये अपां पुत्रे त्रिते एतत्संज्ञके महर्षौ स्वप्नम् अनिष्टफलसूचकं दुःस्वप्नम् अदधुः स्थापितवन्तः । न्यमार्जयन्निति यावत् । तथा च शाकला दाशतय्यां समामनन्ति—'त्रिते दुष्वप्न्यं सर्वम् आप्त्ये परि दद्मस्यनेहसो व ऊतयः सुऊतयो व ऊतयः' ( ऋ ८,४७,१५ ) इति ।

यस्य[६] क्रूरमभजन्त[६] दुष्कृतोऽस्वप्नेन[७] सुकृतः पुण्यमायुः[८] ।
स्वर्मदसि[९] परमेण [१०]बन्धुना तप्यमानस्य[१०] मनसोऽधि जज्ञिषे[११] ॥ ५ ॥

यस्य । क्रूरम् । अभजन्त[१२] । दुःऽकृतः । अस्वप्नेन[१३] । सुऽकृतः । पुण्यम् । आयुः ।
स्वः । मदसि । परमेण । बन्धुना । तप्यमानस्य[१४] । मनसः । अधि । जज्ञिषे[१५] ॥ ५ ॥

दुष्कृतः दुष्कर्माणः पापिनः पुरुषा यस्य दुःस्वप्नस्य क्रूरम् भयंकरम् अनिष्टं फलम् अभजन्त प्राप्नुवन्ति । सुकृतः सुकर्माणः अस्वप्नेन दुःस्वप्नदर्शनाभावेन पुण्यम्

---

१. तु. मंपा.; वैतु. शंपा. आदित्यासः. २. अरुणेन P,P², J,WM. ३. वैतु. मंपा. ४. °बन्धन अनिष्ट° S'. ५. व्यस्य पै ३,८,५. ६. °मभजन्त K,Kᵐ,V,WM.; °मपचन्त Bʰ,C,WM.; °मपचंत > °मभंजंत A; °मभंजंत > °मभजंत Dc; °मसंचन्त WM.RW. ७. °कृतः स्व° RW.; वैप १,५७९ h अपि द्र. ८. °मापुः पै. ९. स्वरासजसि पै. १०. बन्धुना तप्यमानस्य A,Bʰ,D,R,Sᵐ,Cs, WM.; बन्धुना तप्यमानस्य > बन्धुनां तप्यमानस्य Dc. ११. जज्ञिषे A,Bʰ,C,D,R,Sᵐ,Cs,WM. RW.; जज्ञिषे > जज्ञिषे Dc. १२. अपचंत P,P²,J. १३. स्वप्नेन P,P²,J,D². १४. तप्यमानस्य P,J,WM. १५. जज्ञिषे P²,J,WM.

**पुण्यकर्मनिमित्तम्** आयुः **जीवनम्** । **अभजन्तेति** । **अथ प्रत्यक्षकृतः** । **हे दुःस्वप्न** स्वः **स्वर्गे लोके** परमेण **सर्वोत्तरेण** बन्धुना **सृष्टेः प्राक्काले त्वां दृष्टवता विधात्रा सह** मदसि **माद्यसि** । **माद्यतेर्व्यत्ययेन शप्प्रत्ययः** । तप्यमानस्य **मृत्युपाशेन संतप्यमानस्य पुंसो**[1] **दुष्कर्मणः पुरुषस्य** मनसोऽधि **मनसः सकाशात्** जज्ञिषे **मृत्युसूचनार्थं प्रादुर्भूतो भवसि** । **जनी प्रादुर्भावे इति धातुः** ।

विद्म ते सर्वाः परिजाः पुरस्ताद्[2] विद्म स्वप्न यो अधिपा[3] इहा ते ।
यशस्विनो नो यशसेह पाह्याराद् द्विषेभिरप[4] याहि दूरम् ॥ ६ ॥

विद्म । ते । सर्वाः । परिऽजाः । पुरस्तात् । विद्म । [5]स्वप्न । यः[5] । अधिऽपाः । इह । ते ।
यशस्विनः । नः । यशसा । इह । पाहि । आरात् । द्विषेभिः । अप । याहि । दूरम् ॥ ६ ॥

**हे** स्वप्न ते **तव** पुरस्तात् सर्वाः परिजाः **पुरस्ताद्गामिनः सर्वान् परिजनान्** विद्म । **परिपूर्वात् जायतेः** 'जनसनखनक्रमगमो विट्' ( पा ३,२,६७ ) **इति विट्** । 'विड्वनोः'' ( पा ६,४,४१ ) **इति अनुनासिकस्य आकारः** । **तथा** इह **इदानीं** ते **तव** यः अधिपाः **स्वामी तं च** विद्म **जानीमः** । **एवं तव स्वरूपं स्वामिनं परिजनांश्च जानतो** यशस्विनः नः **अस्मान्** इह **दुःस्वप्नप्रसङ्गे** यशसा **अन्नेन कीर्त्या वा निमित्तेन** आरात् **समीपे** पाहि **रक्ष द्वेष्टुः**[6] । द्विषोभिः[7] **द्वेष्टृभिर्बाधकैः सह अस्मत्तो** दूरं **देशम्** अप याहि **अपसृत्य गच्छ** ।

**इति सप्तमेऽनुवाके द्वितीयं सूक्तम्** ।

'यथा कलां यथा शफम्' **इति सूक्तेन पुरोहितो दुःस्वप्नदर्शिनं राजानम् अभिमन्त्रयेत** । **उक्तं परिशिष्टे**—[8]"कुञ्जरं वा प्रमत्तम् अश्वं श्वेतं गोवृषं वा यानं युक्तं वाजिभिर्यथारोहयेत् स्वप्नकालेऽमुष्य विद्यान्मानसो ( ?°नसं ) यामभीष्टां तस्मात् तां रात्रिं प्रयतः स्वपेत् । स्वप्नं दृष्ट्वा ऋत्विग्भ्यो निवेदयेत् । 'परोपेहि' ( अ ६,४५ ), 'यो न जीवोसि' ( अ ६,४६ ), 'विद्म ते स्वप्न जनित्रं' ( अ ६,४६,२ ), 'यथा कलां यथा शफम्' इति राजानम् अभिमन्त्र्य यथागतं गच्छेत्"[8] **इति** ।

यथा कलां यथा शफं यथर्णं संनयन्ति[9] ।
एवा दुष्वप्न्यं सर्वमप्रिये[10] सं नयामसि ॥ १ ॥

यथा । कलाम् । यथा । शफम् । यथा । ऋणम् । सम्ऽनयन्ति ।
एव । दुःऽस्वप्न्यम् । सर्वम् । अप्रिये । सम् । नयामसि ॥ १ ॥

---

१. पुं S'. २. परस्ताद् पै ३,८,६. ३. अधिपा D,S^m. ४. द्वेषिभि° > द्विषेभि° C; द्विषेभि° > द्वेषेभि° S^m; द्विषेभि° W.M.R.W. पै.; द्विषोभि° S; वैप १,१६९४ n अपि द्र. ५. स्वप्नऽयः P,P²,J,W.M. ६. द्वेष्टृ S'. ७. वैद्र. मंपा. ८. परिशिष्टे नोपलभ्यते. ९. संनयामसि ऋ ८,४७,१७. १०. सर्वं द्विषते अ ६,४३,३; सर्वमाप्त्ये ऋ.

यथा अवदानार्थं संस्कुर्वन्त ऋत्विजः हतस्य पशोः कलां शफम् इति अनवदानीयान्यङ्गानि सहादाय अन्यत्र संनयन्ति। यथा वा प्रवृद्धम्[1] ऋणं संनयन्ति अपगमयन्ति उत्तमर्णाय प्रत्यर्पयन्ति एवा एवं दुष्वप्न्यम् कष्टस्वप्ननिमित्तकं सर्वम् अनर्थजातम् आप्त्ये[2] अपां पुत्रे त्रिताख्ये[3] महर्षौ सं नयामसि संनयामः स्थापयामः प्रमार्जयामः।

सं राजा॑नो अगुः सम्ृणान्य॑गुः सं कुष्ठा अ॑गुः [4]सं कला[4] अ॑गुः।
सम॒स्मासु॒[5] यद् दु॒ष्वप्न्यं॑[6] निर्द्वि॑षते दु॒ष्वप्न्यं॑[7] सुवाम ॥ २ ॥

सम्। राजा॑नः। अ॒गुः। [8]सम्। ऋणानि॑[8]। अ॒गुः। सम्। कुष्ठाः। अ॒गुः। सम्[9]। क॒लाः। अ॒गुः। सम्। अ॒स्मासु॑। यत्[10]। दुः॒ऽस्वप्न्य॑म्। निः। द्वि॒ष॒ते। दुः॒ऽस्वप्न्य॑म्। सु॒वा॒म॒ ॥ २ ॥

यथा राजानः परराष्ट्रं विनाशयितुं समगुः संयन्ति संहता भवन्ति। ऋणानि बहूनि समगुः संयन्ति। एकस्मिन्नृणे अनपसारिते उपर्युपरि[11] ऋणानि बहूनि भवन्तीति प्रसिद्धिः। कुष्ठाः समगुः। कुष्ठो नाम त्वग्दोषः। तदुपलक्षिता[12] बहवो रोगाः। एकस्मिन् कुष्ठरोगे अचिकित्सिते तस्योपरि[13] पिटकव्रणादीनि भवन्तीति प्रसिद्धिः। कलाः अनुपादेयावयवोपलक्षणम्। यथा वर्जनीयाः पश्वाद्यवयवा जीर्णकूपादिषु समगुः संहता भवन्ति। एवम् अस्मासु यद् दुःष्वप्न्यम्[2] दुःस्वप्ननिमित्तकम् अनर्थजातं सम्। अगात् इति एकवचनेनानुषङ्गः। समितं[14] संहतं वर्तते तद् दुःष्वप्न्यम् अरिष्टजातं द्विषते अस्मद्द्वेष्ट्रे निः सुवाम अस्मत्तो निःसार्य प्रेरयाम। षू प्रेरणे। तौदादिकः।

[15]देवा॑नां पत्नी॑नां ग॒र्भ॒ य॒मस्य॒ †कर॒ यो॑† भ॒द्रः स्वप्न॑[15]।
[16]स मम॒ यः[16] पा॒पस्तद्[17] द्वि॑ष॒ते प्र हि॑ण्मः। [18]मा तृ॒ष्टाना॑मासि कृष्णशकु॒नेर्मुख॑म्[18]

---

१. प्र ··· रिक्तं स्थानं द्वयोर्वर्णयोः S'. २. वैतु. मंपा. ३. तृचाख्यो S'. ४. द्र. सा.; वैतु. A,B^h,C,D,K,K^m,R,S^m,V,Dc,Cs,WM. स कुला. ५. सर्वमुस्मासु RW. WI. ६. यर्त दु ( दुः A,B^h,C,R,Dc,Cs. ) ष्वप्न्यं A,B^h,C,D,K,K^m,R,S^m,V, Dc,Cs,WM. ७. दुःष्वप्न्यं B^h,C,K^m,R,Dc. ८. सः। मृणानि P,P^2,J,WM. ९. सः P,P^2,J,WM. १०. यतः P,P^2,J,WM. ११. उप उपरि S'. १२. स्व-दुप° S'. १३. तद्रोपरि S'. १४. संमितं S'. १५. देवानां पत्नीनां गर्भ यमस्य करयो भद्रस्वप्नः A,B^h,C,D,K,K^m,R,S^m,V,Dc,Cs,WM.; देवपत्नीनां गर्भो यमस्य करणो भद्रः स्वप्नः W.WI. † करण यो पै ३,३०,३. १६. सुममयः A,B^h,C,D,K,K^m, R,S^m,V,Dc,Cs. १७. पापस्तं RW. पै. १८. मातृष्टानामासिकृष्णशकुनेमुखं Cs; मातृष्टानामासिकृष्णशकुनेर्मुखम् S^m; मातृष्टा ( °ष्ठा C ) नामासिकृष्णशकुनेमुखम् B^h,C,D, K^m,R,V; मातृष्टानामासिकृष्णः शकुनेर्मुखम् > मातृष्टानामासिकृष्णशकुनेमुखम् Dc; मातृष्टा-नामासिकृष्णशकुनेर्मुखम् S; यस्तृष्टो नामासि° RW.; वैप १,२४८० i अपि द्र.; तृष्टामानामासि कृष्णशकुनेर्मुखम् पै ३,३०,४.

[1]देवानाम् । पत्नीनाम् । गर्भ । यमस्य । कर । यः । भद्रः । स्वप्न । सः । मम । यः[1] ।
पापः । तत् । द्विषते । प्र । हिण्मः । [2]मा । तृष्टानाम् । असि । कृष्णऽशकुनेः[2] । मुखम् ॥ ३ ॥

हे देवानां पत्नीनां गर्भ । दीव्यन्ति क्रीडन्तीति देवा गन्धर्वाः । पत्नीशब्देन अप्सरसः । गन्धर्वाप्सरसां गर्भ पुत्र । ता हि महाजलवृक्षादिस्थानेषु स्थित्वा पुरुषान् उन्मादयन्तीति तैत्तिरीयश्रुतिप्रसिद्धिः ( तु. तै ३,४,८,४ ) । अत्रापि उन्मादनयोगात् तत्पुत्रत्वेन स्वप्नस्य व्यपदेशः । 'सुबामन्त्रिते पराङ्गवत् स्वरे' ( पा २,१,२ ) इति षष्ठ्यामन्त्रितसमुदायस्य षाष्ठिकम् आद्युदात्तत्वम् । हे यमस्य कर । यथा प्रेताधिपतिः स्वीयेन हस्तेन यं कंचन वध्यं गृहीत्वा घातयति एवं दुःस्वप्नेनापि तथा करोतीति स्वप्नस्य तत्करत्वव्यपदेशः । एवंप्रभाव[3] हे स्वप्न त्वदीयो भद्रः मङ्गलकारी यः अंशोऽस्ति सोऽशो ममास्तु । यः पापः क्रूरः अनिष्टकारी अंशः तं[4] द्विषते शत्रवे प्र हिण्मः प्रेरयामः । हि गतौ वृद्धौ च । स्वादिः । 'हिनुमीना' ( पा ८,४,१५ ) इति णत्वम् । 'लोपश्चास्य°' ( पा ६,४,१०७ ) इति श्नुप्रत्ययस्य अन्त्यलोपः । कृष्णशकुनेः । कृष्णः पक्षी वायसः । तस्य मुखम् मुखवन्मुखं वायसमुखभूतः[5] स्वप्नस्त्वं बाधको मा । मा भवेत्यर्थः ।

तं त्वा स्वप्न तथा सं विद्म [6]स त्वं स्वप्नाश्व इव[6] [7]कायमश्व इव[7] [8]नीनाहम् ।
अनास्माकं[8] देवपीयुं [9]पियारुं वपु[9]† यदस्मासु दुष्वप्न्यं यद् गोषु यच्च नो गृहे ।४।

तम् । त्वा । स्वप्न । तथा । सम् । विद्म । सः । त्वम् । स्वप्न । अश्वःऽइव । कायम् । अश्वःऽइव । नीनाहम् । अनास्माकम् । देवऽपीयुम् । [10]पियारुम् । वपु[10] । यत् । अस्मासु । दुःऽस्वप्न्यम् । यत् । गोषु । यत् । च । नः । गृहे ॥ ४ ॥

अनास्माकस्तद्[11] देवपीयुः[12] पियारुर्निष्कमिव[13] प्रति मुञ्चताम् ।†
[14]नवारत्नीनपमया अस्माकं[14] ततः[15] [16]परि । दुष्वप्न्यं सर्वं द्विषते निर्दयामसि[16] ।५।†

---

१. देवानाम् । पत्नीनाम् । गर्भं (गर्भम् P ) । यमस्यं । करयः । भद्रऽस्वप्नः । सुमम् । अयः P,P[2],J. २. मातृष्टा । नाम । असि । कृष्णऽशकुने P,P[2],J. ३. °प्रभावो S'. ४. वैतु. मंपा. ५. °भूत° S'. ६. ? स्वप्नो स्वप्स्वा ? अश्वीव पै ३,३०,४. ७. कक्ष्याश्वमश्व इव RW.; कायमश्वीव पै. ८. नीनाहमनास्माकं RW.; नीनाहम् । अवास्माकं S. ९. पिपारुं वपुर् A,B[h],K,K[m],R,V,Dc; पिपारुं वपु C,D,S[m],Cs; पियारुं (बधान) । RW. † यस्तृष्टोनामासि [=मा तृष्टानामसि [तु. शंपा.]] (सा. तं त्वा) ··· वपु (=बधान RW.) ॥ ४ ॥ यद्° ··· मुञ्चताम् ॥५॥ नवा° ··· °मसि ॥६॥ इति सा. RW. मन्त्रविभागः. १०. पिपारुम् । वपुः P,P[2],J. ११. अवास्माकं तद् S; सास्माकं पै ३,३०,५. १२. °पीयुं पै. १३. पिपारु° A,B[h],C,D,K,K[m],R,S[m],V,Dc,Cs; पियारुं नि° पै. १४. °त्नीनपमायास्माकं RW. पै.; °नवमया अ° C,R; °त्नीरपमया अ° S[m]; °नपमया अस्मा° S; वैप १,२८१ b अपि द्र. १५. तन्वस् पै. १६. परि दुष्वप्न्यं RW.; °दुःष्वप्न्यं° C,K[m],R,Cs; °दुष्वप्न्यं° > दुःष्वप्न्यं° Dc; °सर्वमप्रिये संनयामसि S; °ते निर्द्विषामसि पै,

अनास्माकः । तत् । देवऽपीयुः । पियारुः[1] । निष्कम्ऽइव । प्रति । मुञ्चताम् । नव ।
अरत्नीन् । अपऽमयाः । अस्माकम् । ततः । परि । दुःऽस्वप्न्यम् । सर्वम् । द्विषते । निः । दयामसि ॥

हे स्वप्न तं तादृशं त्वा त्वां तथा तेन प्रकारेण तदर्थम् उत्पन्न आगत इति सर्वं सं विद्म जानीमः । हे स्वप्न स त्वम् अश्वः यथा स्वकीयं रजोधूसरं कायं धुनोति यथा च अश्वः नीनाहम् पल्याणकवचादिकम् अवकिरति एवम् अस्माकं[२] पियारुम् । पीयतिर्हिंसाकर्मा । बाधकम् न केवलम् अस्माकमेव बाधकं किं तु देवपीयुम् देवानां बाधकं यज्ञविघातिनम् अव[२] वप । तिरस्कुर्वित्यर्थः । दुःस्वप्नफलं तस्यास्त्विति यावत् । अस्मासु अस्माकं वपुषि यद् दुष्वप्न्यं वर्तते यत् च गोषु गवाम् अनर्थसूचकं दुष्वप्न्यं यच्च नः अस्मदीये गृहे वर्तते [४] तद् अस्माकम् अरिष्टम् अव । गमयेति शेषः । तद् अरिष्टजातं देवपीयुः पियारुः शत्रुः निष्कमिव सौवर्णम् आभरणमिव प्रति मुञ्चताम् । स्वशरीरे धारयत्वित्यर्थः । अस्माकं संबन्धि दुष्वप्न्यं नवारत्नीन् अपमयाः नवारत्निपर्यन्तम् अपसार्य । यथा तत्संस्पर्शो न भवति तथा कुर्विति वक्तुं नवारत्निप्रमाणम् उक्तं वेदितव्यम् । ततः अनन्तरं सर्वम् उत्पन्नं दुष्वप्न्यम् अप्रिये[२] द्वेष्ये संनमयामसि[२] प्रेरयामः [५] ।

इति सप्तमेऽनुवाके तृतीयं सूक्तम् ।

'घृतस्य जूतिः' इति सूक्तस्य विनियोगो लिङ्गाद् अवगन्तव्यः । तत्र दर्शपूर्णमासयोराज्यभागहोमात् पूर्वं 'यज्ञस्य चक्षुः' इत्यनया आज्यं जुहुयात् । सूत्रितं हि दर्शपूर्णमासौ प्रक्रम्य— " 'अग्नावग्निः' (अ ४,३९,९), 'इदा पूतम्' (अ ४,३९,१०), 'पुरस्ताद्युक्तः' (अ ५,२९,१), 'यज्ञस्य चक्षुः' (अ १९,५८,५) इति जुहोति" (कौसू ३,१६) इति ।

घृतस्य जूतिः[३] समना[४] सदेवा[५] संवत्सरं हविषा वर्धयन्ती ।
श्रोत्रं चक्षुः प्राणोऽच्छिन्नो नो अस्त्वच्छिन्ना वयमायुषो वर्चसः ॥१॥

घृतस्य । जूतिः । समना[६] । सऽदेवा[७] । सम्ऽवत्सरम् । हविषा । वर्धयन्ती ।
श्रोत्रम् । चक्षुः । प्राणः । अच्छिन्नः[८] । नः । अस्तु । अच्छिन्नाः । वयम् । आयुषः । वर्चसः ॥१॥

---

१. पियारुः P,P², J. २. वैतु. मंपा. ३. यूतिस् पै १,११०,१ [ मूको. ]. ४. समना C,D,WM.W.; समनाः Bh,K,Km,R,V,WM.; समानाः A,WM.; समाना WM.RW.; समनाः Sm,WM.; समनाः WM.; समना WM.; समनाः > समनाः Dc; समनाः S; सुमनास् पै १,११०,१. ५. सदेवाः A,Bh,C,D,K,Km,R,Sm,V,Dc,Cs,WM.; सदेव RW.; सदैव W.; सुदेवा पै. ६. समना P²,J,WM, ७. सऽदेवाः P,P²,J,WM, ८. अच्छिन्ना P,P²,J,WM,

**अस्मिन् सूक्ते मनसा निर्वर्त्यो यज्ञः स्तूयते।** घृतस्य । **घृ क्षरणदीप्त्योः। दीप्तस्य परतेजसो** जूतिः । **जु गतौ सौत्रो धातुः ।** 'ऊतियूतिजूति" (पा ३,३,९७) **इति क्तिन्प्रत्ययान्तत्वेन निपातितः। सर्वेषां गत्यर्थानां ज्ञानार्थत्वात् जूतिशब्देन सर्वत्र प्रसृतं ज्ञानम् उच्यते । अत एव ऐतरेयकाः—**'मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति। सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति' (ऐआ २,६,१) **इति समामनन्ति । घृतस्य जूतिरिति परमात्मनः स्वरूपविषयं ज्ञानम्। कीदृशी।** समनाः[1] **समानमनस्का सर्वेषां प्राणिनां मनांसि यस्मिन् प्रज्ञाने समाश्रितानि ।** सदेवा **देवाः इन्द्रियाणि सर्वप्राणिसंबन्धीनि तत्सहिता परमात्मविषया बुद्धिः** संवत्सरम् **संवसन्त्यत्र भूतानीति संवत्सरः परमात्मा तं** हविषा **शब्दस्पर्शादिरूपप्रपञ्चेन हूयमानेन** वर्धयन्ती **पुष्णती भवति । वस्तुकृतपरिच्छेदपरिहार एव परमात्मनः पोष इत्यर्थः। शब्दादिविषयाणां ज्ञानाग्नौ होमो भगवताप्युक्तः—**

'श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयान् अन्य इन्द्रियाग्निषु जुह्वति ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥' (भगी ४,२६;२७) **इति।**

**एवं ज्ञानयज्ञप्रवर्तकानां** नः **अस्माकं** श्रोत्रं चक्षुः प्राणः । **एतद् उपलक्षणं ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च । प्राणः शरीरधारको वायुः** अच्छिन्नः **अविनश्वरः** अस्तु । वयं **च** आयुषो **जीवनस्य** वर्चसः **तेजसः** अच्छिन्नाः **छिन्नं छेदः विनाशः तद्रहिता भूयास्म। इन्द्रियादीनां बाह्यविषयप्रवर्तनपरिहारेण आत्मविषयत्वकरणेन तेषां विच्छेदाभाव आशास्यते।**

उपास्मान् प्राणो ह्वयतामुप वयं प्राणं हवामहे ।
वर्चो [2]जग्राह पृथिव्य१न्तरिक्षं[2] वर्चः सोमो बृहस्पतिर्विधत्ता[3] ॥ २ ॥

उप । अस्मान् । प्राणः । ह्वयताम् । उप । वयम्[4] । प्राणम् । हवामहे ।
वर्चः । जग्राह । पृथिवी । अन्तरिक्षम् । वर्चः । सोमः । बृहस्पतिः । [5]विऽधत्ता ॥ २ ॥

अस्मान् **मानसयज्ञप्रवर्तकान्** प्राणः **शरीरधारकः पञ्चवृत्तिको वायुः** उप ह्वयताम् **चिरकालजीवनाय अनुजानातु ।** वयं **च** प्राणम् उप हवामहे **अस्मदीयेषु**

---

१. वैतु. मंपा. २. °थिव्यङ्न्त° A,Bʰ,C,Sᵐ; जग्राह पृथिव्यंत° Cs. ३. °पतिर्धर्त्ता A,Bʰ,C,R,W.; °पतिर्धत्ता D; °पतिर्धर्त्ता R; °पतिर्धत्ताम् Kᵐ,V; °पतिर्विधर्त्ता K; °पतिर्धत्ता > °पतिर्धत्ताम् Dc; °पतिर्धत्तात् Cs; °पतिर्विधत्तां S; °पतिर्बिभर्ति पै १,११०,२; वैप १,२८६६ i अपि द्र. ४. ह्वयम् P,P². ५. धर्त्ता P,P²,J.

**शरीरेषु चिरकालावस्थानाय प्रार्थयामहे** । पृथिवी अन्तरिक्षं **च** वर्चः **तेजः** जग्राह **स्वीकृतवती । अस्मभ्यं दातुम् इति शेषः । अत्र वर्चःशब्देन शरीरधारक ओजो नाम अष्टमो धातुर्विवक्षितः । तथा** सोमः बृहस्पतिः विधत्ता **विशेषेण धर्ता अग्निः सूर्यो वा** वर्चो जग्राह **। अस्मभ्यं दातुम् इति शेषः ।**

**'वर्चसो द्यावापृथिवी[1] संग्रहणी बभूवथुर्वर्चो[2] गृहीत्वा 'पृथिवीमनु सं चरेम[3] ।**
**यशसं[4] गावो गोपतिमुप तिष्ठन्त्यायतीर्यशो गृहीत्वा 'पृथिवीमनु सं चरेम[5] ॥३॥**

वर्चसः । द्यावापृथिवी इति । संग्रहणी इति सम्ऽग्रहणी । बभूवथुः । वर्चः । गृहीत्वा । पृथिवीम् । [5]अनु । सम् । चरेम[5] । यशसम्[6] । गावः । गोऽपतिम् । उप । तिष्ठन्ति । आऽयतीः । यशः । गृहीत्वा । पृथिवीम् । [5]अनु । सम् । चरेम[5] ॥ ३ ॥

द्यावापृथिवी **द्यावापृथिव्यौ युवां** वर्चसः संग्रहणी **संग्रहण्यौ दात्र्यौ** बभूवथुः **भवतम्** । वर्चः **युवाभ्यां दत्तं तेजो** गृहीत्वा **अवलम्ब्य** पृथिवीम् । **द्युलोकस्य उपलक्षणम् । भूलोकं द्युलोकं च** अनु **उद्दिश्य । लक्षणे अनुः कर्मप्रवचनीयः ।** सं चरेम **संचारं कुर्याम । ततः** गावो **धेनवः** गोपतिम् **गवां स्वामिनं मां** यशसा[7] **अन्नेन कीर्त्या वा सह** उप तिष्ठन्ति **समीपं प्राप्नुवन्तु । ततो वयम्** आयतीः **आगच्छतीर्धेनूः** यशः **च** गृहीत्वा पृथिवीम् अनु सं चरेम **उभयोर्लोकयोः संचारिणो भवेम । यद्वा पृथिवीम् भूलोकमेव अनु सं चरेम इत्युभयत्रार्थः ।**

**व्रजं कृणुध्वं स हि वो नृपाणो [8]वर्मा सीव्यध्वं बहुला[8] पृथूनि ।**
**पुरः [9]कृणुध्वमायसीरधृष्टा मा वः सुस्रोचमसो दृंहता[9] तम् ॥ ४ ॥**

---

१. वर्चसो द्यावापृथिवी RW. पै १,११०,३. २. बभूवथु° Bh,RW.,पै.; बभूवतु° W.; वैप १,२३५१ e अपि द्र. ३. °मनु संचरेम K,Km,RW. पै.; पृथिवीमनुसंचरेम > पृथिवीमनुसंचरेम Dc; °मनुसंचरेम A,Bh,C,D,R,Sm,Cs. ४. यशसां A,R; यशसां Bh,C,D,K,Km,Sm,V; यशसं > यशसं Dc; यशसं Cs; यशसां S, सा.; यशसा RW. पै. ५. अनुऽसंचरेम P,P[2]; अनुऽसंचरेम J. ६. यशसाम् P; यशसाम् P[2],J. ७. वैतु. मंपा. ८. वर्मा° ऋ १०,१०१,८; °सीव्युध्वं बहुला A,C,D,Sm,Dc,Cs; °सीव्यध्वं बहुला > °सीव्युध्वं बहुला Bh; °सीव्युध्वं बहुला R; °सीव्युध्वं बहुला, वर्मा सीव्यध्वं बहुला V. ९. कृणुध्वं मा···सुस्रोच्चमसो बृह° A; °ध्वं मा°···सुश्रोचमसो दृंह° Bh; °ध्वं मा°···सुस्रोच्चमसो दृंह° C,D,Km,V,Dc; °ध्वं मा°···सुस्त्रोच्चमसो दृंह° R; °दृंहता RW. ऋ १०,१०१,८ पै १,११०,४.

व्रजम् । कृणुध्वम् । सः । हि । वः । नृऽपानः । वर्म । सीव्यध्वम्[1] । बहुला । पृथूनि । पुरः । कृणुध्वम् । [2]आयसीः । अधृष्टाः[2] । मा । वः । सुस्रोत् । चमसः । दृंहत । तम् ॥४॥

अस्या ऋचस्त्रेधार्थो नीयते[3] इन्द्रियपरत्वेन ऋत्विक्परत्वेन योद्धृपरत्वेनेति। हे इन्द्रियाणि यूयं व्रजं कृणुध्वम् अस्मिन् मानसयज्ञप्रवर्तनाधिष्ठानभूते शरीरे व्रजम् संघातं कृणुध्वम् संघीभूय तिष्ठत। स हि हि यस्मात् कारणात् स देहः वः युष्माकं नृपाणः नृणां नेतॄणां स्वस्वविषयेषु प्रवर्तमानानां रक्षकः। शरीरसद्भावे हि तेषाम् अवस्थानम्। यद्वा नृणां युष्माकं पानस्थानम्। इन्द्रियाणां स्वस्वविषयप्रवर्तनमेव पानम् इत्युच्यते। 'कृत्यल्युटो बहुलम्' (पा ३,३,११३) इति कर्तरि अधिकरणे वा ल्युट्। वर्म[4] वर्माणि वारकाणि विषयाख्यानि वस्तूनि सीव्यध्वम् संबध्नीत स्वस्वव्यापारविषयान् शब्दादीन् कुरुत। कीदृशानि। बहुला बहुलानि अधिकानि पृथूनि विस्तीर्णानि। तथा आयसीः अयोवत् सारभूता अधृष्टाः परैरधृष्यमाणाः पुरः पूरयित्रीः स्वस्वविषयग्रहणशक्ताः कृणुध्वम् कुरुत। एतत् सर्वं शरीरसद्भावे भवतीति तस्य विनाशाभावो दार्ढ्यं च प्रार्थ्यते। वः युष्माकं संबन्धी चमसः चमसवच्चमसः भोगसाधनभूतो[5] देहः मा सुस्रोत् मा स्रवतु मा विनश्यतु। स्रवतेर्लेङि व्यत्ययेन शपः श्लुः। तं देहं दृंहत दृढीकुरुत स्वावस्थानेनेति इन्द्रियाणि स्तूयन्ते। दृह दृहि वृद्धाविति धातुः।

यद्वा हे ऋत्विजः व्रजं कृणुध्वम् गोष्ठं कुरुत। घर्माशिरादिविनियोगार्थं[6] गोस्थानं कुरुत। स हि स खलु नृपाणः नेतॄणां देवानां पातव्यः देवपानसाधनभूत इति सांनाय्यरूपेण वा आशिररूपेण वा गोपयःप्रभृतिकं देवाः पिबन्ति। वर्म वर्माणि सीव्यध्वम् वर्मवत् प्रधानस्य उभयत आच्छादकत्वात् प्रयाजादीनि प्राच्यानि प्रतीच्यानि च अङ्गानि वर्माणि। तानि सीव्यध्वम् संतानयत। बहुलानि पृथूनीति वर्मविशेषणम्। तथा पुरः पुराणि होतृधिष्ण्यादीनि यष्टव्यानां देवानां वा पुरः शरीराणि अयोवत् सारभूतानि अधृष्टानि च। पुर इति पूरणीया ग्रहा वा विवक्ष्यन्ते। तान् कुरुत। वः युष्मदीयश्चमसो यज्ञाख्यः भक्षणसाधनभूतश्चमस एव वा। चमसपक्षे सामान्येन एकवचनम्। मा सुस्रोत् मा स्रवेत्। तं दृंहत दृढीकुरुत। यथा विकलो न भवति तथा कुरुत।

यद्वा हे योद्धारः व्रजम् संघातात्मकं ग्रामं कुरुत। स खलु युष्मदीयः संग्रामो नृपाणः। नरो योद्धारः पिबन्ति प्रत्यर्थिनां प्राणान् इति नृपाणः। वर्म कवचानि देहावरणानि सीव्यध्वम्। यथा परकीयशस्त्रैः शरीरभेदो न भवति तथा संनह्यध्वम्। आयसीः अयोनिर्मिताः पुरः नगराणि कृणुध्वं शत्रुबाधापरिहारार्थं

---

१. असि। विऽअध्वम् P,P[2],J,Cp. २. मा। आयसीः (अयसीः P[2]) ... अधृष्टा P,P[2],J. ३. °ते व S'. ४. बहु वर्म S'. ५. भागस्यभव° S'. ६. घर्मशिरा° S'.

स्वरक्षार्थं च । एतादृशो वः युष्माकं चमसः अदनसाधनभूतः संग्रामो मा सुस्रोत् माऽपगच्छतु । तं दृंहतेति मन्त्रद्रष्टा ऋषिर्ब्रूते ।

यज्ञस्य चक्षुः प्रभृतिर्मुखं च वाचा श्रोत्रेण मनसा जुहोमि ।
इमं यज्ञं विततं विश्वकर्मणा देवा यन्तु सुमनस्यमानाः ॥ ५ ॥

यज्ञस्य । चक्षुः । प्रऽभृतिः । मुखम् । च । वाचा । श्रोत्रेण । मनसा । जुहोमि ।
इमम् । यज्ञम् । विऽततम् । विश्वऽकर्मणा । आ । देवाः । यन्तु । सुऽमनस्यमानाः ॥ ५ ॥

एषा ऋक् पूर्वमेव (अ २,३५,५) व्याख्याता । चक्षुरादीन्द्रियाणि मनोयज्ञस्य संबन्धित्वेन जुहोमि तत्प्रवणानि करोमि । इमं यज्ञं विश्वकर्मणा विश्वस्रष्ट्रा देवेन विततं विस्तीर्णम् इमं मानसं यज्ञं देवाः सुमनस्यमानाः सुमनस इव आचरन्तः आ यन्तु प्राप्नुवन्तु इति संग्रहार्थः ।

ये देवानामृत्विजो ये च यज्ञिया येभ्यो हव्यं क्रियते[1] भागधेयम् ।
इमं यज्ञं सह पत्नीभिरेत्य[2] यावन्तो देवास्तविषा मादयन्ताम्[3] ॥ ६ ॥

ये । देवानाम् । ऋत्विजः । ये । च । यज्ञियाः । येभ्यः । हव्यम् । क्रियते । भागऽधेयम् ।
इमम् । यज्ञम् । सह । पत्नीभिः । आऽइत्य । यावन्तः । देवाः । तविषाः । मादयन्ताम् ॥ ६ ॥

देवानां मध्ये ये ऋत्विजः ऋतौ काले यष्टारः ऋत्विग्भूता वर्तन्ते । ये च यज्ञिया यज्ञार्हा यष्टव्या वर्तन्ते । येभ्य उभयेभ्यो देवेभ्यः भागधेयम् भागरूपं हव्यं हविः क्रियते दीयते । यावन्तो यत्परिमाणा देवाः सन्ति तावन्तः तविषा महान्तो देवाः पत्नीभिः स्वस्वनारीभिः इन्द्राण्यादिभिः सह इमं यज्ञम् एत्य आगत्य मादयन्ताम् हविःस्वीकारेण तृप्ता भवन्तु ।

इति सप्तमेऽनुवाके चतुर्थं सूक्तम् ।

'त्वमग्ने व्रतपाः' इति सूक्तं दर्शस्य पूर्णमासस्य वा व्यतिक्रमे आज्यहोमे शान्तसमिदाधाने वा विनियुक्तम् । सूत्रितं हि कौशिकेन संहिताविधौ—

---

१. क्रियते A,$B^h$,C,R,$S^m$; कृयते Cs; कृणुते D. २. पत्नीभि° A,K,$K^m$,V,Dc; पत्नीभि° $B^h$,$S^m$; पत्नीभिरैत्य R; पत्नीभि° > पत्नीभि° C; पत्नीभिरै° D; पत्नीभिरैत्य Cs. ३. °तविषा माद° A,R,Cs; °तविषा माद° $B^h$,C,D,$S^m$; °तविषा मादयन्ता V,K,$K^m$; °तविषा मादुयंतां > °तविषा मादयन्तां° Dc; देवाः समिषाः RW.; देवा हविषा W.; के १,१४८३ c अपि द्र.

"[1]एतेनैवामावास्यो व्याख्यातः। ऐन्द्राग्नोऽत्र द्वितीयो[1] भवति । तयोर्व्यतिक्रमे 'त्वमग्ने व्रतपा असि', 'कामस्तदग्रे' (अ १९,५२) इति शान्ताः" (कौसू ६,३५-३७) इति।

**त्वम॑ग्ने व्र॒तपा॒ अ॑सि [2]दे॒व आ[2] मर्त्ये॒ष्वा । त्वं य॒ज्ञेष्वीड्य॑ः ॥ १ ॥**

त्वम् । अ॒ग्ने॒ । व्र॒त॒ऽपाः । अ॒सि॒ । दे॒वः[3] । [4]आ । मर्त्ये॑षु[4] । आ । त्वम् । य॒ज्ञेषु॑ । ईड्यः॑ ॥१॥

हे अग्ने त्वं व्रतपाः **व्रतस्य कर्मणः पालयिता** असि **भवसि** । मर्त्येषु **मरणधर्मसु मनुष्येषु** देवः **द्योतमानः जाठराग्निरूपः** आ **अभिभवसि समन्ताद् व्याप्नोषि। द्वितीय** आ**कारः आभिमुख्यार्थो वा। किं च** यज्ञेषु **दर्शपूर्णमासादिषु** त्वम् **एव** ईड्यः **स्तोतव्यो भवसि।**

**यद् वो॑ व॒यं प्र॑मि॒नाम॑ व्र॒तानि॑ वि॒दुषां॑ दे॒वा अवि॑दुष्टरासः ।**
**अ॒ग्निष्टद् वि॒श्वादा[5] पृ॑णातु[6] वि॒द्वान्त्सोम॑स्य[7] यो ब्रा॒ह्मणाँ[8] आ॑वि॒वेश॑ ॥२॥**

यत् । वः॒ । व॒यम् । प्र॒ऽमि॒नाम॑ । व्र॒तानि॑ । वि॒दुषा॑म् । दे॒वाः[9] । अवि॑दुःऽतरासः[10] । अ॒ग्निः । तत् । वि॒श्व॒ऽअत्[11] । आ । पृ॒णा॒तु॒ । वि॒द्वान् । सोम॑स्य । यः । ब्रा॒ह्म॒णान् । आ॒ऽवि॒वेश॑ ॥ २ ॥

हे देवाः विदुषाम् **जानतां** वः **युष्माकं** व्रतानि **कर्माणि** अविदुष्टरासः **अत्यर्थं[12] कर्ममार्गम् अविद्वांसो** वयं यत् प्रमिनाम **प्रकर्षेण हिनसाम विनाशितवन्तः।** 'मीनातेर्निगमे' (पा ७,३,८१) **इति ह्रस्वः।** तद् विश्वम्[13] **लुप्तकर्म** विद्वान् **जानानः** अग्निः आ पृणाति[13] **आपूरयति अविकलं करोति।** यः **अग्निः** सोमस्य **यष्टृत्वेन संबन्धिनो** ब्राह्मणान् आविवेश **आविष्टः अभिमुखं गतवान् भवति।**

**आ दे॒वाना॒मपि॒ पन्था॑मगन्म॒ यच्छ॒क्रवा॑म॒ तद॑नु॒प्रवो॑ढुम्[14] ।**
**अ॒ग्निर्वि॒द्वान्त्स य॑जा॒त् [15]स इद्धोता॒[15] सो॑ऽध्व॒रान्त्स[16] ऋ॒तून् क॑ल्पयाति[17] ॥३॥**

---

१. एतेनामावास्या व्याख्याता ऐंद्राग्नौत्र द्वितीया S'. २. दे॒वा आ॒ A,B^h,C; दे॒वा आ D,K,K^m,R,V,Cs,WM.; दे॒व आ > दे॒वा आ Dc. ३. दे॒वाः P,P^2,J,WM. ४. आ॒ऽमर्त्ये॑षु P,J,WM. ५. विश्व॒दा A,B^h,D,S^m,Cs; विश्व॒दा > वि॒श्वादा C,Dc; विश्व॒मा RW. ऋ १०,२,४ तै १,१,१४,४ मै ४,१०,२ काठ ३५,६. ६. पृ॑णाति ऋ. तै. मै. काठ. पै १९,४७,५. ७. °म॑श्च RW. ऋ १०,१६,६. ८. ब्रा॒ह्म॒णाँ R,S^m; ब्रा॒ह्म॒णां C,Dc. ९. दे॒वाः P. १०. अवि॑ऽदुस्तरासः P,P^2,J. ११. वि॒श्व॒ऽअत् P,P^2,J,WM. १२. अत्यर्थं S'. १३. वैदु. मंपा. १४. तद॒नु प्रवो॑ढु (व्ह्ळु ऋ.) म् ऋ १०,२,३ तै. मै. काठ २,१५. १५. स्रेदु होता॒ ऋ. तै. मै. काठ. S. १६. सो॑ऽध्व॒रा° C,K^m,R,S^m,V,Dc,Cs. १७. पारयाति पै १९,४७,६.

आ । देवानाम् । अपि । पन्थाम् । अगन्म । यत् । शक्नवाम । तत् । अनुऽप्रवोढुम् ।
अग्निः । विद्वान् । सः । यजात् । सः । इत् । होता । सः । अध्वरान् । सः । ऋतून् । कल्पयाति ॥

देवानाम् **यष्टव्यानां** पन्थाम् **पन्थानं येन देवान् प्राप्नोति तं पन्थानम्** अपि आ अगन्म । **तत्र प्रविष्टा इत्यर्थः । किमर्थम् ।** यद् **वयम् अनुष्ठानं** शक्नवाम **शक्नुयाम** तद् **अनुष्ठानम्** अनुप्रवोढुम् **अनुक्रमेण प्रापयितुं कर्तुम् देवानां पन्थानम् अनुगताः स्म इति । गमेर्लुङि च्लेर्लुकि** 'मो नो धातोः' ( पा ८,२,६४ ) **इति मकारस्य नकारः । वहतेस्तुमुनि** 'सहिवहोरोदवर्णस्य' ( पा ६,३,११२ ) **इति अवर्णस्य ओकारः । अथ** सोऽग्निः विद्वान् **तं पन्थानम्** यजात् **यजतु देवान्** । सेत्[1] **स एव** होता **मनुष्याणाम् देवानाम् आह्वाता वा** स **एव** अध्वरान् **हिंसारहितान् यज्ञान्** स ऋतून् **यज्ञकालांश्च** कल्पयाति **कल्पयतु ।**

**इति सप्तमेऽनुवाके पञ्चमं सूक्तम् ।**

**वाङ्म आसन्नसोः[2] प्राणश्चक्षुरक्ष्णोः[3] श्रोत्रं कर्णयोः ।**
**अपलिताः[4] केशा[5] अशोणा दन्ता[6] बहु[7] बाह्वोर्बलम्[8] ॥ १ ॥[9]**

वाक् । मे । [10]आसन् । नसोः[10] । प्राणः । चक्षुः । अक्ष्णोः[11] । श्रोत्रम् । कर्णयोः ।
अपलिताः[4] । केशाः[12] । [13]अशोणाः । दन्ताः[13] । बहु[14] । बाह्वोः[15] । बलम् ॥ १ ॥

**[16]ऊर्वोरोजो जङ्घयोर्जवः पादयोः ।**
**प्रतिष्ठा अरिष्टानि मे सर्वात्मानिभृष्टः[16] ॥ २ ॥[9]**

---

१. वैतु. मंपा. २. आस्यन्नसो A; आस्यन्नसोः Bh,C,D,Km,R,V,Dc; आस्यं नसोः Sm; आस्यन्नसो Cs. ३. °रक्ष्योः K,Km,V,Dc; °रक्षोः Bh,C,D,R,Sm,Cs. ४. अपलिता A,Bh,C,D,R,Sm,Cs,P,P२,J; अपलिता K,Km,V,Dc. ५. केशा A,C,D,R,Sm,Cs; केशा Dc. ६. शोणदिता A,Bh,C,D,K,Km,R,Sm,V,Dc,Cs. ७. बहु A,Bh,D, K,Km,R,Sm,V,Dc,Cs; वहु C. ८. बाह्वोर्बलं A,Bh,C,D,K,Km,R,Sm,V,Dc,Cs. ९. वाङ् म आसन् (पाप्प. आस्ये) नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि ( °रिष्टानि मेऽङ्गानि पाप्प. ) तनूस्तनुवा मे सह तै ५,५,९,२ पाप्प १,३,२५. १०. आस्यम् । नसोः P,P२,J. ११. अक्षोः P; अक्ष्योः P२,J. १२. केशा P,J; केशा P२. १३. शोणदिता P,P२,J. १४. बहु P२,J; वहु P. १५. बाह्वोः P,P२,J. १६. ऊर्वोरोज जंघयोर्जवः पादयोः । प्रतिष्ठा ( प्रतिष्ठा R ) अरिष्टानि मे सर्वान् मातिपृष्टाः Bh, R; ऊर्वोरोज जंघयोर्जवः पादयोः । प्रतिष्ठा ( प्रतिष्टा Cs ) अरिष्टानि मे सर्वान् मातिपृष्टा C, Cs; ऊर्वोरोज जंघयोर्जवः पादयोः । प्रतिष्टा अरिष्टानि मे सर्वान् माति पृष्टाः D; ऊर्वोरोव जंघयोर्जवः पादयोः । प्रतिष्ठा अरिष्टानि मे सर्वान् मातिपृष्ठा Km,V,Dc; ऊर्वोरोज जंघयोर्जवः पादयोः । प्रतिष्टा अरिष्टानि मे सर्वात्मानिपृष्टाः Sm.

[1]ऊर्वोः । ओजः । जङ्घयोः । जवः । पादयोः ।
प्रतिऽस्था । अरिष्टानि । मे । सर्वा । आत्मा । अनिऽभृष्टः ॥ २ ॥

**तनूस्तन्वा मे [2]सहे दतः[3] सर्वमायुरशीय ।**
**स्योनं मे सीद पुरुः पृणस्व पवमानः[3] स्वर्गे[4] ॥ १ ॥**

तनूः । तन्वा । मे । सहे[5] । दतः[6] । सर्वम् । आयुः । अशीय ।
स्योनम् । मे । सीद । पुरुः । पृणस्व । पवमानः । स्वःऽगे ॥ १ ॥

**प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ।**
**[7]प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये[7] ॥ १ ॥**

प्रियम् । मा । कृणु । देवेषु । प्रियम् । राजऽसु । मा । कृणु ।
[8]प्रियम् । सर्वस्य । पश्यतः । उत । शूद्रे । उत । आर्ये[8] ॥ १ ॥

**उत् तिष्ठ ब्रह्मणस्पते देवान् यज्ञेन बोधय ।**
**आयुः प्राणं प्रजां पशून्[9] कीर्तिं यजमानं च वर्धय ॥ १ ॥**

उत् । तिष्ठ । ब्रह्मणः[10] । पते । देवान् । यज्ञेन । बोधय ।
आयुः । प्राणम् । प्रऽजाम् । पशून्[9] । कीर्तिम् । यजमानम् । च । वर्धय ॥ १ ॥[11]

'अग्ने समिधम्' **इति सूक्तेन ब्रह्मचारिकर्तव्ये अग्निकार्ये प्रत्यृचं चतस्रः समिध आदध्यात् । सूत्रितं हि संहिताविधौ**—"'इदम् आपः प्र वहत' ( अ ७,९४,३ ) इति पाणी प्रक्षालयते । 'सं मा सिञ्चन्तु' ( अ ७,३४ ) इति त्रिः पर्युक्षति[12] । 'अग्ने[13] समिधम् आहार्षम्' ( अ १९,६४ ) इत्यादधाति चतस्रः" ( कौसू ५७,२४-२६ ) **इति ।**

---

१. ऊर्वोः । ओजं । जंघयोः । जवः । पादयोः । प्रतिऽस्था । अरिष्टानि । मे । सर्वान् । मा । अतिऽपृष्ठा । P²; ऊर्वोः । ओजः । जंघयोः । जवः । पादयोः । प्रतिऽस्था । अरिष्टानि । मे । सर्वान् । मा ( मा J ) । अतिऽपृष्ठाः P,J. २. सहे° V; सहे१° Km; सहे° Bh,C; सहे३° D,R,Sm; सहे१° Dc; सहेरदताः Cs. ३. पवमान Bh. ४. स्वर्गेः Cs. ५. सहे P,P²; सहे J. ६. दंताः P,P²,J. ७. प्रियं सर्वस्य पश्यतोत शूद्र उतार्ये A,D,Sm; प्रियं सर्वस्य पश्यतोत शूद्रमुतार्ये Bh,C; प्रियं सर्वस्य पश्यतोत शूद्र उतार्ये K,Km, V,Dc; प्रियं सर्वस्य पश्यतोत शूद्र उतार्ये R,Cs. ८. प्रियम् । सर्वस्य । पश्यत (पश्यतः > पश्यत J ) । उत । शूद्रम् । उत । आर्ये P,P²,J. ९. पशुं Bh,Sm,Dc,Cs; पशूं C,D,R; पशून् Km,V; पशुम् P,P²,J. १०. ब्रह्मणः J; ब्रह्मणः P. ११. पूर्वोक्ताः पञ्च मन्त्रा न सन्ति S, १२. पर्युक्ष्यति S'. १३. अग्नये S'.

[1]अग्ने समिधमाहार्षं[1] बृहते जातवेदसे ।
स मे श्रद्धां च मेधां च जातवेदाः प्र यच्छतु ॥ १ ॥

अग्ने । सम्ऽइधम् । आ । अहार्षम् । बृहते । जातऽवेदसे ।
सः । मे । श्रद्धाम् । च । मेधाम् । च । जातऽवेदाः[2] । प्र । यच्छतु ॥ १ ॥

बृहते **महते** जातवेदसे **जातानां वेदित्रे जातैः प्राणिभिर्ज्ञायमानाय[3] जातधनाय वा** अग्नये[4] समिधम् **समिन्धनसाधनं काष्ठम्** आहार्षम् **आहृतवान् अस्मि** । सः **समिधा समिद्धो** जातवेदा **अग्निः** मे **मह्यं** श्रद्धां मेधाम् **अधीतवेदधारणां** च प्र यच्छतु **ददातु** ।

इध्मेन त्वा जातवेदः समिधा वर्धयामसि ।
तथा त्वमस्मान् वर्धय प्रजया च धनेन च[5] ॥ २ ॥

इध्मेन । त्वा । जातऽवेदः । सम्ऽइधा । वर्धयामसि ।
तथा । त्वम् । अस्मान् । वर्धय । प्रऽजया । च । धनेन । च ॥ २ ॥

**हे** जातवेदस्त्वा **त्वाम्** इध्मेन **इन्धनसाधनेन** समिधा **काष्ठेन** वर्धयामसि **प्रवृद्धं कुर्मः** । तथा **तेन प्रकारेण** त्वम् अस्मान् **समिदाधातॄन्** प्रजया धनेन च वर्धय । दीर्घम्[6] आयुः[6] च मे[6] कृणोतु[6] **करोतु । इति चरमः पादः परोक्षवादः । भवच्छब्दाध्याहारो वा ।**

यदग्ने [7]यानि कानि[7] चिदा[8] ते [9]दारूणि दध्मसि[9] ।
सर्वं तदस्तु [10]मे शिवं[10] [11]तज्जुषस्व यविष्ठ्य[11] ॥ ३ ॥

यत् । अग्ने । यानि । कानि । चित् । आ । ते । दारूणि । दध्मसि ।
सर्वम् । तत् । अस्तु । मे । शिवम् । तत् । जुषस्व । यविष्ठ्य[12] ॥ ३ ॥

---

१. अग्ने समिधमहा° A,D,R,S^m,Cs; अग्ने समिधमाह° B^h; अग्ने समिधमाहा° K^m,V; अग्नये समिधमाहा° K, आपमं २,६,२; अग्ने समिधमाहा° > अग्ने समिधमाहा° Dc; अग्नये° S, सा. शांगृ २,१०,३ आगृ १,२१,१ पागृ २,४,३ हिगृ १,७,२ मंब्रा १,६,३२. २. °वेदः P. ३. °भिजातमानाय S'. ४. वेतु. मंपा. ५. दीर्घमायुः कृणोतु मे इत्यधिकम् ( लिखित्वापि लोपयति Dc; प्रान्ते पश्चात् संयोजयति S^m ) D,S^m,Dc,S. ६. वैतु. मंपा. ( तु. टि. ५ ). ७. कानि कानि ऋ ८,१०२,२० मा ११,७३. ८. वा ते ४,१,१०,१ मै २,७,७. ९. दारूणि दध्मसि A,B^h,C,D,K,K^m,R,S^m,V,P,P*,J; दारूणि दध्मसि मा. १०. ते घृतं मा. मै' ११. ता जुषस्व° ऋ.; °यविष्ठ D,K^m,V,Dc,S, सा.; °स्व यविष्ठ्य R,Cs. १२. यविष्ठ्य P.

हे अग्ने ते **तुभ्यं** यानि कानि चिद् दारूणि **यज्ञियानि अयज्ञियानि वा काष्ठानि** यद् आ दध्मसि **आदध्मः** तत् सर्वं मे **मम** शिवम् **श्रेयःप्रदम्** अस्तु **भवतु**। हे यविष्ठ[1] **युवतम**। 'स्थूलदूरयुव°' (पा ६,४,१५६) **इति युवशब्दस्य यणादिलोपः। तादृश अग्ने** तत् **आहितं काष्ठजातं** जुषस्व **सेवस्व**।

**एतास्ते अग्ने 'समिधस्त्वमिद्धः समिद् भव'।**
**आयुरस्मासु[3] धेह्यमृतत्वमाचार्याय[4] ॥ ४ ॥**

एताः। ते। अग्ने। सम्ऽइधः। [5]त्वम्। इद्धः[5]। सम्ऽइत्। भव।
आयुः। अस्मासु। धेहि। अमृतऽत्वम्। आऽचार्याय ॥ ४ ॥

हे अग्ने ते **तुभ्यम्** एताः समिध **आहृताः। ताभिः समिद्भिः** त्वम् इद्धः **प्रज्वलितः सन्** समित् भव। **ततः** अस्मासु **समिध आहितवत्सु** आयुः **जीवनं** धेहि। आचार्याय **अस्मदुपाध्यायाय उपनयनकर्त्रे गायत्रीप्रदात्रे वेदाध्यापकाय** अमृतत्वम् **अविनाशं च धेहि प्रयच्छ।**

**इति सप्तमेऽनुवाके षष्ठं सूक्तम्।**

'हरिः सुपर्णः', 'अयोजालाः' (अ १९,६६), 'पश्येम शरदः'[6] (अ १९,६७) **इति एकर्चानां त्रयाणां सूक्तानां सूर्योपस्थाने लैङ्गिको विनियोगः।**

**हरिः सुपर्णो दिवमारुहोऽर्चिषा ये त्वा दिप्सन्ति दिवमुत्पतन्तम्।**
**[7]अव तां[7] जहि हरसा '[8]जातवेदोऽबिभ्यदुग्रोऽर्चिषा[8] दिवमा रोह सूर्य ॥१॥**

हरिः। सुऽपर्णः। दिवम्। आ। अरुहः। अर्चिषा। ये। त्वा। दिप्सन्ति। दिवम्।
उत्ऽपतन्तम्। अव। तान्। जहि। हरसा। जातऽवेदः। [9]अबिभ्यत्। उग्रः[9]। अर्चिषा। दिवम्।
आ। रोह। सूर्य ॥ १ ॥

---

१. वैतु. मंपा. २. °स्त्वामिद्धं सोसुमिद्भवः A,Bʰ,V; °स्त्वामिद्धं सोसुमिद्भव C; °स्त्वामिद्धं सोसुमिद्भव D,R; °स्त्वामिद्धसोसुमिद्भव K,Kᵐ; °स्त्वा विद्धं सोसुमिद्भव Sᵐ; °स्त्वामिद्धंसोसुमिद्भव Cs; °स्त्वामिद्धांसोसुमिद्भव > °स्त्वामिद्धसोसुमिद्भव Dc; °स्त्वमिद्धः समिद्भव S; °स्ताभिर्धेक्षो समिद्भव RW. ३. °स्मास्वा RW. ४. धेह्यमृतत्वमा° A; धेह्यमृतमा° Bʰ; धेह्यमृतं त्वमा° D; धेह्यमृतत्व आ शंसय RW. ५. त्वाम्। इत्। हुंसः P,P², J. ६. मूको. वैदिकाश्च अष्टानां मन्त्राणां सूक्तं मन्यन्ते। 'पश्येमेत्यष्टौ सौर्याः प्राजापत्या गायत्र्य इति' इति ब्रुवाणा सर्वानुक्रमणी चापि मन्यते. ७. अवतां C,D; अवतान् R; अवतान् Cs. ८. जातवेदो बिभ्यदुग्र्यो° Sᵐ; जातवेदो बिभ्यदुग्रो° A,Bʰ,C,D,K,Kᵐ,R,V,Dc,Cs; °दुग्रोऽर्चिषा RW. ९. बिभ्यत्। उग्रः (उग्रः > उग्रः J) P,P²,J.

हे सूर्य हरिः। तमो हरतीति हरिः। सुपर्णः सुपतनस्त्वम् अर्चिषा तेजसा दिवम् द्युलोकम् आरुहः। रोहतेर्लुङि 'कृमृदृरुहिभ्यश्छन्दसि' (पा ३,१,५९) इति च्लेरङ्। ङित्त्वाद् गुणाभावः। दिवम् द्युलोकम् उत्पतन्तम् उद्गच्छन्तं त्वा त्वां ये शत्रवः मन्देहादयो दिप्सन्ति दम्भितुं तिरस्कर्तुं प्रतिरोद्धुम् इच्छन्ति तान् प्रतिबन्धकान् शत्रून् हे जातवेदः जातैः प्राणिभिर्ज्ञायमान यद्वा जातानां प्राणिनां कर्माणि तत्कर्मफलं च जानन्। सायंकाले सूर्यस्याग्नावनुप्रवेशात् जातवेदःशब्देन सूर्यस्य व्यवहारः। तथाविध त्वं हरसा शत्रुनिर्हारकेण तेजसा अव जहि यथा अवस्तात् ते भवन्ति तथा घातयेत्यर्थः। ततः अविभ्यत् शत्रुभ्यो भीतिम् अकुर्वन् उग्रः उद्गूर्णबलः सन् हे सूर्य अर्चिषा तेजसा दिवम् द्युलोकम् आ रोह आतिष्ठ।

इति सप्तमेऽनुवाके सप्तमं सूक्तम्।

[1]'अयोजालाः' इत्येकर्चस्य सूक्तस्य सूर्योपस्थाने लैङ्गिको विनियोगः।

अयोजाला असुरा मायिनोऽयस्मयैः पाशैरङ्किनो[2] ये चरन्ति।
तांस्ते रन्धयामि हरसा जातवेदः सहस्रऋष्टिः[3] सपत्नान् प्रमृणन् पाहि[4] वज्रः॥१॥

अयःऽजालाः। असुराः। मायिनः। अयस्मयैः। पाशैः। अङ्किनः। ये। चरन्ति। तान्। ते। रन्धयामि। हरसा। जातऽवेदः। सहस्रऽऋष्टिः[5]। सऽपत्नान्। प्रऽमृणन्। पाहि[6]। वज्रः॥ १ ॥

अयोजालाः। जालम् आनायः। अयोमयवागुरावन्तो मायिनः कुटिला ये असुराः सुरविद्वेषिणः अयस्मयैः पाशैः। 'अयस्मयादीनि च्छन्दसि' (पा १,४,२०) इति भसंज्ञत्वेन निपातनात् पदसंज्ञानिबन्धनरुत्वाभावः। एतादृशैः[7] पाशैः अङ्किनः लक्षणवन्तः पाशहस्ताः चरन्ति। सत्कर्मकारिणो हिंसितुम् इति शेषः। तान् तथाविधान् असुरान् हे जातवेदः ते तव हरसा तेजसा रन्धयामि। 'रध्यतिर्वशगमने' (नि १०,४०) इति यास्कः। वशयामि। पुरुषव्यत्ययो वा। रन्धय वशयेति। स्वाधीनान् कृत्वा

---

१. इतः पूर्वं जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥ (तु. ऋ १,९९,१) इति अधिको मन्त्रः ६६ तमसूक्तत्वेन P[3],M,W. २. पाशैरङ्किनो A,B[h]. ३. सहस्रभृष्टिः A,RW. सहस्रहृष्टिः B[b]; सहस्रहृष्टिः C,R,S[m],V,Cs; सहस्रहुष्टिः K[m]; सहस्रहृष्टिः D; सहस्ररिष्टिः > सहस्रहृष्टिः Dc; °भृष्टिः पै १६,१५०,५. ४. याहि A,K,K[m],V,Dc; याहि RW.; याहि पै १६,१५०,५. ५. सहस्रऽहृष्टि P; सहस्रऽहृष्टिः P[2]; सहस्रऽहृष्टिः J. ६. याहि P,P[2],J. ७. त एतादृशैः S',

**च** सहस्रऋष्टिः । **ऋष्टिरायुधविशेषः । सहस्रसंख्याकायुधविशेषयुक्तो** वज्रः । **अर्श-आदित्वाद् मत्वर्थीयः अच्प्रत्ययः । वज्रवान् त्वं** सपत्नान् **शत्रून्** प्रमृणन् **प्रकर्षेण हिंसन्** पाहि **पालय अस्मान् उपस्थातॄन् ।**

**इति सप्तमेऽनुवाकेऽष्टमं सूक्तम् ।**

'पश्येम शरदः शतम्' **इति सूक्तस्य सूर्योपस्थाने लैङ्गिको विनियोगः ।**

**पश्येम शरदः शतम् ॥ १ ॥**
पश्येम । शरदः । शतम् ॥ १ ॥

**जीवेम शरदः शतम् ॥ २ ॥**
जीवेम । शरदः । शतम् ॥ २ ॥

**बुध्येम[1] शरदः शतम् ॥ ३ ॥**
बुध्येम[2] । शरदः । शतम् ॥ ३ ॥

**रोहेम शरदः शतम् ॥ ४ ॥**
रोहेम । शरदः । शतम् ॥ ४ ॥

**पूषेम[3] शरदः शतम् ॥ ५ ॥**
पूषेम । शरदः । शतम् ॥ ५ ॥

**भवेम शरदः शतम् ॥ ६ ॥**
भवेम । शरदः । शतम् ॥ ६ ॥

**भूषेम[4] शरदः शतम् ॥ ७ ॥**
भूषेम[4] । शरदः । शतम् ॥ ७ ॥

**[7]भूयसीः शरदः[5] शतात्[6] ॥८॥[7]**
भूयसीः[8] । शरदः । शतात्[9] ॥ ८ ॥

**हे सूर्य त्वां** शरदः शतम् **शतसंख्याकान् संवत्सरान्** पश्येम [१] । **अत एव** शतं शरदो जीवेम [२] । बुध्येम । **व्यत्ययेन परस्मैपदम् । बुध्येमहि कार्यजातम्** [३] । रोहेम **उत्तरोत्तरं प्ररूढाः प्रवृद्धा भवेम** [४] । पूषेम । **शतसंवत्सरपरिमितकालपर्यन्तं पुष्टिं लभेमहि । पूष पुष्टौ । भौवादिकः** [५] । भवेम । **भवनं संभवनम् । पुत्रादिप्रवाहेण संभूताः स्याम** [६] । भूयेम[६] **भूयास्म । इति भवनम् आशास्यते । आशीर्लिङि छान्दसी रूपसिद्धिः** [७] । **न केवलं शतसंख्याकाः शरदः,** शताद् भूयसीः **अधिकाः** शरदः **अनेककालपर्यन्तम् ।** 'कालाध्वनोः०' ( पा २,३,५ ) **इति सर्वत्र द्वितीया** [८] ।

**इति सप्तमेऽनुवाके नवमं सूक्तम् ।**

---

१. बुद्धेम Bh,C,D,K,R,Sm,V,Dc,WM.; बुत्धेम Km; बुधेम Cs. २. बुद्धेम P,P²; बुधेम J; इतः परं काण्डान्तम् स्वराचाङ्कयति P. ३. पुष्येम RW. ४. तु. RW.; वैतु. शंपा. सात. सा. भूयेम. ५. भूयसी श° A,C,D,R,Cs,WM.; भूयासी श° K,Km,V,WM.; भूयसी शरदः Sm; भूयसी शरदः > भूयासी शरदः Dc. ६. शतम् S. ७. S एकर्चं सूक्तं मन्यते ( तु. पृ १९९९ टि ६ ). ८. भूयसी P,P²,J. ९. वैत. मंपा.

'अव्यसश्च' इति एकर्चं सूक्तं श्रौतस्मार्तसकलकर्मादौ जपेत् उपाकर्मणि च । सूत्रितं हि 'अभिजिति शिष्यान् उपनीय' इति प्रक्रम्य—"'अव्यसश्च' इति जपित्वा 'सावित्रीम् ब्रह्म जज्ञानम्' (अ ४,१,१) इत्येकां[1] त्रिषप्तीयं (अ १,१) च पच्छो वाचयेत्" (कौसू १३९,९;१०) इति ।

अव्यसश्च[2] व्यचसश्च[3] बिलं वि[4] ष्यामि मायया ।
[5]ताभ्यामुद्धृत्य वेदमथ[5] कर्माणि कृण्महे[6] ॥ १ ॥

अव्यसः[7] । च । व्यचसः[8] । च । बिलम् । [9]वि । स्यामि[9] । मायया ।
ताभ्याम् । उत्ऽहृत्य । वेदम् । अथ । कर्माणि । कृण्महे ॥ १ ॥

व्यचसः । व्यचतिर्व्याप्तिकर्मा । व्याप्तस्य सर्वशरीरव्यापकस्य व्यानवायोः समष्टिरूपस्य अव्यसः अव्यचसः । वर्णलोपश्छान्दसः । अव्याप्तस्य व्यष्टिरूपस्य प्राणात्मकस्य वायोः । परस्परसमुच्चयार्थौ चकारौ । 'व्यचेः कुटादित्वम् अनसीति वक्तव्यम्' (पावा १,२,१) इति पर्युदासाद् ङित्त्वाभावेन संप्रसारणाभावः । तयोः बिलम् बिलवद्बिलं मूलाधारं मायया । कर्मनामैतत् । कर्मणा अभिभवनव्यापारेण वि ष्यामि विवृतं करोमि । 'स्यतिरुपसृष्टो विमोचने' (नि १,१७) इति नैरुक्ताः । शब्दं विवक्षोः पुरुषस्य प्रयत्नजनितवायुवशाद् मूलाधारे स्पन्दो भवतीति आगमिका आहुः—'मूलाधारात् प्रथमम् उदितो यस्तु भावः पराख्यः' इति । ताभ्यां व्यानप्राणाभ्याम् । करणे तृतीया । वेदम् अक्षरात्मकमन्त्रसंघम् उद्धृत्य बिलरूपाद् मूलाधारात् परापश्यन्तीमध्यमावैखरीक्रमेण उद्गमय्य अथ अनन्तरं कर्माणि श्रौतानि स्मार्तानि च कृण्महे कुर्महे । यद्वा अव्यचसः अव्याप्तस्य परिच्छिन्नस्य जीवात्मनः व्यचसः व्याप्तस्य परमात्मनश्च बिलम् उपलब्धिस्थानं हृदयं मायया अज्ञानेन वि ष्यामि विमुक्तं विरहितं करोमि । हृदये अज्ञानावृते सति कर्तव्याकर्तव्यविभागो न भवति । अतः कार्याकार्यविभागैकज्ञानपरिपन्थिनं मूढभावम् अपसारयामीत्यर्थः । ताभ्यां जीवपरमात्मभ्यां वेदम् चिकीर्षितकर्मविषयं ज्ञानम् उद्धृत्य संपाद्य अथ अनन्तरं कर्माणि नित्यनैमित्तिककाम्यानि कृण्महे कुर्महे । चिकीर्षितस्य कर्मणः स्वरूपम् तत्साधनकलापम् तदङ्गकलापम् तत्फलम् तत्कर्मप्रतिपादकमन्त्रब्राह्मणयोरर्थं च विदित्वा कर्मारब्धव्यम् इत्युक्तं भवति ।

इति सप्तमेऽनुवाके दशमं सूक्तम् ।

---

१. इत्येतेषा S'. २. अव्यचश्च P[2]; अव्यचश्च RW.; वैप १,४७८ m अपि द्र. ३. व्यऽचसश्च A,C,R; व्यचसश्च P[3]; व्यचसश्च RW. ४. बि B[b],C,K,K[m],S[m],V, Cs,MW. ५. °त्य वेदमथ B[b]; °त्य वेदमथ S[m]; °त्य वेदमथ Cs. ६. कृण्महे A,R,S[m],WM.; कृण्महे > कृण्महे Dc. ७. अविंऽअसः P,P[2],J,WM. ८ विऽअचसः J; विऽअचसः P,P[2]. ९. बिष्यामि P,P[2]; विष्यामि WM.

'जीवा स्थ' इति [1]पञ्चमन्त्रात्मकेन सूक्तेन आयुष्कामः अद्भिराचम्य आत्मानम् अनुमन्त्रयेत । सूत्रितं हि—" 'शुद्धा न आपः' ( अ १२,१,३० ) इति निष्ठीव्य जीवाभिः (अ १९,६९) आचम्य । 'एहि जीवम्' ( अ ४,९ ) इत्याञ्जनमणिं बध्नाति" (कौसू ५८,७;८) इति ।

[2]जीवा स्थ[2] जीव्यासं सर्वमायुर्जीव्यासम् ॥ १ ॥

जीवाः । स्थ । जीव्यासम् । सर्वम् । आयुः । जीव्यासम् ॥ १ ॥

[3]उपजीवा स्थोप[3] जीव्यासं[4] सर्वमायुर्जीव्यासम् ॥ २ ॥

उपऽजीवाः[5] । स्थ । उप । जीव्यासम्[6] । सर्वम् । आयुः । जीव्यासम् ॥ २ ॥

[7]संजीवा स्थ[7] [8]सं जीव्यासं[8] सर्वमायुर्जीव्यासम् ॥ ३ ॥

सम्ऽजीवाः । स्थ । [9]सम् । जीव्यासम्[9] । सर्वम् । आयुः । जीव्यासम ॥ ३ ॥

[10]जीवला स्थ[10] जीव्यासं सर्वमायुर्जीव्यासम् ॥ ४ ॥

जीवलाः । स्थ । जीव्यासम् । सर्वम् । आयुः । जीव्यासम् ॥ ४ ॥

इन्द्र[11] जीव सूर्य[12] जीव[13] देवा जीवा[14] जीव्यासमहम् ।[15]
सर्वमायुर्जीव्यासम् ॥ १ ॥[1]

इन्द्र । जीव । सूर्य । जीव । देवाः । जीवाः । जीव्यासम् । अहम् । सर्वम् । आयुः । जीव्यासम् ॥

निगदव्याख्यातम् इदम् । 'इन्द्र जीव सूर्य जीव देवा जीवाः' इति मन्त्रे समाम्नाता इन्द्रसूर्यदेवाः संबोध्यन्ते । हे इन्द्रादयो यूयं जीवाः जीवनवन्तः आयुष्मन्तः स्थ भवथ । भवदनुग्रहाद् अहमपि जीव्यासम् जीवनवान् आयुष्मान्

१. सा. ७० तमं सूक्तम् ६९ तमे एव सूक्ते मन्यते. २. जीवस्तु पै १९,५४,११. ३. उप जीवा° A,B^h,C,D,K^m,R,S^m,V,Dc,Cs,WM.; उपजीवस्तूप पै १९,५४,१२. ४. जीव्यासं A,B^h,C,K^m,R,S^m,V,Dc,Cs. ५. उप । जीवाः P^2,J,WM. ६. जीव्यासम् P; जीव्यासम् P^2; जीव्यासम् > जीव्यासम् J. ७. °वा स्थ A,B^h,D,K,K^m,R,V, Cs; संजीवा स्थ C; संजीवा स्थ S^m; संजीवा स्थ > संजीवा स्थ Dc; संजीवस्तु पै १९,५४,१३. ८. संजीव्यासं A,B^h,D,K,K^m,R,V,C; संजीव्यासं Cs; संजीव्यासं S^m; संजीव्यासं > संजीव्यासं Dc. ९. सम्ऽजीव्यासम् P^2; सम्ऽजीव्यासम् J. १०. जीवलस्तु पै १९,५४,१४. ११. इन्द्र B^h,D,S^m. १२. सूर्य B^h,D,S^m. १३. जीव S^m; जीव C. १४. जीवल RW.; वैप १,१३७८ c अपि द्र. १५. नेह विरामः RW.

भूयासम् । अनेनाचमनकर्मणा इति विनियोगाद्[1] अवगम्यते । कतिपयकालावस्थानमपि जीवनं भवेद् इति तत्राह—सर्वम् इति । सर्वं संपूर्णं शतसंवत्सरपरिमितम् आयुर्जीव्यासम् प्राणान् धारयेयम् । एवम् उत्तरे मन्त्रा व्याख्येयाः [१]। उपजीव्याः[2] । उपशब्दः अधिकार्थः । अधिकं जीवनवन्तः । उपजीवयन्ति संनिहितान् भजकान् आयुष्मतः कुर्वन्तीति वा उपजीव्याः [२] । संजीव्याः[2] समीचीनजीवनवन्तः जीवनकाले एकः क्षणोऽपि वैयर्थ्येन[3] न नीयते[4] किं तु परोपकारित्वेनेति आयुषः सम्यक्त्वम् [३] । जीवलाः जीवः प्राणधारणम् । भावे घञ् । 'सिध्मादिभ्यश्च' (पा ५,२,९७) इति मत्वर्थीयो लच् [४] । हे इन्द्र परमैश्वर्यसंपन्न सर्वेन्द्रियप्रकाशक त्वं जीव आयुष्मान् भव । हे सूर्य सर्वस्य प्रसवितस्त्वं जीव । हे देवाः इन्द्रसूर्यव्यतिरिक्ता अग्न्यादयो यूयं जीवाः । भवतेति अनुषक्तक्रियापदस्य बहुवचनान्तत्वेन परिणमनम् । युष्मत्प्रसादाद् अहम् आचमनकर्मकर्ता जीव्यासम् चिरकालपर्यन्तं प्राणान् धारयेयम् इति आयुराशास्यते [५] ।

इति सप्तमेऽनुवाके एकादशं सूक्तम् ।

'स्तुता मया वरदा' इति एकर्चस्य सूक्तस्य अधीतस्य वेदस्य गायत्र्या वा उपस्थाने लैङ्गिको विनियोगो द्रष्टव्यः ।

स्तुता[5] मया वरदा वेदमाता[6] [7]प्र चोदयन्तां[7] पावमानी[8] द्विजानाम्[9] ।
आयुः [10]प्राणं प्रजां पशुं† कीर्तिं[10] द्रविणं ब्रह्मवर्चसम् ।
मह्यं दत्त्वा व्रजत[11] ब्रह्मलोकम् ॥ १ ॥[12]

स्तुता । मया । वरदा । वेदऽमाता । [13]प्र । चोदयन्ताम्[13] । पावमानी । द्विजानाम् ।
आयुः । प्राणम् । प्रऽजाम् । पशुम् । कीर्तिम् । द्रविणम् । ब्रह्मऽवर्चसम् ।
मह्यम् । दत्त्वा । व्रजत । ब्रह्मऽलोकम् ॥ १ ॥

स्वानुष्ठितकर्मणो निरभिसंधिना सर्वार्थं फलाशासनं[14] स्वस्याविकलं भवतीत्यभिप्रायेण मन्त्रद्रष्टा ऋषिः स्वानुष्ठितवेदाध्ययनेन गायत्रीजपेन वा द्विजानाम्

---

१. प्रविनि° S′. २. वैद्ध. मंपा. ३. वैयर्थेन S′. ४. नीयत इति S′. ५. सुता RW.; स्तुतो तैआआ १०,३६. ६. वेंदुमाता A,Bh,C,K,Km,R; वेदमाता Sm; वेंदमाता D; वेंदमाता > वेंदुमाता Dc; वेदमाता > वेदमाता Cs; वन्दमाना RW. ७. प्रचोदयन्तां A,Bh,C,K,Km,R,D,Dc,WM.; प्रचोदयन्तां Sm; प्रचोदयंतां Cs; प्रचोदयन्ती तैआआ. ८. पावमानीं M,P3,W,RW.; पवने तैआआ. ९. द्विजाता तैआआ. १०. पृथिव्यां तैआआ. † पशूं A,C,D,Km,Sm,V,WM.; पशु Cs; पशूं > पशून् Dc; पशून् RW. ११. प्रजातं तैआआ. १२ शोधाः वैप १,३४८३ q द्र. १३. प्रऽचोदयन्ताम् P1,J; प्रऽचोदयन्ताम् P,Cp. १४. °शासने S′.

आयुरादिफलम् आशास्य तन्मध्यवर्तिनः स्वस्यापि फलं सिद्धवद् अनुवदति। मया वेदाध्यायकेन सावित्रीं जपता वा स्तुता अभिष्टुता स्वभ्यस्ता वरदा इष्टकामप्रदात्री पावमानी । पवमानः पापात् परिशोधकः सूत्रात्मा । 'वायुरेव पवमानो दिशो हरित आविष्टः' ( ऐआ २,१,१ ) इति ऐतरेयकश्रुतेः । तत्प्रतिपादिका पावमानी वेदमाता वेदस्य ऋगादिरूपस्य माता सर्ववेदसारत्वेन मातृवत्प्रधानभूता सावित्री वेद एव वा माता मातृवद्धितकारित्वात् ।

'वेद एव द्विजातीनां निःश्रेयसकरः परः ।' ( यास्मृ १,४० )

इति स्मृतेः। द्विजानाम् द्विजन्मनां ब्राह्मणानां त्रैवर्णिकानां वा आयुरादिफलानि प्र चोदयन्ताम् । पूजायां बहुवचनम् । प्रेरयतु प्रयच्छतु[1] । ब्रह्मवर्चसम् ब्रह्मणां वर्चः[2] ब्राह्मं तेजः । 'ब्रह्महस्तिभ्यां वर्चसः' ( पा ५,४,७८ ) इति अच् समासान्तः। अथ मह्यं स्तोत्रे सर्वेषां फलप्रार्थकाय दत्त्वा आयुरादिकं फलं वितीर्य ब्रह्मलोकम् ब्रह्मणो लोकः सत्यलोकः ब्रह्मैव वा लोकः लोक्यमानं विद्वद्भिरनुभूयमानं परतत्त्वं व्रजत । इति प्रत्यक्षवादः । अत्रापि पूर्ववद् बहुवचनम् । शब्दावगम्यब्रह्माकारं परित्यज्य वाङ्मनसातीतार्थब्रह्मरूपा भवेति मन्त्रदर्शिना ऋषिणा साक्षात्कृतपरत्वेम (°परतत्त्वेन ?) उच्यते ।

इति सप्तमेऽनुवाके द्वादशं सूक्तम् ।

'यस्मात् कोशात्' इति एकर्चं सूक्तं सर्वेषु श्रौतस्मार्तकर्मसु ब्रह्मोत्थापनानन्तरं जपेत्। स्वाध्यायोत्सर्जनकर्मणि च अन्ते जपेत् । सूत्रितं हि कौशिकेन संहिताविधौ—"पौषस्यापरपक्षे त्रिरात्रं नाधीयीत । तृतीयस्याः प्रातः समासं संदिश्य[3] 'यस्मात् कोशाद्' इत्यन्तः[4]" ( कौसू १३९,२४;२५ ) इति ।

यस्मात् कोशादुदभराम वेदं[5] तस्मिन्नन्तरव दध्म एनम् ।
कृतमिष्टं[6] ब्रह्मणो वीर्येण तेन मा देवास्तपसावतेह[7] ॥ १ ॥

यस्मात् । कोशात् । उत्ऽअभराम । वेदम्[8] । तस्मिन् । अन्तः । अव । दध्मः । एनम् ।
कृतम् । इष्टम् । ब्रह्मणः । वीर्येण । तेन । मा । देवाः । तपसा । अवत । इह ॥ १ ॥

यस्मात् 'अव्यसश्च व्यचसश्च' ( अ ६८,१ ) इति मन्त्रे प्रतिपादिताद् मूलाधाररूपाद् वा कोशात् कोशवत्कोशः यथा कोशाद् धनवस्त्ररत्नादिपूर्णाद् अपेक्षितं

---

१. प्रगच्छतु S'. २. वर्चसः S'. ३. दिशति S'. ४. °स्यन्तत S'.
५. °भराम् वेदं D; °भराम वेदं K,Km,V,Cs; कोशादुदभराम वेदं Sm; कोशादुदभराम् वेदं > कोशादुदभराम वेदं Dc; °दुद्भरामि पै १९,३५,३. ६. कृत° > ऋत° C; ऋत° A,B; अधीतमिष्टं कौसू १३९,२६, ७. °तेहा पै, ८. वेदम् P[2].

वस्तु आनीयते एवम् अस्य सर्ववर्णमन्त्रायतनत्वात् तत एवोद्धार इति तत्त्वेन व्यपदेशः । वेदम् विदन्त्यनेन प्रत्यक्षाद्यविषयम् उपायम् इति वेदः । उक्तं हि —

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥' इति ।

श्रौतस्मार्तसकलकर्मप्रतिपादकमन्त्रब्राह्मणरूपं वेदम् उदभराम उद्धृतवन्तः । कर्मानुष्ठानार्थम् उच्चारितवन्तः स्मः । 'हृग्रहोर्भः°' (पावा ८,२,३२) इति भत्वम् । तस्मिन् पूर्वोक्ते स्थाने एनं येन कर्माण्यनुष्ठितानि तम् एतम् अन्वादिष्टं वेदम् अन्तः मध्ये अव दध्मः पुनः स्थापयामः । कर्मप्रयोगार्थं स्वमुखाद् उच्चारिता वर्णरूपा मन्त्राः तथैव यदि निःसरेयुस्तर्हि उत्तरकाले मन्त्राभावेन कर्मानुष्ठानं न भवेद् इति पुनः पूर्वोक्त एव वेदोद्धरणापादानस्थाने वेदनिधानम् उक्तम् इत्यभिप्रायः । ब्रह्मणः देशकालवस्तुपरिच्छेदशून्यस्य परमात्मनो वीर्येण वीर्यरूपेण कर्मप्रतिपादकेन वा वेदेन कृतम् यत् कर्म ब्रह्मयज्ञादिकं निष्पादितम् इष्टम् यत् स्वाहावौषडादिशब्दैर्देवतार्थं हविः प्रत्तं तेन कृतेन इष्टेन च कर्मणा हे देवाः यूयम् इह कर्मलोके तपसा । तपःशब्देन फलं विवक्ष्यते । कर्मफलेन मा माम् अनुष्ठातारम् अवत रक्षत तर्पयत । कर्म अविकलं कृत्वा तत्फलेन मां संयोजयतेति यावत् । यद्वा तपसा कृच्छ्रानुष्ठितेन कर्मणा माम् अवत । अथवा तपसा । तपः पर्यालोचनम् । तद्रूपेण तेन ब्रह्मणो वीर्येण मां संतर्पयतेति ।

इति एकोनविंशे काण्डे सप्तमेऽनुवाके त्रयोदशं सूक्तम् ।

इति सप्तमोऽनुवाकः समाप्तः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरहरिहरमहाराजसाम्राज्यधुरंधरेण सायणार्येण विरचिते माधवीये अथर्ववेदसंहिताभाष्ये वेदार्थप्रकाशे एकोनविंशं काण्डं समाप्तम् ।

श्रीविद्याशंकरार्पणम् अस्तु ।

---

अथ

# विंशं काण्डम्

श्रीगणाधिपतये नमः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

शान्तिकं पौष्टिकं कर्म प्रायशः प्राक् प्रपञ्चितम् ।
विंशेऽथ ब्रह्मवर्ग्याणां शस्त्रयाज्यादि वर्ण्यते ॥

तत्र विंशे काण्डे नवानुवाकाः । तत्र प्रथमेऽनुवाके त्रयोदश सूक्तानि । तत्र प्रथमं सूक्तं तृचात्मकम् । तास्तिस्रः ऋचः अग्निष्टोमादियज्ञेषु ब्राह्मणाच्छंसिपोत्राग्नीध्राणां[1] क्रमेण प्रातःसवनिक्यः प्रस्थितयाज्याः । सूत्रितं हि वैताने— "प्रस्थितैश्चरिष्यन्नध्वर्युः[2] संप्रेष्यति होतर्यज प्रशास्तर्ब्राह्मणाच्छंसिन् पोतर्नेष्टरग्नीदिति । 'इन्द्र त्वा वृषभं वयम्' इति ब्राह्मणाच्छंसी यजति । उत्तराभ्यां पोत्राग्नीध्रौ" ( वैताश्रौ १९,५;६ ) इति ।

**इन्द्र॑ त्वा वृष॒भं व॒यं सु॒ते सोमे॑ हवामहे । स पा॑हि॒ मध्वो॒ अन्ध॑सः ॥ १ ॥**

इन्द्र॑ । त्वा॒ । वृ॒ष॒भम् । व॒यम् । सु॒ते । सोमे॑ । ह॒वा॒म॒हे॒ । सः । पा॒हि॒ । मध्वः॑ । अन्ध॑सः ॥

हे इन्द्र परमैश्वर्यगुणविशिष्ट । इदि परमैश्वर्ये । 'ऋज्रेन्द्र' ( पाउ २,२८ ) इत्यादिना रन्प्रत्ययः । नित्त्वाद् आद्युदात्तः । अथवा इन्दौ सोमे निमित्तभूते सति द्रवति त्वरया गच्छतीति इन्द्रः । यद्वा इन्दवे सोमाय तत्पानार्थं द्रवतीति[3] वा इन्द्रः । सत्सु अन्येषु दधिपयःप्रभृतिषु द्रव्येषु सोमस्यातिशयेन प्रियत्वाद् उक्तव्युत्पत्तिरिन्द्रशब्दस्यात्र द्रष्टव्या । तादृश इन्द्र त्वा त्वाम् । 'आमन्त्रितं पूर्वम् अविद्यमानवत्' ( पा ८,१,७२ ) इति पूर्वस्य अविद्यमानवत्त्वेन पदात् परत्वाभावेपि अनुदात्तस्त्वादेशश्छान्दसः । कीदृशं त्वाम्[4] । वृषभम् । कामानां वर्षितारं[5] वयं यजमानाः सोमे सुते अभिषुते सति तत्पानार्थं हवामहे आह्वयामः । ह्वेञ् स्पर्धायां शब्दे च । शपि 'बहुलं छन्दसि' ( पा ६,१,३४ ) इति संप्रसारणम् । स तादृशः अस्माभिराहूतस्त्वं मध्वः मधुररसस्य अन्धसः अन्नस्य सोमलक्षणस्य । एकदेशम् इति शेषः । अथवा मध्वः मधु अन्धसः अन्धः अन्नं सोमलक्षणम् । 'क्रियाग्रहणं कर्तव्यम्' ( पावा १,४,३२ ) इति कर्मणः संप्रदानत्वात् 'चतुर्थ्यर्थे बहुलं छन्दसि' ( पा २,३,६२ ) इति षष्ठी । पाहि पिब ।

---

१. 'पोताग्नी° S'. २. प्रस्थितेश्चरिष्यंत्यस्यध्व° S'. ३. द्रवत इति वा S'.
४. त्वा त्वाम् S', ५. वर्षयितारं S'.

मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ॥२॥

मरुतः । यस्य । हि । क्षये । पाथ । दिवः । विऽमहसः । सः । सुऽगोपातमः । जनः ॥

हे विमहसः विशिष्टेन अतिशयितेन महसा तेजसा युक्ताः । देवेषु मध्ये एषाम् अतिशयितवीर्यत्वात् । हे मरुतः । म्रियन्ते प्राणिन एभिरिति मरुतः । प्राणात्मकस्य वायोर्निर्गमे सति प्राणिनां मृतिः प्रसिद्धैव । अथवा म्रियन्ते इति मरुतः । इन्द्रेण अदित्या उदरं प्रविश्य एकोनपञ्चाशद्धा खण्डितत्वात् तादृशा एतत्संज्ञया प्रसिद्धा देवा यूयं यस्य हि यस्य खलु यजमानस्य क्षये देवानां निवासस्थाने यागगृहे । 'क्षयो निवासे' ( पा ६,२,२०१ ) इति आद्युदात्तत्वम् । 'दिवः द्योतमानाद्'[1] द्युलोकाद् अन्तरिक्षाद् आगत्य । 'ऊडिदम्' ( पा ६,१,१७४ ) इत्यादिना विभक्तेरुदात्तत्वम् । पाथ पिबथ । सोमम् इति शेषः । स खलु जनः यजमानः सुगोपातमः अतिशयेन गोपायितृतमः । लोके ये गोपायितारः स्वाश्रितरक्षकाः सन्ति तेषां मध्ये स एव श्रेष्ठतम इत्यर्थः । गोपायतेः क्विपि अतोलोपयलोपौ । यस्माद् एवं तस्माद् ममापि यज्ञगृहे सोमं पिबतेत्यभिप्रायः ।

उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नये[2] ॥ ३ ॥

उक्षऽअन्नाय । वशाऽअन्नाय । सोमऽपृष्ठाय । वेधसे । स्तोमैः । विधेम । अग्नये ॥ ३ ॥

उक्षान्नाय । उक्षा सेचनसमर्थो गौः अन्नं यस्य स तथोक्तः । तादृशाय तथा वशान्नाय । वशा वन्ध्या अजादिका सा अन्नं हविर्यस्य स वशान्नः । तस्मै । उक्षवशयोरग्नेरन्नत्वम् 'अगोरुधाय' इत्येतं मन्त्रं व्याचक्षाणेन आश्वलायनेन उक्तम्—'एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति' ( आगृ १,१,४ ) इति । तथा सोमपृष्ठाय सोमः सोमरसः पृष्ठे उपरिदेशे मुखे यस्य स तादृशाय वेधसे विधात्रे सर्वस्य स्रष्ट्रे एवम् उक्तगुणविशिष्टाय अग्नये अङ्गनादिगुणविशिष्टाय देवाय अग्नये अग्न्यर्थम् । 'क्रियाग्रहणं कर्तव्यम्' ( पावा १,४,३२ ) इति चतुर्थी । स्तोमैः स्तोत्रैः स्तुतिसाधनभूतैः शस्त्रादिभिः विधेम परिचरेम । विध विधाने । तौदादिकः ।

इति प्रथमं सूक्तम् ।

'मरुतः पोत्रात्' इत्याद्याश्चत्वारः ऋतुप्रैषाः । तत्र आद्योत्तमाभ्यां पोता यजति । द्वितीयतृतीयाभ्याम् आग्नीध्रब्राह्मणाच्छंसिनौ । सूत्रितं हि—"सदस्सुपविष्टा यथाप्रैषम् ऋतून् यजन्ति[3] । 'मरुतः पोत्राद्' इति प्रथमोत्तमाभ्यां पोता । द्वितीययाग्नीध्रः । तृतीयया ब्राह्मणाच्छंसी" ( वैताश्रौ १९,२३–२०,१ ) इति ।

---

१. दिवः दिवो द्यो° S'. २. वैद्वानुरज्येष्ठेभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् अ ३,२१,६. ३. यजन्ते S'.

'मरुतः पोत्रात्[1] सुष्टुभः[2] स्वर्कादृतुना[3] सोमं पिबन्तु[4] ॥ १ ॥

मरुतः । पोत्रात्[5] । सुऽस्तुभः[6] । सुऽअर्कात्[7] । ऋतुना । सोमम् । पिबन्तु[8] ॥१॥

मरुतः एतन्नाम्ना प्रसिद्धा देवाः पोत्रात् पोतुः कर्म पोत्रम् तस्मात्। तत्कृताद् यागाद् इत्यर्थः। कीदृशात्। सुष्टुभः। स्तोभतिः स्तुतिकर्मा। शोभनस्तोभोपेतात् तथा स्वर्कात् सुष्ठु अर्च्यते देवः अनेनेति स्वर्कम् तस्मात् स्वर्चनात्। यद्वा सुष्टुभः। अत्र स्तोभशब्देन स्तोभोपेतं स्तोत्रम् उच्यते। शोभनस्तोत्रोपेतात्। स्वर्कात्। अर्च्यन्ते एभिरिति अर्काः मन्त्राः। शोभनमन्त्रोपेतात्। शोभनशस्त्रोपेताद् इत्यर्थः। एवंभूतात् पोतुर्यागाद् ऋतुना सह सोमम् अभिषवादिसंस्कारोपेतं सोमरसं पिबतु[8] पिबन्तु। वचनव्यत्ययः।

अग्निराग्नीध्रात्[1] सुष्टुभः[2] स्वर्कादृतुना[3] सोमं पिबतु ॥ २ ॥

अग्निः। आग्नीध्रात्[10] । सुऽस्तुभः[6] । सुऽअर्कात्[7] । ऋतुना । सोमम् । पिबतु ॥ २ ॥

अग्निः अङ्गनादिगुणविशिष्टो देवः आग्नीध्रात्। अग्निम् इन्द्ध इति अग्नीत्। स एव आग्नीध्रः एतन्नामा ऋत्विक्। तत्कर्मापि आग्नीध्रम्। यद्वा अग्नीधः कर्म आग्नीध्रम्। तस्माद् आग्नीध्रात्। शिष्टं पूर्ववद् व्याख्येयम्।

इन्द्रो ब्रह्मा ब्राह्मणात् सुष्टुभः[2] स्वर्कादृतुना[3] सोमं पिबतु ॥ ३ ॥

इन्द्रः। ब्रह्मा। ब्राह्मणात्। सुऽस्तुभः[6]। सुऽअर्कात्[7]। ऋतुना। सोमम्। पिबतु ॥ ३ ॥

इन्द्रः परमैश्वर्यादिगुणयुक्तो देवः स एव ब्रह्मा। बृहत्त्वाद् बृंहणत्वाच्च। इन्द्रस्य ब्रह्मात्मना स्तुतिः 'इन्द्रो ब्रह्मेन्द्र ऋषिः' (ऋ ८,१६,७) इत्यादिमन्त्रवर्णाद् अवगन्तव्या। ब्राह्मणात्। अत्र ब्राह्मणशब्देन ब्राह्मणाच्छंस्याख्य ऋत्विग् अभिधीयते। तत्कृतं कर्मापि ब्राह्मणम् इत्युच्यते। यद्वा अत्र ब्रह्मशब्देन ब्राह्मणाच्छंसी निर्दिश्यते। तत्कर्म शस्त्रयागलक्षणं ब्राह्मणं तस्मात्। शिष्टं पूर्ववत्।

देवो द्रविणोदाः पोत्रात्[11] सुष्टुभः[2] स्वर्कादृतुना[3] सोमं पिबतु ॥ ४ ॥

देवः। द्रविणःऽदाः। पोत्रात्[11] । सुऽस्तुभः[6] । सुऽअर्कात्[7] । ऋतुना । सोमम्। पिबतु ॥४॥

---

१. मरुतः पोत्रात् B,B$^{h}$,C,D,K$^{m}$,R,S$^{m}$,V,Dc,Cs. २. त्रिष्टुभः B,B$^{h}$,C,D,K,K$^{m}$,R,S$^{m}$,V,Dc,Cs,RW. ३. स्वर्गादृ° B,B$^{h}$,C,D,K,K$^{m}$,R,S$^{m}$,V,Dc,Cs,RW. ४. तु. RW.; वैद्ध. शंपा. सात. सा. पिबतु (पपा. पिबतु). ५. मरुतः । पोत्रात् P,P$^{2}$,J,Cp. ६. त्रिऽस्तुभः P,P$^{2}$,J,Cp. ७. स्वःऽगात् P,P$^{2}$,J,Cp. ८. वैद्ध. मैधा. ९. °ग्नीध्रात् B,B$^{h}$,C,D,K,K$^{m}$,R,S$^{m}$,V,Dc,Cs. १०. आग्नीध्रात् P$^{2}$,Cp. ११. पोत्रात् B,B$^{h}$,C,D,K,K$^{m}$,R,S$^{m}$,V,Dc,Cs,P,P$^{2}$,J,Cp.

द्रविणोदाः। **द्रविणं हिरण्यादिलक्षणं धनं बलं वा। तद् ददातीति द्रविणोदाः। एतन्नामको** देवः। **अस्य धनदातृत्वम्** 'द्रविणोदा ददातु नो वसूनि' (ऋ १,१५,८) **इत्यादिमन्त्रान्तरेषु धनप्रार्थनाविषयतया प्रसिद्धम्।** 'द्रुदक्षिभ्याम् इनन्' (पाउ २,५०) **इति इनन्प्रत्ययान्तो द्रविणशब्दः।**

**इति द्वितीयं सूक्तम्।**

**ज्योतिष्टोमादिषु प्रातःसवने ब्राह्मणाच्छंसिशस्त्रे** 'आ याहि' **इति पञ्च सूक्तानि विनियुक्तानि। तत्र** 'आ याहि सुषुमा हि ते' **इत्याद्यौ[1] तृचौ स्तोत्रियानुरूपौ।** 'अयमु त्वा विचर्षणे' **इति सप्तर्चः** 'इन्द्र त्वा वृषभं वयम्' **इति नवर्चश्च शंसनीयाः उक्थमुखम् इति व्यवह्रियन्ते।** 'उद्घेदभि' **इति तिस्र ऋचः पर्यास इत्युच्यन्ते। अत्रोत्तमा परिधानीया। सूत्रितं हि**—"'आ याहि सुषुमा हि ते' (अ २०,३), 'आ नो याहि सुतावतः' (अ २०,४) इति स्तोत्रियानुरूपौ। 'अयमु त्वा विचर्षणे' (अ २०,५) इत्युक्थमुखम्। 'उद्घेदभि श्रुतामघम्' (अ २०,७) इति पर्यासः। उत्तमा परिधानीया। [2]त्रिः प्रथमां[2] त्रिरुत्तमाम् अन्वाह। अर्धर्चशस्य[3] ऋगन्तं प्रणवेनोपसंतनोति" (वैताश्रौ २०,१-४) इति।

**आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्। एदं बर्हिः सदो मम ॥ १ ॥**

आ। याहि। सुसुम। हि। ते। इन्द्र। सोमम्। पिब। इमम्। आ। इदम्। बर्हिः। सदः। मम ॥ १ ॥

**हे** इन्द्र **परमैश्वर्यादिगुणविशिष्ट त्वम्** आ याहि **आगच्छ। किमर्थम् आगमनम् इति तत्राह**—ते **त्वदर्थं सोमं** सुषुमा **हि अभिषुतवन्तः खलु। षुञ् अभिषवे।** 'बहुलं छन्दसि' (पा २,४,७६) **इति शपः श्लुः।** 'हि च' (पा ८,१,३४) **इति निघातप्रतिषेधः। सुषुमा हि त इत्यत्र छान्दसः सांहितिको दीर्घः।** इमम् **अभिषुतं** सोमं पिब **पानं कुरु।** इदम् **आस्तीर्णं** मम बर्हिः आ सदः **आसीद। लेटि अडागमे इतश्च लोपे च कृते रूपम्।**

**आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना। उप ब्रह्माणि नः शृणु ॥ २ ॥**

आ। त्वा। ब्रह्मऽयुजा। हरी इति। वहताम्। इन्द्र। केशिना। उप। ब्रह्माणि। नः। शृणु ॥ २ ॥

**हे** इन्द्र त्वा **त्वां** ब्रह्मयुजा **ब्रह्मयुजौ ब्रह्मणा मन्त्रेण रथे युज्यमानौ** हरी **अभिमतप्रदेशं प्रति आहरणशीलौ एतन्नामानावश्वौ। एताविन्द्रस्य प्रतिनियतौ।**

---

1. इत्यादौ S'. 2. त्रिष्प्रथ° RG. 3. °र्धर्चशः S'.

'हरी इन्द्रस्य । रोहितोऽग्नेः । हरित आदित्यस्य' ( निघ १,१५ ) इत्यादिनिरुक्तात् । तावेव विशिनष्टि — केशिना इति । केशिना केशिनौ प्रकृष्टैः केशैः स्कन्धवालधीत्यादिप्रदेशस्थैर्युक्तौ । अनेन तयोः प्रभूतशक्तिमत्त्वम् उक्तं भवति । तौ आ वहताम् आगमयताम् । तदर्थं नः अस्माकं ब्रह्माणि आह्वानसाधनान् मन्त्रान् उप शृणु । अथवा आगत्य नः ब्रह्माणि स्तोत्राणि उप शृणु । बृह बृहि वृद्धौ इत्यस्य 'बृंहेरम् नलोपश्च' ( पाउ [श्वेतवनवासी] ४,१५६ ) इति मनिन्प्रत्यये नलोपे च कृते तत्संनियोगेन अमागमे च कृते ब्रह्मेति रूपम् ।

ब्र॒ह्माण॑स्त्वा व॒यं यु॒जा सो॑म॒पामि॑न्द्र सो॒मिनः॑ । सु॒ताव॑न्तो हवामहे ॥३॥

ब्र॒ह्माणः॑ । त्वा॒ । व॒यम् । यु॒जा । सो॒म॒ऽपाम् । इ॒न्द्र॒ । सो॒मिनः॑ । सु॒तऽव॑न्तः । ह॒वा॒म॒हे॒ ॥ ३ ॥

हे इन्द्र वयं यजमाना ब्रह्माणः ब्राह्मणाः । यद्वा ब्रह्माणः ब्राह्मणाच्छंसिनो वयम् । ब्रह्मशब्दः पुंलिङ्गोऽन्तोदात्तः । त्वा त्वां युजा । युज्यत इति युक् । स्तोतव्यदेवताहृदयस्पृशा स्तोत्रेण हवामहे आह्वयामः । कीदृशं त्वाम् । सोमपाम् सोमस्य पातारम् । इन्द्रस्य सोमपानस्य अतिशयितप्रियत्वाद् एवं विशेष्यते । कीदृशा वयम् । सोमिनः सोमवन्तः कृतसोमयागाः । अस्तु प्रस्तुते किमायातम् इति तत्राह — सुतावन्तः सोमानभिषुतवन्तः[1] सुतेन सोमेन युक्ता वा । अभिषवग्रहणादिसंस्कारैः संपादितसोमा इत्यर्थः । छान्दसो दीर्घः ।

इति तृतीयं सूक्तम् ।

'आ नो याहि' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

आ नो॑ याहि सु॒ताव॑तो॒ऽस्माकं॑ सुष्टु॒तीरुप॑ । पिबा॑ सु शि॑प्रि॒न्नन्ध॑सः ॥ १ ॥

आ । नः॒ । या॒हि॒ । सु॒तऽव॑तः । अ॒स्माक॑म् । सु॒ऽस्तु॒तीः । उप॑ । पिब॑ । सु॒ । शि॒प्रि॒न् । अन्ध॑सः ॥

हे इन्द्र सुतावतः सूयते अभिषूयत इति सुतः सोमः । तद्वतः अभिषुतसोमान् नः अस्मान् प्रति । 'शरादीनां च' ( पा ६,३,१२० ) इति मतुपि पूर्वपदस्य सांहितिको दीर्घः । आ याहि आगच्छ । तदेव विशिनष्टि — अस्माकं सुष्टुतीः शोभनाः स्तुतीः उप आ याहि उपागच्छ । सोमे सुसंस्कृते कृते च शस्त्रे अवश्यम् आगच्छेत्यर्थः । आगत्य च हे सुशिप्रिन्[2] शोभनहनूयुक्त । अनेन सोमपानोचितवक्त्रोपेतत्वम् उक्तं भवति । अथवा शोभननासिकोपेत । अनेन सोमरसाघ्राणोचितनासायुक्तत्वम् उक्तं भवति । 'शिप्रे हनू नासिके वा' इति निरुक्तम् ( ६,१७ ) । [3]तादृश त्वम्[3] अन्धसः अन्धः अन्नं सोमरसलक्षणम् अन्धस एकदेशं ग्रहेण धृतम् अंशं पिब पानं कुरु ।

---

1. सोमाभिषुवन्तः S'.　　2. मैत्रु. मैप्रा.　　3. तादृशस्त्वम् S'.

आ ते॑ सिञ्चामि कु॒क्ष्योरनु॒ गात्रा॒ वि धा॑वतु । गृ॒भाय॑ जि॒ह्वया॒ मधु॑ ॥ २ ॥

आ । ते॒ । सि॒ञ्चा॒मि॒ । कु॒क्ष्योः॑ । अनु॑ । गात्रा॑ । वि । धा॒व॒तु॒ । गृ॒भाय॑ । जि॒ह्वया॑ । मधु॑ ॥२॥

हे इन्द्र ते तव कुक्ष्योः । भागद्वयापेक्षया द्विवचनम् । कुक्षेरुभयोः पार्श्वयोः आ सिञ्चामि पूरयामि । सोमरसम् इति शेषः । अनेन दीयमानस्य सोमरसस्य कुक्ष्यवयवपूर्तिपर्यन्तम् अभिवृद्धिरुक्ता भवति । स च उदरस्थो गात्रा गात्राणि । अनेन गात्रशब्देन गात्रावयवा लक्ष्यन्ते । सर्वाण्यङ्गानि हस्तपादादीनि वि धावतु तत्तन्नाडीषु सर्वत्र प्रवहतु । अतस्त्वं मधु मधुवत् स्वादुतरं सोमरसं जिह्वया रसनया गृभाय गृहाण । ग्रहेः 'छन्दसि शायजपि' ( पा ३,१,८४ ) इति श्नः शायजादेशः । संप्रसारणं च । 'हृग्रहोर्भः०' ( पावा ८,२,३२ ) इति भत्वम् ।

स्वा॒दुष्टे॑ अस्तु सं॒सुदे॒ मधु॑मान् त॒न्वे॒३॑[1] तव॑ । सोम॒ः शम॑स्तु ते हृ॒दे ॥३॥

स्वा॒दुः । ते॒ । अ॒स्तु॒ । स॒म्ऽसुदे॑ । मधु॑ऽमान् । त॒न्वे॑ । तव॑ । सोम॑ः । शम् । अ॒स्तु॒ । ते॒ । हृ॒दे ॥ ३ ॥

हे इन्द्र संसुदे सम्यक् सुष्ठु दात्रे[2] । अत्र सम् इत्यनेन दानस्य सुकरत्वम् अभिधीयते । सु इत्यनेन च दानविषयस्य धनादेः प्राशस्त्यं बहुत्वं च विवक्ष्यते । तादृशाय ते तुभ्यं मधुमान् माधुर्योपेतः सोमः अस्माभिर्दीयमानः स्वादुरस्तु स्वदनीयोऽस्तु । अनन्तरं च स सोमः तव तन्वे शरीराय । बलकार्यस्त्विति शेषः । अथवा शम् अस्तु इत्येतद् अत्राप्यन्वेतव्यम् । तव शरीराय सुखकरं भवत्वित्यर्थः । तथा ते हृदे हृदयाय च शम् अस्तु मनसे सुखकरं भवतु । स्वादुष्टे इति । 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' ( पा ८,३,१०३ ) इति सकारस्य षत्वम् । ततः ष्टुत्वम् ।

इति चतुर्थं सूक्तम् ।

'अयमु त्वा विचर्षणे' इति सप्तर्चस्य विनियोग उक्तः ।

अ॒यमु॑ त्वा विचर्षणे॒ जनी॑रिवा॒भि संवृ॑तः । प्र सोम॑ इन्द्र सर्पतु ॥ १ ॥

अ॒यम् । ऊं॒ इति॑ । त्वा॒ । वि॒ऽच॒र्ष॒णे॒ । जनीः॑ऽइव । आ॒भि । सम्ऽवृ॑तः । प्र । सोम॑ः । इन्द्र॑ । स॒र्प॒तु॒ ॥ १ ॥

हे इन्द्र विचर्षणे । विचर्षणिः पश्यतिकर्मा । हे विद्रष्टः इन्द्र जनीरिव जनय इव । विभक्तिव्यत्ययः । जनयन्त्यपत्यान्यास्विति जनिशब्दव्युत्पत्तिः ।

---

१. त॒न्वै॑१ K. २. एवं स्वरो न सिध्यति ।

ता यथा पुत्रादिभिः अभितः संवृता वर्तन्ते एवं श्रयणद्रव्यैः अध्वर्युप्रभृतिभिर्वा अभि संवृतः अभित आच्छन्नः अयं सोमः। उ इति पूरणः। त्वा त्वां प्र सर्पतु प्रगच्छतु। विचर्षण इति। विपूर्वात् कृष विलेखने इत्यस्मात् 'कृषेरादेश्च चः' (पाउ २,१०४) इति अनिप्रत्ययः आदेः ककारस्य चकारश्च।

तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे। इन्द्रो वृत्राणि जिघ्नते ॥ २ ॥

तुविऽग्रीवः। वपाऽउदरः। सुऽबाहुः। अन्धसः। मदे। इन्द्रः। वृत्राणि। जिघ्नते ॥ २ ॥

अनया सोमस्य अतिशयितवीर्यसाधनत्वम् अभिधीयते। अन्धसः सोमलक्षणस्य अन्नस्य भक्षणेन मदे सति इन्द्रो देवः तुविग्रीवः। तुवीति बहुनाम। प्रभूतकन्धरः। भवतीति शेषः। ग्रीवाशब्दः स्कन्धस्योपलक्षकः। वृषवत् समृद्धस्कन्ध इत्यर्थः। तथा वपोदरः वपा यथा विस्तीर्णा भवति एवं विस्तृतोदरश्च भवति। तथा सुबाहुः शोभनबाहुः पृथुभुजश्च भवति एवं सोमपानेन अभिवृद्धगात्रः सन् पश्चाद् वृत्राणि वृत्रवद् आवरकान् शत्रून् जिघ्नते हिनस्ति इत्येवं सोमस्य महिमा। यद्वा तुविग्रीवत्वादयः इन्द्रस्य स्वाभाविका धर्माः। उक्तलक्षण इन्द्रः सत्स्वपि तेषु अन्धसो मदे सत्येव वृत्राणि जिघ्नते इति सोमप्रशंसा।

इन्द्र प्रेहि पुरस्त्वं विश्वस्येशान ओजसा। वृत्राणि वृत्रहं जहि ॥ ३ ॥

इन्द्र। प्र। इहि। पुरः। त्वम्। विश्वस्य। ईशानः। ओजसा। वृत्राणि। वृत्रऽहन्। जहि ॥

हे इन्द्र विश्वस्य स्थावरजङ्गमात्मकस्य सर्वस्य ईशानः। अनेन इन्द्रस्य सर्वत्र प्रतिभटराहित्यम् उक्तं भवति। तादृशः त्वं पुरः प्रेहि अस्माकं सेनायाः पुरतो गच्छ। गत्वा च हे वृत्रहन् वृत्रस्य एतन्नामकस्य असुरस्य हन्तः वृत्राणि अस्मदावरकान् शत्रून् जहि घातय। 'हन्तेर्जः' (पा ६,४,३६) इति जभावः।

दीर्घस्ते अस्त्वङ्कुशो येना वसु प्रयच्छसि। यजमानाय सुन्वते ॥ ४ ॥

दीर्घः। ते। अस्तु। अङ्कुशः। येन। वसु। प्रऽयच्छसि। यजमानाय। सुन्वते ॥ ४ ॥

हे इन्द्र ते अङ्कुशः। अङ्कुशवन्नम्राङ्गुलिको हस्तः अङ्कुश इत्युच्यते। स दीर्घः अस्तु। प्रदानविषये संकोचरहितोऽस्त्वित्यर्थः। तमेव विशिनष्टि—येन अङ्कुशेन सुन्वते सोमाभिषवं कुर्वते सोमलक्षणस्य हविषो दात्रे यजमानाय वसु धनं प्रयच्छसि। स तादृशो दीर्घोऽस्तु।

अयं त इन्द्र सोमो निपूतो अधि बर्हिषि। एहीमस्य द्रवा पिब ॥ ५ ॥

अयम्। ते। इन्द्र। सोमः। निऽपूतः। अधि। बर्हिषि। आ। इहि। ईम्। अस्य। द्रव। पिब ॥

हे इन्द्र अधि बर्हिषि । अधिः सप्तम्यर्थानुवादी । आस्तीर्णे दर्भे निपूतः दशापवित्रेण नितरां शोधितः । उपलक्षणम् एतत् । ग्रहणश्रयणादिसंस्कारैः संस्कृतः अयं सोमः ते त्वदर्थः । यस्मादेवं तस्माद् एहि आगच्छ । अस्मद्यज्ञं प्रतीति शेषः । आगमनविलम्बम् असहमानः आह द्रव इति । त्वरया आगच्छेत्यर्थः । आगत्य च ईम् इदानीम् अस्य अमुं त्वदर्थं निपूतं सोमं पिब पानं कुरु ।

शाचिगो शाचिपूजनायं रणाय ते सुतः । आखण्डल प्र हूयसे ॥ ६ ॥

शाचिगो इति शाचिऽगो । शाचिऽपूजन । अयम् । रणाय । ते । सुतः । आखण्डल । प्र । हूयसे ॥

हे शाचिगो । शाचयः प्रत्यानेतुं शक्ता गावो यस्य स शाचिगुः । पणिभिरपहृतानां गवां प्रत्यानेतृत्वप्रसिद्धेः । तथा शाचिपूजन । पूज्यते एभिरिति पूजनानि स्तोत्राणि । शाचीनि शक्तानि पूजनानि स्तुत्यविषयगुणप्रकाशकानि स्तोत्राणि यस्य स शाचिपूजनः । तस्य संबोधनम् । 'आमन्त्रितं पूर्वम् अविद्यमानवत्' ( पा ८,१,७२ ) इति पूर्वस्य अविद्यमानवत्त्वेन पादादित्वान्निघाताभावः । हे उक्तगुणविशिष्ट इन्द्र रणाय । मकारलोपश्छान्दसः । रमणाय रमणीयाय ते तुभ्यम् । यद्वा ते तव रणाय रमणाय क्रीडनाय अयं सोमः सुतः अभिषवादिना संस्कृतः । तस्मात् कारणात् हे आखण्डल आ समन्तात् खण्डयति शत्रून् इति आखण्डलः । शत्रुहिंसक इन्द्र त्वं प्र हूयसे प्रकर्षेण आह्वानविषयः क्रियसे सोमपानार्थम् अस्माभिराहूयसे । आखण्डलेति । आङ्पूर्वात् कडि खडि भेदने इत्यस्माद्भौवादिकाद्धातोः 'मङ्गेरलच्' ( पाउ ५,७० ) इत्यत्र बाहुलकाद् अलच्प्रत्ययः । आमन्त्रिताद्युदात्तः ।

यस्ते शृङ्गवृषो नपात् प्रणपात् कुण्डपाय्यः । न्यस्मिन् दध्र आ मनः ॥७॥

यः । ते । शृङ्गऽवृषः । नपात् । प्रनपादिति प्रऽनपात् । कुण्डऽपाय्यः । नि । अस्मिन् । दध्रे । आ । मनः ॥ ७ ॥

हे शृङ्गवृषो नपात् शृङ्गवृष्नामा कश्चिद् ऋषिः तस्य न पातयति कुलम् इति नपात् पुत्रः । तस्य संबोधनम् । यद्वा शृङ्गवद् उन्नता रश्मयः शृङ्गशब्देन उच्यन्ते । तैर्वर्षतीति शृङ्गवृड् आदित्यः । तस्य न पातयिता दिवि स्थापयिता इन्द्रः शृङ्गवृषो नपाद् इत्युच्यते । तादृश इन्द्र ते तव यः प्रसिद्धः प्रणपात् कुण्डपाय्यः कुण्डैः पातव्यः सोमो यस्मिन् क्रतौ स कुण्डपाय्यः क्रतुरस्ति । 'क्रतौ कुण्डपाय्यसंचाय्यौ' ( पा ३,१,१३० ) इति पिबतेः क्यप्प्रत्ययान्तत्वेन निपातितः । अस्मिन् बहुसोमवति क्रतौ त्वं मनः आ नि दध्रे धारयसि सर्वतः स्थापयसि । दधातेर्लिटि 'इरयो रे' ( पा ६,४,७६ ) इति रेभावः ।

इति पञ्चमं सूक्तम् ।

'इन्द्र त्वा वृषभं वयम्' इति नवर्चस्य[1] सूक्तस्य प्रातःसवनशस्त्रे विनियोग उक्तः।

इन्द्र॑ त्वा वृष॒भं व॒यं सु॒ते सोमे॑ हवामहे। स पा॑हि॒ मध्वो॒ अन्ध॑सः ॥१॥

इन्द्र॑। त्वा॒। वृ॒ष॒भम्। व॒यम्। सु॒ते। सोमे॑। ह॒वा॒म॒हे॒। सः। पा॒हि॒। मध्वः॑। अन्ध॑सः ॥ १ ॥

व्याख्यातेयम् अनुवाकादौ ( अ २०,१,१ )।

इन्द्र॑ क्रतु॒विदं॑ सु॒तं सोमं॑ हर्य पुरुष्टुत। पिबा वृ॑षस्व॒ तातृ॑पिम् ॥ २ ॥

इन्द्र॑। क्र॒तु॒ऽविद॑म्। सु॒तम्। सोम॑म्। ह॒र्य॒। पु॒रु॒ऽस्तु॒त॒। पिब॑। आ। वृ॒ष॒स्व॒। तातृ॑पिम् ॥

हे पुरुष्टुत पुरुभिर्बहुभिर्यजमानैः स्तुत बहुप्रकारं स्तुत वा हे इन्द्र क्रतुविदम् क्रतोर्यागस्य लम्भकं निष्पादकं सुतम् अभिषवादिना संस्कृतम् इमं सोमं हर्य कामय। हर्य गतिकान्त्योः इत्यस्य लोटि रूपम्। निघातः। कामयित्वा च ततृपिम् तर्पकं प्रीणयितारम् इमं सोमं पिब पानं कुरु। तदेव विशिनष्टि — आ वृषस्व जठरे सिञ्च। यथा जठरकुहरस्य अत्यन्तं सर्वतः पूर्तिर्भवति तथा कुर्वित्यर्थः। ततृपिम्। तृप प्रीणने इत्यस्मात् 'छन्दसि सदादिभ्यो दर्शनात्' ( पावा ३,२,१७१ ) इति किन्। तस्य लिड्वद्भावाद् द्विर्वचनादि। संहितायां 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा ६,१,७ ) इत्यभ्यासस्य दीर्घः। नित्त्वाद् आद्युदात्तः।

इन्द्र॒ प्र णो॑ धि॒तावा॑नं य॒ज्ञं विश्वे॑भिर्दे॒वेभिः॑। ति॒र स्त॑वान विश्पते ॥ ३ ॥

इन्द्र॑। प्र। नः॒। धि॒तऽवा॑नम्। य॒ज्ञम्। विश्वे॑भिः। दे॒वेभिः॑। ति॒र। स्त॒वा॒न॒। वि॒श्प॒ते॒ ॥

हे स्तवान। कर्मणि कर्तृप्रत्ययः। स्तूयमान हे विश्पते विशो देवविशो मरुतः तेषां स्वामिन्। यद्वा विशां प्रजानां सर्वासां पते हे इन्द्र नः अस्माकं धितावानम् धितं धानं तद्वन्तं सोमस्य निधानवन्तम्। ग्रहादिभिर्गृहीतसोमम् इत्यर्थः। 'छन्दसीवनिपौ०' ( पावा ५,२,१०९ ) इति मत्वर्थीयो वनिप्। उक्तलक्षणं यज्ञं विश्वेभिः सर्वैर्यष्टव्यैः देवेभिः देवैः सह प्र तिर वर्धय। हविःस्वीकारेणेति शेषः। तरतेर्व्यत्ययेन शः। प्रत्ययस्वरः। प्र ण इति। 'उपसर्गाद् बहुलम्' ( पा ८,४,२८ ) इति संहितायां णत्वम्।

इन्द्र॒ सोमाः॑ सु॒ता इ॒मे तव॒ प्र य॑न्ति सत्पते। क्षयं॑ च॒न्द्रास॒ इन्द॑वः ॥४॥

इन्द्र॑। सोमाः॑। सु॒ताः॑। इ॒मे। तव॑। प्र। य॒न्ति॒। स॒त्ऽप॒ते॒। क्षय॑म्। च॒न्द्रासः॑। इन्द॑वः ॥

---

1. सर्वानुक्रमणी एतत्सूक्तम् 'इन्द्र क्रतुविदम्' इत्यत आरभते। एवं च तन्मते एतत् सूक्तं पूर्वसूक्तं च प्रत्येकमष्टर्चमेव। एतच्च P,P[1],J,Cp अपि समर्थयन्ति.

हे सत्पते सतां यजमानानां पालक इन्द्र सुताः अभिषुताः चन्द्रासः चन्द्रा आह्लादकारिण इन्दवः क्लिन्ना रसात्मका इमे हूयमानाः सोमाः तव क्षयम् । क्षियन्ति निवसन्ति अत्रेति क्षयो निवासस्थानम् । तव जठरम् इत्यर्थः । 'क्षयो निवासे' (पा ६,१,२०१) इति आद्युदात्तत्वम् । प्र यन्ति गच्छन्ति । इन्दव इति । 'उन्देरिच्चादेः' (पाउ १, १२) इति उप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तः ।

दधिष्वा जठरे सुतं सोममिन्द्र वरेण्यम् । तव द्युक्षास इन्दवः ॥ ५ ॥

दधिष्व । जठरे । सुतम् । सोमम् । इन्द्र । वरेण्यम् । तव । द्युक्षासः । इन्दवः ॥ ५ ॥

हे इन्द्र वरेण्यम् वरणीयं स्पृहणीयं सुतम् अभिषुतम् इमं सोमम् अस्माभिर्हूयमानं जठरे दधिष्व धारय । दधातेर्लोटि रूपम् । 'आगमा अनुदात्ताः' (पाम ३,३,१) इटोऽनुदात्तत्वात् प्रत्ययस्वरः । सोमानाम् इन्द्रस्य[1] असाधारणं स्वत्वम्[1] आह—द्युक्षासः दीप्तिमन्तो दीप्तिनिवासस्थानभूता इन्दवः सोमाः तव । असाधारणस्वभूता इति शेषः ।

गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे । इन्द्र त्वादातमिद् यशः ॥६॥

गिर्वणः । पाहि । नः । सुतम् । मधोः । धाराभिः । अज्यसे । इन्द्र । त्वाऽदातम् । इत् । यशः ॥

हे गिर्वणः गीर्भिर्वननीय संभजनीय इन्द्र । वन षण संभक्तौ इत्यस्माद् असुन् । गिर उपधाया दीर्घाभावश्छान्दसः । 'आमन्त्रितस्य च' (पा ६,१,१९८) इति षाष्ठिकम् आद्युदात्तत्वम् । नः अस्माकं संबन्धिनं सुतम् अभिषुतं सोमं पाहि पिब । अहूयमानस्य कथं पानप्रसक्तिरित्यत्राह—मधोर्धाराभिः इति । यस्माद् मधोः मधुरस्य सोमस्य धाराभिः अज्यसे आर्द्रीक्रियसे । हूयस इत्यर्थः । अपेक्षितस्य फलस्य अभावे होमस्य का प्रसक्तिरित्यत्राह—हे इन्द्र त्वादातमित् त्वया दातव्यमेव यशः अन्नम् । अस्तीति शेषः । 'अस्ति त्वादातम् अद्रिवः' इत्यमुं मन्त्रभागं व्याचक्षाणेन यास्केन 'त्वया[2] नस्तद् दातव्यम्' (नि ४,४) इति हि त्वादातशब्दो व्याख्यातः । यद्वा त्वादातम् त्वया शोधितं यशोऽस्ति । दैप् शोधने । सत्यपि पकारे 'नानुबन्धकृतम् अनेजन्तत्वम्' (पाम १,३,९) इत्येजन्त एवायम् । ततः 'आदेचः°' (पा ६,१,४५) इति आत्वम् । अस्मात् कर्मणि क्तः । 'दाधा घ्वदाप्' (पा १,१,२०) इत्यत्र अदाप् इति प्रतिषेधेन घुसंज्ञाया अभावात् 'दो दद् घोः' (पा ७,४,४६) इति दद् आदेशो न भवति । त्वेति युष्मच्छब्दस्य तृतीया । 'कर्तृकरणे कृता बहुलम्' (पा २,१,३२) इति समासः । 'तृतीया कर्मणि' (पा ६,२,४८) इति पूर्वपदप्रकृतिस्वरः ।

---

१. असाधारणस्वत्वम् S'. २. या S'.

तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः ।
नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठम् ॥ २ ॥

तम् । ऊं इति । नः । पूर्वे । पितरः । नवऽग्वाः । सप्त । विप्रासः । अभि । वाजयन्तः ।
नक्षत्ऽदाभम् । ततुरिम् । पर्वतेऽस्थाम् । अद्रोघऽवाचम् । मतिऽभिः । शविष्ठम् ॥ २ ॥

तमु तमेवेन्द्रं नः अस्माकं संबन्धिनः पूर्वे पुरातनाः पितरः कर्मणा पितृलोकं प्राप्ताः पालयितारो नवग्वाः नवभिर्मासैर्लब्धफलाः सन्तः सत्त्राद् ये उत्थितास्ते नवग्वाः नवभिर्मासैराप्तगोफला वा । सप्त सप्तसंख्याका विप्रासः मेधाविनः वाजयन्तः वाजम् अन्नं हविर्लक्षणम् इन्द्राय इच्छन्तः वाजिनं बलिनं कुर्वन्तो वा मतिभिः स्तुतिभिः[1] इन्द्रम् अभि । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः[1] । अभितुष्टुवुरित्यर्थः । कीदृशम् इन्द्रम् । नक्षद्दाभम् । नक्षतिर्व्याप्तिकर्मा । अभिगच्छतां शत्रूणां हिंसितारं ततुरिम् दुर्गमात् तारकं पर्वतेष्ठाम् पर्वते मेघे अवस्थितम् अद्रोघवाचम् अद्रोग्धव्या अनतिक्रमणीया वाचो यस्य सः अद्रोघवाक् तम् अद्रोघवाचं शविष्ठम् अतिशयेन बलवन्तम् ।

तमीमह इन्द्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः ।
यो अस्कृधोयुरजरः स्वर्वान् तमा भर हरिवो मादयध्यै ॥ ३ ॥

तम् । ईमहे । इन्द्रम् । अस्य । रायः । पुरुऽवीरस्य । नृऽवतः । पुरुऽक्षोः ।
यः । अस्कृधोयुः । अजरः । स्वःऽवान् । तम् । आ । भर । हरिऽवः । मादयध्यै ॥ ३ ॥

तं प्रसिद्धम् इन्द्रम् ईमहे याचामहे । याच्ञाविषयं दर्शयति — अस्य रायः । रयिरिति धननाम । एतद् धनम् । कीदृशं तत् । पुरुवीरस्य । वीराः पुत्रादयः । बहुभिर्वीरैरुपभोक्तव्यम् । नृवतः नरो मर्त्याः सेवकाः तैः सहितम् । पुरुक्षोः क्षुरित्यन्ननाम । बह्वन्नम् । उक्तविशेषणविशिष्टं धनम् ईमहे इति संबन्धः । किं च यो रयिः अस्कृधोयुः अच्छिन्नः अजरः जरारहितः स्वर्वान् स्वः स्वर्गः सुखं वा तद्वान् तम् उक्तगुणविशिष्टं रयिम् हे हरिवः हर्याख्याश्ववन्निन्द्र मादयध्यै अस्मान् मादयितुम् आ भर आहर । मदि स्तुत्यादौ । 'हेतुमति च' (पा ३, १,२६) इति णिच् । तुमर्थे शध्यैप्रत्ययः । प्रत्ययस्वरेण तृतीयस्य उदात्तत्वम् ।

तन्नो वि वोचो यदि ते पुरा चिज्जरितार आनशुः सुम्नमिन्द्र ।
कस्ते भागः किं वयो दुध्र खिद्वः पुरुहूत पुरूवसोऽसुरघ्नः ॥ ४ ॥

---

1. मतिभिः स्तुतिभिः इति 'ध्याहारः इत्यतः परम् S'.

तत् । नः । वि । वोचः । यदि । ते । पुरा । चित् । जरितारः । आनशुः । सुम्नम् । इन्द्र ।
कः । ते । भागः । किम् । वयः । दुध्र । खिद्वः । पुरुऽहूत । पुरुवसो इति पुरुऽवसो । असुरऽघ्नः ॥

हे इन्द्र पुरा चित् **पूर्वमपि** ते **तव** जरितारः **स्तोतारः** सुम्नम् **सुखं** यदि आनशुः **त्वत्तः सकाशात् प्राप्ताः तर्हि** तत् **सुम्नम् सुखं** नः **स्तोतॄणाम् अस्माकमपि** वि वोचः **प्रब्रूहि । प्रयच्छेति भावः । तस्य सुम्नस्य उत्कोचभूतः** [1]असुरघ्नः **शत्रूणां हन्तुः**[1] ते **तव** भागो **यज्ञे निर्दिष्टः** कः । किं वयः **किं हविर्लक्षणम् अन्नं तव दातव्यम् । तं स्तोत्रादिरूपं भागं सोमादिहविर्लक्षणम् अन्नं च हे** दुध्र **दुर्धर हे** खिद्वः **शत्रूणां खेदयितः हे** पुरुहूत **बहुभिराहूत हे** पुरुवसो **बहुधन**[2] **एवमुक्तैर्गुणैरुपेत इन्द्र नः अस्माकं ब्रूहि प्रब्रूहि । खिद्व इति । खिद दैन्ये इत्यस्मात् ण्यन्तात् लिटः क्वसुरादेशः ।** 'वस्वेकाजाद्धसाम्' ( पा ७,२,६७ ) **इति नियमाद् इडभावः** 'द्विर्वचनप्रकरणे छन्दसि वा' ( पा ६,१,८ ) **इति विकल्पाद् अनभ्यासः ।** 'मतुवसो रु संबुद्धौ छन्दसि' (पा ८,३,१) **इति रुत्वम् । आमन्त्रितनिघातः ।**

तं पृच्छन्ती वज्रहस्तं रथेष्ठामिन्द्रं वेपी वक्करी यस्य नू गीः ।
तुविग्राभं तुविकूर्मिं रभोदां गातुमिषे नक्षते तुम्रमच्छ ॥ ५ ॥

तम् । पृच्छन्ती । वज्रऽहस्तम् । रथेऽस्थाम् । इन्द्रम् । वेपी । वक्करी । यस्य । नु । गीः ।
तुविऽग्राभम् । तुविऽकूर्मिम् । रभःऽदाम् । गातुम् । इषे । नक्षते । तुम्रम् । अच्छ ॥ ५ ॥

यस्य **स्तोतुयजमानस्य** वेपी । **वेप इति कर्मनाम । यागादिलक्षणकर्मवती** वक्करी **गुणानां प्रवचनशीला** गीः **वाग्** वज्रहस्तम् **वज्रं हस्ते धारयन्तं** रथेष्ठाम् **रथे अवस्थितं** तं **प्रसिद्धम्** इन्द्रं पृच्छन्ती **प्रश्नं कुर्वती**[3] । **अभिगच्छति स्तौति वेति शेषः । नु इति पूरणः ।** तुविग्राभम् **बहूनां ग्राहकं** तुविकूर्मिम् **बहुकर्माणं** रभोदाम् **रभसो बलस्य दातारम् उक्तलक्षणम् इन्द्रं स यजमानो** गातुम् **सुखम्** इषे **इच्छति । किं च** तुम्रम् **अभिगन्तारं त्वरयितारं वा शत्रुम्** अच्छ **आभिमुख्येन** नक्षते **गच्छति ।**

अया ह त्यं मायया वावृधानं मनोजुवा[4] स्वतवः पर्वतेन ।
अच्युता चिद् वीळिता[5] स्वोजो रुजो वि दृळ्हा[6] धृषता[7] विरप्शिन् ॥ ६॥

अया । ह । त्यम् । मायया । ववृधानम् । मनःऽजुवा । स्वऽतवः । पर्वतेन ।
अच्युता । चित् । वीळिता । सुऽओजः । रुजः । वि । दृळ्हा । धृषता । विऽरप्शिन् ॥६॥

---

१. नास्ति S' ( तु. टि २ ).　२. °धन हे असुरघ्नः शत्रूणां हंतः S' ( तु. टि १ ).
३. कुर्वंती S'.　४. मनोजुवाः B,B[h],C,D.　५. वीळिता K,K[m],V, ऋ ६,२२,६; वीड्डिता B[h],C.　६. दृळ्हा K,K[m],V, ऋ.; दृढा B[h],C.　७. दृषता B,B[h].

हे स्वतवः स्वायत्तबल इन्द्र त्वं मनोजुवा मनोवत् शीघ्रं गच्छता पर्वतेन पर्ववता वज्रेण अया अनया प्रसिद्धया मायया शक्त्या ववृधानम् भृशं वर्धमानं त्यम् तं प्रसिद्धं वृत्रं वि रुजः व्यरुजः विशेषेण अभाङ्क्षीः । तथा हे स्वोजः शोभनबल हे विरप्शिन् । विरप्शीति महन्नाम । हे महन् इन्द्र त्वम् अच्युता चित् अच्युतानि अन्यैश्च्यावयितव्यान्यपि[1] वीळिता वीळितानि दृढानि अशिथिलीकृतानि दृळ्हा दृढानि शत्रुनगराणि धृषता धर्षकेण वज्रेण वि रुजः विदारितवान् असि ।

तं वो धिया नव्यस्या शविष्ठं प्रत्नं प्रत्नवत् परितंसयध्यै ।
स नो वक्षदनिमानः सुवह्मेन्द्रो विश्वान्यति दुर्गहाणि ॥ ७ ॥

तम् । वः । धिया । नव्यस्या । शविष्ठम् । प्रत्नम् । प्रत्नऽवत् । परिऽतंसयध्यै ।
सः । नः । वक्षत् । अनिऽमानः । सुऽवह्मा । इन्द्रः । विश्वानि । अति । दुःऽगहानि ॥ ७ ॥

हे यजमानाः वः युष्मदर्थं शविष्ठम् । शव इति बलनाम । अतिशयितबलं प्रत्नम् पुरातनं तं प्रसिद्धम् इन्द्रं नव्यस्या नवतरया धिया स्तुत्या प्रत्नवत् पुराणा महर्षयो यथा एवं परितंसयध्यै अलंकर्तुम् । प्रवृत्तोऽस्मीति शेषः । तसि अलंकारे । इदित्त्वान्नुम् । तुमर्थे शध्यैप्रत्ययः । प्रत्ययस्वरेण उपान्त्योदात्तः । अनिमानः निमानरहितः इयत्ताशून्यः । महान् इत्यर्थः । सुवह्मा शोभनं वह्म वहनं यस्य स सुवह्मा शोभनवहनः स उक्तलक्षण इन्द्रः नः अस्मान् विश्वानि सर्वाणि "दुर्गहाणि दुर्गमनानि[2] यानियानि दुस्तराणि तानि सर्वाण्यपि अति वक्षत् अतिवहतु ।

आ जनाय द्रुह्वणे पार्थिवानि दिव्यानि दीपयोऽन्तरिक्षा ।
तपा वृषन् विश्वतः शोचिषा तान् ब्रह्मद्विषे शोचय क्षामपश्च ॥ ८ ॥

आ । जनाय । द्रुह्वणे । पार्थिवानि । दिव्यानि । दीपयः । अन्तरिक्षा ।
तप । वृषन् । विश्वतः । शोचिषा । तान् । ब्रह्मऽद्विषे । शोचय । क्षाम् । अपः । च ॥

हे इन्द्र त्वं द्रुह्वणे साधुजनानां द्रेग्धुः जनाय जनस्य राक्षसादेः पार्थिवानि पृथिव्यां भवानि दिव्यानि दिवि भवानि अन्तरिक्षा अन्तरिक्षाणि अन्तरिक्षे भवानि च स्थानानि आ दीपयः आ समन्तात् तापय । हे वृषन् कामानां वर्षितः इन्द्र त्वं विश्वतः सर्वतो विद्यमानान् तान् राक्षसादीन् शोचिषा त्वदीयया दीप्त्या तप दह । किं च ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे राक्षसादये । ब्रह्मद्विषं दग्धुम् इत्यर्थः । क्षाम् पृथिवीम् अपश्च अन्तरिक्षं शोचय दीपय । क्षाम् इति । क्षि निवासगत्योः । तौदादिकः । 'अन्येष्वपि दृश्यते' ( पा ३,२,१०१ ) इति सोपसर्गान्नो

1. च्यवयितव्यान्यपि S'. 2. दुर्गहा दुर्गहाणि दुर्गमनानि S'.

विधीयमानो डप्रत्ययः 'अपिशब्दः सर्वोपाधिव्यभिचारार्थः' ( पाका ३,२,१०१ ) इत्युक्तेर्निरुपपदेभ्योऽपि भवति। क्षियन्ति निवसन्त्यस्यां प्राणिन इति क्षा वसुंधरा। प्रत्ययस्वरः।

भुवो जनस्य दिव्यस्य राजा पार्थिवस्य जगतस्त्वेषसंदृक्।
धिष्व वज्रं दक्षिण इन्द्र हस्ते विश्वा अजुर्य दयसे वि मायाः ॥ ९ ॥

भुवः। जनस्य। दिव्यस्य। राजा। पार्थिवस्य। जगतः। त्वेषऽसंदृक्।
धिष्व। वज्रम्। दक्षिणे। इन्द्र। हस्ते। विश्वाः। अजुर्य। दयसे। वि। मायाः ॥ ९ ॥

हे त्वेषसंदृक् दीप्तसंदर्शन इन्द्र दिव्यस्य दिवि भवस्य जनस्य राजा ईश्वरः भुवः भवसि। जगतः जङ्गमस्य पार्थिवस्य च राजा भवसि। दक्षिणे हस्ते वज्रं धिष्व निधेहि[1]। तेन निहितेन वज्रेण विश्वाः सर्वाः मायाः आसुरीः वि दयसे विबाधसे। दय दानगतिरक्षणहिंसादानेष्विति धातुः। हे अजुर्य जरयितुम् अशक्य इन्द्र त्वम् इति।

आ संयतमिन्द्र णः स्वस्तिं शत्रुतूर्याय बृहतीममृध्राम्।
यया दासान्यार्याणि वृत्रा करो वज्रिन्त्सुतुका नाहुषाणि ॥ १० ॥

आ। सम्ऽयतम्। इन्द्र। नः। स्वस्तिम्। शत्रुऽतूर्याय। बृहतीम्। अमृध्राम्।
यया। दासानि। आर्याणि। वृत्रा। करः। वज्रिन्। सुऽतुका। नाहुषाणि ॥ १० ॥

शत्रुतूर्याय शत्रूणां तारणाय बृहतीम् महतीम् अमृध्राम् अहिंसितां [2]संयतम् संयतीं[2] संगच्छमानां स्वस्तिम् क्षेमलक्षणां संपदम् हे इन्द्र त्वं नः अस्मभ्यम् आ हर। [3]हे वज्रिन् वज्रवन् इन्द्र[3] यया स्वस्त्या दासानि कर्मणा आत्मानम् उपक्षपयितृणि[4] हीनानि [5]वृत्रा वृत्राणि शत्रुभूतानि[5] [6]नाहुषाणि नहुषा मनुष्याः तत्संबन्धीनि मनुष्यजातानि आर्याणि अरणीयानि श्रेष्ठानि तथा सुतुका सुतुकानि शोभनापत्यभूतानि। पुत्रस्थानीयानि करः अकरोः[6]।

स नो नियुद्भिः पुरुहूत वेधो विश्ववाराभिरा गहि प्रयज्यो।
न या अदेवो वरते न देव आभिर्याहि तूयमा मद्र्यद्रिक् ॥ ११ ॥

---

१. निधेहि वृत्रा वृत्राणि शत्रुभूतानि S′ ( द्र. टि ५ ). २. संयतं संयतीं S′. ३. किं च हे इन्द्र वज्रिन् वज्रवन् S′. ४. °क्षपैतॄणि S′. ५. नास्ति S′ ( द्र. टि १ ). ६. मनुष्य जातानि आर्याणि अरणीयानि श्रेष्ठानि करः अकरोः तथा करः अकरोः स तादृशस्त्वं नोस्मान् प्र नाहुषाणि नहुषा मनुष्याः तत्संबंधीनि सुतुका सुतुकानि शोभनापत्यभूतानि पुत्रस्थानीयानिति आगह्यागच्छ S′.

सः। नः। नियुत्ऽभिः। पुरुऽहूत। वेधः। विश्वऽवाराभिः। आ। गहि। प्रयज्यो इति प्रऽयज्यो। न। याः। अदेवः। वरते। न। देवः। आ। आभिः[1]। याहि। तूयम्। आ। मद्र्यद्रिक्॥ ११॥

हे पुरुहूत बहुभिर्यजमानैराहूत हे वेधः सर्वस्य विधातः हे प्रयज्यो प्रकर्षेण ईड्य प्रकृष्टगमन वा स तादृशस्त्वं विश्ववाराभिः व्याप्तवालाभिर्विश्वेषां वारयित्रीभिर्वरणीयाभिर्वा नियुद्भिः अश्वैः नः अस्मान् आ गहि आगच्छ। या नियुतस्त्वागमनसाधनाः अदेवः देवविलक्षणः असुरो न वरते न वारयति तथा देवः अपि न वरते। आभिः कैरपि अनिवार्याभिर्नियुद्भिः मद्र्यद्रिक् मदभिमुखदृष्टिः अस्मदभिमुखः सन् तूयम् *[आ[2]] तूर्णम् *[एव[2]] आ याहि[3] आगच्छ।

इति तृतीयं सूक्तम्।

आभिप्लविके तृतीयेऽहनि षष्ठे च 'यस्तिग्मशृङ्गः' इति संपातसंज्ञकं सूक्तं माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे विनियुक्तम्। सूत्रं तु पूर्वसूक्तेन सह उदाहृतम्।

यस्तिग्मशृङ्गो वृषभो न भीम एकः कृष्टीश्च्यावयति[4] प्र विश्वाः।
यः[5] शश्वतो अदाशुषो गयस्य प्रयन्तासि सुष्वितराय वेदः॥ १

यः। तिग्मऽशृङ्गः। वृषभः। न। भीमः। एकः। कृष्टीः। च्यवयति। प्र। विश्वाः। यः। शश्वतः। अदाशुषः। गयस्य। प्रऽयन्ता। असि। सुस्विऽतराय। वेदः॥ १॥

हे इन्द्र यः त्वं तिग्मशृङ्गः तीक्ष्णाभ्यां शृङ्गाभ्याम् उपेतो वृषभो न भीमः वृषभ इव भयजनकः। तथा त्वम् एकः असहायस्त्वं विश्वाः सर्वाः कृष्टीः। मनुष्यनामैतत्। सर्वान् अस्माकं शत्रुजनान् प्र च्यावयसि[6] प्रकर्षेण अपगमयसि। यः च त्वं शश्वतः। बहुनामैतत्। बहोः अदाशुषः हविरदत्तवतः अयजमानस्य गयस्य। गयम् इति गृहनाम। गृहसदृशस्य यथा कोशगृहं धनपूर्णं[7] वर्तते एवम् अप्रदानेन धनपूर्णगृहसदृशस्य लुब्धकस्य वेदः धनं सुष्वितराय। सुष्ठु सोमाभिषववान् सुष्वी[8]। अतिशयेन सुष्वी सुष्वितरः। तादृशाय यजमानाय प्रयन्तासि प्रकर्षेण नियमयिता प्रदाता भवसि।

त्वं ह त्यदिन्द्र कुत्समावः शुश्रूषमाणस्तन्वा समर्ये।
दासं यच्छुष्णं कुयवं न्यस्मा अरन्धय आर्जुनेयाय शिक्षन्॥ २॥

---

१. अभिः P. २. तु. सा. [ऋ ६,२२,११]. ३. गहि S'. ४. °श्च्यावयति B. ५. प्र RW. ६. वैतु. मंपा. ७. धनंपूर्णं S'. ८. एवं स्वरः?

त्वम् । ह । त्यत् । इन्द्र । कुत्सम् । आवः । शुश्रूषमाणः । तन्वा । सऽमर्ये[१] ।
दासम् । यत् । शुष्णम् । कुयवम् । नि । अस्मै । अरन्धयः । आर्जुनेयाय । शिक्षन् ॥ २ ॥

हे इन्द्र त्वं ह त्वं खलु त्यत् तत् तदा कुत्सम् एतन्नामानं समर्ये मर्यैर्मर्त्यैर्योद्धृभिः सहितः[१] संग्रामः समर्यः तस्मिन् । अथवा मर्यैर्ऋत्विग्भिः सहिते[१] यज्ञे तन्वा शरीरेण शुश्रूषमाणः उपचरन् आवः अरक्षः । यत् यदा अस्मै आर्जुनेयाय अर्जुन्याः पुत्राय कुत्साय दासम् एतत्संज्ञकम् असुरं शुष्णम् असुरं कुयवं च असुरं शिक्षन् तेषां धनं कुत्साय प्रयच्छन् नि अरन्धयः नितरां वशम् अनैषीः ।

त्वं धृष्णो धृषता वीतहव्यं प्रावो विश्वाभिरूतिभिः सुदासम् ।
प्र पौरुकुत्सिं त्रसदस्युमावः क्षेत्रसाता वृत्रहत्येषु पूरुम् ॥ ३ ॥

त्वम् । धृष्णो इति । धृषता । वीतऽहव्यम् । प्र । आवः । विश्वाभिः । ऊतिऽभिः । सुऽदासम् ।
प्र । पौरुऽकुत्सिम् । त्रसदस्युम् । आवः । क्षेत्रऽसाता । वृत्रऽहत्येषु । पूरुम् ॥ ३ ॥

हे धृष्णो शत्रूणां धर्षक इन्द्र त्वं धृषता शत्रुधर्षकेण वज्रेण वीतहव्यम् दत्तहविष्कं सुदासम् शोभनदानम् एतन्नामकं राजानम् अथवा वीतहव्यं सुदासं च विश्वाभिः सर्वाभिः ऊतिभिः रक्षणाभिः प्रावः प्रारक्षः । किं च वृत्रहत्येषु संग्रामेषु क्षेत्रसाता क्षेत्रसातौ भूमिदाने निमित्तभूते सति पौरुकुत्सिम् पुरुकुत्सपुत्रं त्रसदस्युं राजानं पूरुं च आवः ।

त्वं नृभिर्नृमणो देववीतौ भूरीणि वृत्रा हर्यश्व हंसि ।
त्वं नि दस्युं चुमुरिं धुनिं चास्वापयो दभीतये सुहन्तु ॥ ४ ॥

त्वम् । नृऽभिः । नृऽमनः । देवऽवीतौ । भूरीणि । वृत्रा । हरिऽअश्व । हंसि ।
त्वम् । नि । दस्युम् । चुमुरिम् । धुनिम् । च । अस्वापयः । दभीतये । सुहन्तु ॥ ४ ॥

हे नृमणः नृभिर्नेतृभिः स्तोतृभिर्मननीय नृषु यजमानेषु अनुग्रहमनोयुक्त वा हे हर्यश्व हरिनामकाश्वोपेत इन्द्र त्वं देववीतौ । देवा वियन्ति आगच्छन्ति भक्षयन्त्यत्रेति[२] वा देववीतिर्यज्ञः । अथवा देवा युद्धार्थं गच्छन्त्यत्रेति देववीतिर्देवसंग्रामः । तस्मिन्निमित्तभूते सति नृभिः नेतृभिर्योद्धृभिर्मरुद्भिः सहितः सन् भूरीणि बहूनि वृत्रा वृत्राणि आवरकाणि रक्षांसि पापानि च हंसि हननं करोषि । किं च हे इन्द्र त्वं दभीतये दभीतिनामकाय राजर्षये तदर्थं सुहन्तु । अविभक्तिकोऽयं निर्देशः । सुहन्तुः शोभनहननसाधनवज्रोपेतः सन् दस्युं चुमुरिं धुनिं च नि अस्वापयः व्यनाशयः ।

---

१. वैप १,३२८५ f द्र. २. भक्षयन्तीति S'.

तव॑ च्यौ॒त्नानि॑ वज्रहस्त॒ तानि॒ नव॒ यत् पुरो॑ नव॒तिं च॑ स॒द्यः ।
नि॒वेश॑ने शतत॒माविं॑वे॒षीरह॑ च वृ॒त्रं नमु॑चिमु॒ताह॑न् ॥ ५ ॥

तव॑ । च्यौ॒त्नानि॑ । व॒ज्र॒ऽह॒स्त॒ । तानि॑ । नव॑ । यत् । पुर॑ः । न॒व॒तिम् । च॒ । स॒द्यः ।
नि॒ऽवेश॑ने । श॒त॒ऽत॒मा । अ॒वि॒वे॒षीः । अह॑न् । च॒ । वृ॒त्रम् । नमु॑चिम् । उ॒त । अह॑न् ॥

हे वज्रहस्त इन्द्र तव तानि प्रसिद्धानि बलानि च्यौत्नानि अतिदृढानि परैरनभिभाव्यानि यत् यस्मात् कारणात् च्यौत्नैस्तैर्बलैः सहितः सन् नव नवतिं च पुरः एकोनशतसंख्याकानि पुराणि असुरसंबन्धीनि सद्यः तदानीमेव धाटीमुखेनैव । व्यनाशय इति शेषः । निवेशने निवेशनाय शततमा शततमीं पुरीं च अविवेषीः व्याप्नोः । विष्लृ व्याप्तौ । यङ्लुगन्ताद् अस्मात् लुङ् । अभ्यासगुणाभावश्छान्दसः । वृत्रं च अहन् उत अपि च नमुचिम् नामासुरम् अहन् हतवान् असि ।

स॒ना ता त॑ इन्द्र॒ भोज॑नानि रा॒तह॑व्याय दा॒शुषे॑ सु॒दासे॑ ।
वृष्णे॑ ते॒ हरी॒ वृष॑णा युनज्मि॒ व्यन्तु॒ ब्रह्मा॑णि पुरुशाक॒ वाज॑म् ॥ ६ ॥

स॒ना । ता । ते॒ । इ॒न्द्र॒ । भोज॑नानि । रा॒तऽह॑व्याय । दा॒शुषे॑ । सु॒ऽदासे॑ ।
वृष्णे॑ । ते॒ । हरी॒ इति॑ । वृष॑णा । यु॒न॒ज्मि॒ । व्यन्तु॑ । ब्रह्मा॑णि । पु॒रु॒ऽशा॒क॒ । वाज॑म् ॥६॥

हे इन्द्र ते तव रातहव्याय दत्तहव्याय दाशुषे यजमानाय सुदासे ता तानि त्वया दत्तानि भोजनानि भोग्यानि धनानि सना सनानि सनातनानि । बभूवुरिति शेषः । हे पुरुशाक बहुकर्मन् इन्द्र वृष्णे कामानां वर्षित्रे ते तुभ्यम् । त्वाम् आनेतुम् इत्यर्थः । वृषणा वृषणौ हरी अश्वौ युनज्मि रथे योजयामि । ब्रह्माणि अस्मदीयानि स्तोत्राणि वाजम् बलिनं त्वां व्यन्तु गच्छन्तु ।

मा ते॑ अ॒स्यां स॑हसाव॒न्[1] परि॑ष्टाव॒घाय॑[2] भूम हरिवः परा॒दै[3] ।
त्राय॑स्व नोऽवृ॒केभि॒र्वरू॑थै॒स्तव॑ प्रि॒यासः॑ सू॒रिषु॑ स्याम ॥ ७ ॥

मा । ते॒ । अ॒स्याम् । स॒ह॒सा॒ऽव॒न् । परि॑ष्टौ । अ॒घाय॑ । भू॒म॒ । ह॒रि॒ऽवः॒ । प॒रा॒ऽदै । 
त्राय॑स्व । नः॒ । अ॒वृ॒केभिः॑ । वरू॑थैः । तव॑ । प्रि॒यासः॑ । सू॒रिषु॑ । स्या॒म॒ ॥ ७ ॥

हे सहसावन् बलवन् इन्द्र । मध्ये तृतीयाविभक्तिश्छान्दसी । अथवा सह एव सहसं तद्वन् । मतुपि 'अन्येषामपि दृश्यते' ( पा ६,३,१३७ ) इति दीर्घः । हे हरिवः हरितवर्णोपेताश्व इन्द्र ते तव अस्यां क्रियमाणायां परिष्टौ पर्येषणायां परादै परा-

---

१. सहसावन् मै ४,१२,३. २. परिष्टा अघाय मै. ३. परादैः मै.

दानाय परित्यागाय एवंलक्षणाय अघाय पापाय वयं मा भूम । किं च हे इन्द्र नः अस्मान् अवृकेभिः अवृकैरहिंसितव्यैः वरूथैः । वारयन्त्युपद्रवान् इति वरूथानि रक्षणानि । तैर्नः अस्मान् त्रायस्व पाहि । वयं च सूरिषु स्तोतृषु विद्वत्सु मध्ये तव प्रियासः प्रियाः स्याम भवेम ।

प्रियास इत् ते मघवन्नभिष्टौ नरो मदेम शरणे सखायः ।
नि तुर्वशं नि याद्वं शिशीह्यतिथिग्वाय शंस्यं करिष्यन् ॥ ८ ॥

प्रियासः । इत् । ते । मघऽवन् । अभिष्टौ । नरः । मदेम । शरणे । सखायः ।
नि । तुर्वशम् । नि । याद्वम् । शिशीहि । अतिथिऽग्वाय । शंस्यम् । करिष्यन् ॥ ८ ॥

हे मघवन् धनवन्निन्द्र ते तव अभिष्टौ अभ्येषणायाम् अभिगमनेच्छायां नरः हविषां नेतारो यजमाना वयं सखायः तव सखिभूताः समानख्यानाः अत एव प्रियास इत् प्रिया एव सन्तः शरणे । गृहनामैतत् । मदीय एव गृहे मदेम हृष्टा भवेम । किं च अतिथिग्वाय अतिथ्यर्था गावो यस्य सः अतिथिग्वः अथवा सत्कारार्थम् अतिथीन् गच्छतीत्यतिथिग्वः तस्मै राज्ञे शंस्यम् शंसनीयं प्रख्यापनीयं सुखं करिष्यन् कुर्वंस्त्वं तुर्वशम् एतन्नामकं राजानं नि शिशीहि निशितं कुरु । तथा याद्वम् यदुकुलोत्पन्नं राजानं च नि शिशीहि ।

सद्यश्चिन्नु ते मघवन्नभिष्टौ नरः शंसन्त्युक्थशास उक्था ।
ये ते हवेभिर्वि पणीँरदाशन्नस्मान् वृणीष्व युज्याय तस्मै ॥ ९ ॥

सद्यः । चित् । नु । ते । मघऽवन् । अभिष्टौ । नरः । शंसन्ति । उक्थऽशासः[1] । उक्था ।
ये । ते । हवेभिः । वि । पणीन् । अदाशन् । अस्मान् । वृणीष्व । युज्याय । तस्मै ॥९॥

हे मघवन् इन्द्र ते तव अभिष्टौ अभ्येषणायाम् अभिगत्यां सत्यां तव अभिगमने सति नरः स्तुतिनेतार ऋत्विजः उक्थशासः उक्थानां शस्त्राणां शंसितारः सद्यश्चिन्नु तवाभिगमनसमय[2] एव उक्था उक्थानि शस्त्राणि शंसन्ति कुर्वन्ति । ते इत्युक्तं के त इति तान् विशिनष्टि — ये नरः नेतार ऋत्विजः ते तव[3] हवेभिः हवैः आह्वानैः पणीन् वणिग्भूतान् लुब्धकान् अयजतो नरान् व्यदाशन् । दाशतिर्वधकर्मा । विशेषेण हिंसितवन्तः । ते शंसन्तीति पूर्वत्र संबन्धः । यस्माद् एवं तस्माद् उक्थानां शंसितॄन् अस्मान् तस्मै प्रसिद्धाय युज्याय योजयितव्याय फलाय यागाय वा वृणीष्व वरणं कुरु स्वीकुरु ।

---

१. °शसः > °शासः P²; °शासः > °शसः J. २. °गमनसमसमय S'. ३. त्वां S'.

एते स्तोमा नरां नृतम तुभ्यमस्मद्र्यञ्चो ददतो मघानि ।
तेषामिन्द्र वृत्रहत्ये शिवो भूः सखा च शूरोऽविता च नृणाम् ॥ १० ॥

एते । स्तोमाः । नराम् । नृऽतम । तुभ्यम् । अस्मद्र्यञ्चः । ददतः । मघानि ।
तेषाम् । इन्द्र । वृत्रऽहत्ये । शिवः । भूः । सखा । च । शूरः । अविता । च । नृणाम् ॥

नराम् नेतॄणां मध्ये हे नृतम अतिशयेन नेतः इन्द्र अस्मद्र्यञ्चः अस्मान् अञ्चन्तः अस्मदभिमुखाः मघानि मंहनीयानि धनानि हविर्लक्षणानि ददतः [1]प्रयच्छन्तः सन्तः[1] एते इदानीं कृतप्रकाराः स्तोमाः स्तवाः तुभ्यं त्वदर्थम् । कृता इति शेषः । यद्वा मघानि ददतः प्रयच्छतः । चतुर्थ्यर्थे षष्ठी । प्रयच्छते तुभ्यम् इति व्याख्येयम् । हे इन्द्र तेषाम् एतेषाम् अस्माभिः कृतानां स्तोमानाम् । यद्वा तेषां स्तोमसंपादकानाम् अस्माकम् इति व्याख्येयम् । वृत्रहत्ये वृत्रस्य आवरकस्य पापस्य वा हत्ये हनने निमित्तभूते सति शिवः सुखयिता[2] भूः भव । किं च नृणाम् [3]हविषां स्तुतीनां वा[3] नेतॄणाम् अस्माकं शूरः त्वं सखा च भूः सखिवन्मित्रभूतो भव अविता च रक्षिता च भूः भव ।

नू इन्द्र शूर स्तवमान ऊती ब्रह्मजूतस्तन्वा वावृधस्व ।
उप नो वाजान् मिमीह्युप स्तीन् यूयं पात स्वस्तिभिः सदा नः ॥ ११ ॥

नु । इन्द्र । शूर । स्तवमानः । ऊती । ब्रह्मऽजूतः । तन्वा । ववृधस्व ।
उप । नः । वाजान् । मिमीहि । उप । स्तीन् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥

हे शूर शौर्योपेत इन्द्र ऊती ऊत्या रक्षणया निमित्तभूतया स्तवमानः । कर्मणि कर्तृप्रत्ययः । अस्माभिः स्तूयमानः तथा ब्रह्मजूतः ब्रह्मणा हविषा जूतः प्रापितश्च सन् तन्वा स्वकीयेन शरीरेण ववृधस्व अत्यर्थं प्रवृद्धो भव । ततो नः अस्मभ्यं वाजान् अन्नानि उप मिमीहि । उप प्रयच्छेत्यर्थः । तथा स्तीन् स्त्यायन्ति समर्धयन्ति कुलम् इति स्तयः पुत्राद्याः । तानपि उप मिमीहि । हे अन्ये अग्न्यादयो देवाः यूयम् अपि स्वस्तिभिः । सु अस्तीति स्वस्ति क्षेमः । तैः सदा नः अस्मान् पात रक्षत ।

इति चतुर्थोऽनुवाकः ।

अभिप्लवे षडहे 'आ याहि सुषुमा हि ते' इत्यादयो यथाक्रमं षड् आज्यस्तोत्रिया भवन्ति । तद् उक्तं वैताने — "अभिप्लवे 'आ याहि सुषुमा हि ते' इति षड् आज्यस्तोत्रिया आरम्भणीयापर्यासवर्जम्" ( वैताश्रौ ३१,२१ ) इति । पाठक्रमात् 'इन्द्रं वो विश्वत-

---

१. प्रयच्छतोस्मभ्यम S'. २. सुखैता S'. ३. हविषा स्तुतीनां S'.

स्परि' ( अ २०,३९,१ ), 'व्यन्तरिक्षमतिरत्' ( अ २०,३९,२ ) **इत्येतयोः प्रयोगे प्राप्ते प्रतिषेधार्थम् आरम्भणीयापर्यासवर्जमित्युक्तम् । तेन** 'आ याहि सुषुमा हि ते' ( अ २०,३८,१-३ ), 'इन्द्रमिद् गाथिनो बृहत्' ( अ २०,३८,४-६ ), 'इन्द्रेण सं हि दृक्षसे' ( अ २०,४०,१-३ ), 'इन्द्रो दधीचो अस्थभिः' ( अ २०,४१,१-३ ), 'वाचमष्टापदीमहम्' ( अ २०,४२,१-३ ), 'भिन्धि विश्वा अप द्विषः' ( अ २०,४३,१-३ ) **इति षट् स्तोत्रियाः ।**

**तथा गवामयनस्य चतुर्विंशे** 'इन्द्रमिद् गाथिनो बृहत्' ( अ २०,३८,४-६ ) **इत्याज्यस्तोत्रियो भवति ।** "चतुर्विंशे 'इन्द्रमिद् गाथिनो बृहद्' इत्याज्यस्तोत्रियः" ( वैताश्रौ ३१,१६ ) **इति सूत्रितत्वात् ।**

**तथा स्वरसामाख्येषु त्रिष्वहःसु यथाक्रमम्** 'आ याहि' **इत्यादय आज्यस्तोत्रिया भवन्ति । तद् उक्तं वैताने**—"स्वरसामसु 'आ याहि सुषुमा हि ते', 'इन्द्रमिद् गाथिनो बृहद्', 'इन्द्रेण सं हि दृक्षसे' इति" ( वैताश्रौ ३३,३ ) **इति ।**

**आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम ॥ १ ॥**

आ । याहि । सुसुम । हि । ते । इन्द्र । सोमम् । पिब । इमम् । आ । इदम् । बर्हिः । सदः । मम ॥ १ ॥

**आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि नः शृणु ॥ २ ॥**

आ । त्वा । ब्रह्मऽयुजा । हरी इति । वहताम् । इन्द्र । केशिना । उप । ब्रह्माणि । नः । शृणु ॥

**ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः । सुतावन्तो हवामहे ॥ ३ ॥**

ब्रह्माणः । त्वा । वयम् । युजा । सोमऽपाम् । इन्द्र । सोमिनः । सुतऽवन्तः । हवामहे ॥ ३ ॥

**इन्द्रमिद् गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥ ४ ॥**

इन्द्रम् । इत् । गाथिनः । बृहत् । इन्द्रम् । अर्केभिः । अर्किणः । इन्द्रम् । वाणीः । अनुषत ॥

**इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः ॥ ५ ॥**

इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ । वचःऽयुजा । इन्द्रः । वज्री । हिरण्ययः ॥

**इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद् दिवि । वि गोभिरद्रिमैरयत् ॥ ६ ॥**

इन्द्रः । दीर्घाय । चक्षसे । आ । सूर्यम् । रोहयत् । दिवि । वि । गोभिः । अद्रिम् । ऐरयत् ॥

**इति पञ्चमेऽनुवाके प्रथमं सूक्तम् ।**

**गवामयनादौ संवत्सरे प्रातःसवने अनुरूपाद् अनन्तरम्** 'इन्द्रं वो विश्वतस्परि' ( अ २०,३९,१ ) **इति ऋग् आरम्भणीया । तत्रैव** 'व्यन्तरिक्षम् अतिरत्'

( अ २०,३९,२ ) **इति पर्यासो भवति । तद् उक्तं वैताने** — " 'इन्द्रं वो विश्वतस्परि' इत्यारम्भणीया । 'व्यन्तरिक्षमतिरत्' इति पर्यासः" ( वैताश्रौ ३५,१०;११ ) **इति । आरभ्यते उक्थमुखम् अनया इत्यारम्भणीया । पर्यस्यते परिसमाप्यते अनेन शस्त्रमिति पर्यासः ।**

**तथा गोसवविवधवैश्यस्तोमेषु त्रिषु एकाहेषु** 'इन्द्रं वो विश्वतस्परि' ( अ २०,३९ ), 'आ नो विश्वासु हव्यः' ( अ २०,१०४,३ ) **एतौ आज्यपृष्ठस्तोत्रियौ भवतः । तद् उक्तं वैताने** — "गोसवविवधवैश्यस्तोमेषु 'इन्द्रं वो विश्वतस्पर्या णो विश्वासु हव्यः' इति" ( वैताश्रौ ३९,१० ) **इति ।**

**इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥ १ ॥**

इन्द्रम् । वः । विश्वतः । परि । हवामहे । जनेभ्यः । अस्माकम् । अस्तु । केवलः ॥ १ ॥

**व्य१न्तरिक्षमतिरन्मदे सोमस्य रोचना । इन्द्रो यदभिनद् वलम् ॥ २ ॥**

वि । अन्तरिक्षम् । अतिरत् । मदे । सोमस्य । रोचना । इन्द्रः । यत् । अभिनत् । वलम् ॥

**उद् गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः । अर्वाञ्चं नुनुदे वलम् ॥३॥**

उत् । गाः । आजत् । अङ्गिरःऽभ्यः । आविः । कृण्वन् । गुहा । सतीः । अर्वाञ्चम् । नुनुदे । वलम् ॥

**इन्द्रेण रोचना दिवो दृळ्हानि दृंहितानि च । स्थिराणि न पराणुदे ॥४॥**

इन्द्रेण । रोचना । दिवः । दृळ्हानि । दृंहितानि । च । स्थिराणि । न । पराऽनुदे ॥ ४ ॥

**अपामूर्मिर्मदन्निव स्तोम इन्द्राजिरायते । वि ते मदा अराजिषुः ॥ ५ ॥**

अपाम् । ऊर्मिः । मदन्ऽइव । स्तोमः । इन्द्र । अजिरऽयते । वि । ते । मदाः । अराजिषुः ॥

**इति पञ्चमेऽनुवाके द्वितीयं सूक्तम् ।**

'इन्द्रेण सं हि दृक्षसे' **इत्यस्य** 'आ याहि सुषुमा हि ते' ( अ २०,३८ ) **इत्यत्र विनियोग उक्तः ।**

**तथा पृष्ठ्यस्य तृतीयेऽहनि** 'इन्द्रेण सं हि दृक्षसे' ( अ २०,४० ), 'वयं घ त्वा सुतावन्तः' ( अ २०,५२ ), 'त्वं न इन्द्रा भर' ( अ २०,१०८ ) **इत्येते आज्यपृष्ठोक्थस्तोत्रिया भवन्ति । तद् उक्तं वैताने** — "तृतीये 'इन्द्रेण सं हि दृक्षसे', 'वयं घ त्वा सुतावन्तः', 'त्वं न इन्द्रा भर' इति" ( वैताश्रौ ४२,२ ) **इति ।**

**इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मन्दू[1] समानवर्चसा ॥१॥**

---

[1] मंद्व B,Bh.

इन्द्रेण । सम् । हि । दृक्षसे । सम्ऽजग्मानः । अबिभ्युषा । मन्दू इति । समानऽवर्चसा ॥१॥

**अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ॥ २ ॥**

अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति । गणैः । इन्द्रस्य । काम्यैः ॥ २ ॥

**आदह स्वधामनु पुनर्गर्भत्वमेरिरे । दधाना नाम यज्ञियम् ॥ ३ ॥**

आत् । अह । स्वधाम् । अनु । पुनः । गर्भऽत्वम् । आऽईरिरे । दधानाः । नाम । यज्ञियम् ॥

**इति पञ्चमेऽनुवाके तृतीयं सूक्तम् ।**

'इन्द्रो दधीचो अस्थभिः' **इत्यस्य** 'आ याहि सुषुमा हि ते' (अ २०,३८) **इत्यत्र विनियोग उक्तः ।**

**तथा पृष्ठ्यषडहस्य एकविंशस्तोमके चतुर्थेऽहनि एकाहैकीभूते** 'इन्द्रो दधीचो अस्थभिः' **इत्यादयः आज्यपृष्ठोक्थस्तोत्रिया भवन्ति । तद् उक्तं वैताने**—"पृष्ठ्यस्यैकविंशे 'इन्द्रो दधीचो अस्थभिः' (अ २०,४१), 'विश्वाः पृतना अभिभूतरं नरम्' (अ २०,५४), 'एवा ह्यसि वीरयुः' (अ २०,६०) इति" (वैताश्रौ ४०,१४) **इति ।**

**इन्द्रो दधीचो [1]अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥ १ ॥**

इन्द्रः । दधीचः । [1]अस्थऽभिः । वृत्राणि । अप्रतिऽस्कुतः । जघान । नवतीः । नव ॥१॥

**इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् । तद् विदच्छर्यणावति ॥ २ ॥**

इच्छन् । अश्वस्य । यत् । शिरः । पर्वतेषु । अपऽश्रितम् । तत् । विदत् । शर्यणाऽवति ॥

**अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे ॥ ३ ॥**

अत्र । अह । गोः । अमन्वत । नाम । त्वष्टुः । अपीच्यम् । इत्था । चन्द्रमसः । गृहे ॥ ३ ॥

**इति पञ्चमेऽनुवाके चतुर्थं सूक्तम् ।**

'वाचमष्टापदीमहम्' **इत्यस्य विनियोगः** 'आ याहि सुषुमा हि ते' (अ २०,३८) **इत्यनेन सह उक्तः ।**

**तथा अश्वमेधस्य त्र्यहस्य द्वितीयेऽहनि** 'वाचमष्टापदीमहम्' (अ २०,४२), 'स्वादोरित्था विषूवतः' (अ २०,१०९) **इत्येतौ आज्यपृष्ठस्तोत्रियौ भवतः । तद् उक्तं वैताने**—"अश्वमेधस्य 'वाचमष्टापदीमहम्', 'स्वादोरित्था विषूवतः' इति" (वैताश्रौ ४१,६) **इति ।**

---

1. अस्थि° C,P.

वाचम॒ष्टाप॑दीम॒हं नव॑स्रक्तिमृत॒स्पृश॑म् । इन्द्रा॒त् परि॑ त॒न्वं॑ ममे ॥ १ ॥

वाच॑म् । अ॒ष्टाऽप॑दीम् । अ॒हम् । नव॑ऽस्रक्तिम् । ऋ॒त॒ऽस्पृश॑म् । इन्द्रा॑त् । परि॑ । त॒न्व॑म् । म॒मे ॥

अनु॑ त्वा रोद॑सी उ॒भे क्रक्ष॑माणमकृपेताम् । इन्द्र॒ यद् द॑स्यु॒हाऽभ॑वः ॥२॥

अनु॑ । त्वा॒ । रोद॑सी॒ इति॑ । उ॒भे इति॑ । क्रक्ष॑माणम् । अ॒कृ॒पे॒ता॒म् । इन्द्र॑ । यत् । द॒स्यु॒ऽहा । अभ॑वः ॥ २ ॥

उ॒त्तिष्ठ॒न्नोज॑सा स॒ह पी॒त्वी शिप्रे॑ अवेपयः । सोम॑मिन्द्र च॒मू सु॒तम् ॥३॥

उ॒त्ऽतिष्ठ॑न् । ओज॑सा । स॒ह । पी॒त्वी । शिप्रे॒ इति॑ । अ॒वे॒प॒यः॒ । सोम॑म् । इ॒न्द्र॒ । च॒मू इति॑ । सु॒तम् ॥

इति पञ्चमेऽनुवाके पञ्चमं सूक्तम् ।

'भिन्धि विश्वा अप द्विषः' इत्यस्य विनियोगः 'आ याहि' (अ २०,३८) इत्यत्र उक्तः ।

तथा अप्तोर्यामिण क्रतौ उपरिष्टान्माध्यंदिनवचनात् प्रातःसवने 'भिन्धि विश्वा अप द्विषः' (अ २०,४३) इत्यनुरूपम् अभितः 'आ नो याहि' (अ २०,४) इत्यनुरूपो भवति। तद् उक्तं वैताने—"'भिन्धि विश्वा अप द्विषः' इत्यनुरूपमभितः 'आ नो याहि' इति" (वैताश्रौ २७,२०) इति ।

भि॒न्धि विश्वा॒ अप॒ द्विषः॒ परि॒ बाधो॑ ज॒ही मृधः॑ । वसु॑ स्पा॒र्हं तदा भ॑र ॥१॥

भि॒न्धि । विश्वाः॑ । अप॑ । द्विषः॑ । परि॑ । बाधः॑ । ज॒हि । मृधः॑ । वसु॑ । स्पा॒र्हम् । तत् । आ । भ॒र ॥

यद् वी॒ला[1]विन्द्र॒ यत् स्थि॒रे यत् पर्शा॑ने॒ परा॑भृतम् । वसु॑ स्पा॒र्हं तदा भ॑र ॥२॥

यत् । वी॒लौ । इ॒न्द्र॒ । यत् । स्थि॒रे । यत् । पर्शा॑ने । परा॑ऽभृतम् । वसु॑ । स्पा॒र्हम् । तत् । आ । भ॒र ॥

यस्य॑ ते वि॒श्वमा॑नुषो॒ भूरे॑र्द॒त्तस्य॒ वेद॑ति । वसु॑ स्पा॒र्हं तदा भ॑र ॥ ३ ॥

यस्य॑ । ते॒ । वि॒श्वऽमा॑नुषः । भूरेः॑ । द॒त्तस्य॑ । वेद॑ति[2] । वसु॑ । स्पा॒र्हम् । तत् । आ । भ॒र ॥

इति पञ्चमेऽनुवाके षष्ठं सूक्तम् ।

प्र स॒म्राजं॑ चर्षणी॒नामिन्द्रं॑ स्तोता॒ नव्यं॑ गी॒र्भिः । नरं॑ नृ॒षाहं॒ मंहि॑ष्ठम् ॥ १ ॥

प्र । स॒म्ऽराज॑म् । च॒र्ष॒णी॒नाम् । इन्द्र॑म् । स्तो॒त॒ । नव्य॑म् । गी॒ःऽभिः । नर॑म् । नृ॒ऽसह॑म् । मंहि॑ष्ठम् ॥

यस्मि॑न्नु॒क्थानि॒ रण्य॑न्ति॒ विश्वा॑नि च श्रव॒स्या॑ । अ॒पामवो॒ न स॑मु॒द्रे ॥२॥

---

१. वीला° Bh,C; वीळा° K,Km,V, ऋ ६,४५,४१. २. वदति P².

यस्मिन्। उक्थानि। रण्यन्ति। विश्वानि। च। श्रवस्या। अपाम्। अवः। न। समुद्रे ॥२॥

तं सुष्टुत्या विवासे ज्येष्ठराजं भरे कृत्नुम्। महो वाजिनं सनिभ्यः ॥३॥

तम्। सुऽस्तुत्या। आ। विवासे। ज्येष्ठऽराजम्। भरे। कृत्नुम्। महः। वाजिनम्। सनिऽभ्यः ॥

इति पञ्चमेऽनुवाके सप्तमं सूक्तम्।

**तीव्रसुदुपशदोपहव्याख्येषु त्रिषु एकाहेषु** 'अयमु ते समतसि' (अ २०,४५), 'इमा उ त्वा पुरूवसो' (अ २०,१०४) **एतौ आज्यपृष्ठस्तोत्रियौ यथाक्रमं भवतः। तथा व्युष्टिद्व्यहे एतौ आज्यपृष्ठस्तोत्रियौ भवतः। तद् उक्तं वैताने**— "तीव्रसुदुपशदोपहव्येषु 'अयमु ते समतसि', 'इमा उ त्वा पुरूवसो' इति। व्युष्टिद्व्यहे च" (वैताश्रौ ३९,९) **इति।**

**तथा संसर्पचतुर्वीरयोश्चतुरहयोः सर्वेष्वहःसु एतौ आज्यपृष्ठस्तोत्रियौ भवतः। तद् उक्तं वैताने**— "संसर्पचतुर्वीरयोः 'अयमु ते समतसि', 'इमा उ त्वा पुरूवसो' इति" (वैताश्रौ ४१,१३) **इति।**

अयमु ते समतसि कपोत इव गर्भधिम्। वचस्तच्चिन्न ओहसे ॥ १ ॥

अयम्। ऊं इति। ते। सम्। अतसि। कपोतःऽइव। गर्भऽधिम्। वचः। तत्। चित्। नः। ओहसे ॥ १ ॥

स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते। विभूतिरस्तु सूनृता ॥ २ ॥

स्तोत्रम्। राधानाम्। पते। गिर्वाहः। वीर। यस्य। ते। विऽभूतिः। अस्तु। सूनृता ॥२॥

ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन् वाजे शतक्रतो। समन्येषु[1] ब्रवावहै ॥ ३ ॥

ऊर्ध्वः। तिष्ठ। नः। ऊतये। अस्मिन्। वाजे। शतक्रतो इति शतऽक्रतो। सम्। अन्येषु। ब्रवावहै ॥

इति पञ्चमेऽनुवाके अष्टमं सूक्तम्।

**स्वरसामाख्येषु त्रिष्वहःसु अभिप्लवे च** 'सं चोदय चित्रमर्वाक्' (अ २०,७१, ११), 'प्रणेतारं वस्यो अच्छा' (अ २०,४६) **एतौ आज्यपृष्ठस्तोत्रियौ पर्यायेण भवतः। तद् उक्तं वैताने**— "स्वरसामसु 'सं चोदय चित्रमर्वाक्', 'प्रणेतारं वस्यो अच्छ' इति पर्यायेण। अभिप्लवे च" (वैताश्रौ ४२,८) **इति।**

प्रणेतारं वस्यो अच्छा कर्तारं ज्योतिः समत्सु। सासह्वांसं युधामित्रान् ॥ १ ॥

प्रऽनेतारम्। वस्यः। अच्छ। कर्तारम्। ज्योतिः। समत्ऽसु। ससह्वांसम्[2]। युधा। अमित्रान् ॥

---

१. समन्येषु B. २. तु. ऋ. पपा ८,१६,१०; वैतु. शंपा. ससऽह्वांसम्.

स नः पप्रिः पारयाति स्वस्ति नावा पुरुहूतः । इन्द्रो विश्वा अति द्विषः ॥ २ ॥
सः । नः । पप्रिः । पारयाति । स्वस्ति । नावा । पुरुऽहूतः । इन्द्रः । विश्वाः । अति । द्विषः ॥ २ ॥

स त्वं न इन्द्र वाजेभिर्दशस्या च गातुया च । अच्छा च नः सुम्नं नेषि ॥ ३ ॥
सः । त्वम् । नः । इन्द्र । वाजेभिः । दशस्य । च । गातुऽया । च । अच्छ । च । नः । सुम्नम् । नेषि ॥

**इति पञ्चमेऽनुवाके नवमं सूक्तम् ।**

**अतिरात्रे अतिरिक्तोक्थेषु** 'तमिन्द्रं वाजयामसि (अ २०,४७), 'महाँ इन्द्रो य ओजसा' (अ २०,१३८) **इत्येतौ स्तोत्रियानुरूपौ भवतः । तद् उक्तं वैताने**— "'तमिन्द्रं वाजयामसि', 'महाँ इन्द्रो य ओजसा' इति स्तोत्रियानुरूपौ" (वैताश्रौ २७,२८) **इति ।**

**तथा छन्दोमाख्येषु त्रिष्वहःसु प्रातःसवने** 'इन्द्रा याहि चित्रभानो' (अ २०, ८४), 'तमिन्द्रं वाजयामसि' (अ २०,४७), 'महाँ इन्द्रो य ओजसा' (अ २०,१३८) **इत्येते आज्यस्तोत्रिया भवन्ति । तद् उक्तं वैताने**—"छन्दोमेषु 'इन्द्रा याहि चित्रभानो', 'तमिन्द्रं वाजयामसि', 'महाँ इन्द्रो य ओजसा' इत्याज्यस्तोत्रियाः" (वैताश्रौ ३३, १४) **इति ।**

**तथा वैश्वदेवादीनां त्र्यहाणां द्वितीयेष्वहःसु यथाक्रमम्** 'तमिन्द्रं वाजयामसि' (अ २०,४७), 'अस्तावि मन्म पूर्व्यम्' (अ २०,११९), 'तं ते मदं गृणीमसि' (अ २०, ६१) **एते आज्यपृष्ठोक्थस्तोत्रिया भवन्ति । तद् उक्तं वैताने**—"द्वितीयेषु 'तमिन्द्रं वाजयामसि', 'अस्तावि मन्म पूर्व्यम्', 'तं ते मदं गृणीमसि' इति" (वैताश्रौ ४१,५) **इति ।**

**तथा साकमेधत्र्यहस्य तृतीयेऽहनि** 'तमिन्द्रं वाजयामसि' (अ २०,४७), 'श्रायन्त इव सूर्यम्' (अ २०,५८) **इत्येतौ आज्यपृष्ठस्तोत्रियौ भवतः । तद् उक्तं वैताने**— "साकमेधस्य 'तमिन्द्रं वाजयामसि', 'श्रायन्त इव सूर्यम्' इति" (वैताश्रौ ४१,९) **इति ।**

तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् ॥ १ ॥
तम् । इन्द्रम् । वाजयामसि । महे । वृत्राय । हन्तवे । सः । वृषा । वृषभः । भुवत् ॥ १ ॥

इन्द्रः स दामने कृत ओजिष्ठः स मदे हितः । द्युम्नी श्लोकी स सोम्यः[1] ॥२॥
इन्द्रः । सः । दामने । कृतः । ओजिष्ठः । सः । मदे । हितः । द्युम्नी । श्लोकी । सः । सोम्यः ॥

गिरा वज्रो न संभृतः सबलो अनपच्युतः । ववक्ष ऋष्वो अस्तृतः ॥ ३ ॥
गिरा । वज्रः । न । सम्ऽभृतः । सऽबलः । अनपऽच्युतः । ववक्षे । ऋष्वः । अस्तृतः ॥ ३ ॥

---

१. सोम्यः B,B[h].

इन्द्रमिद् गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥ ४ ॥
इन्द्रम् । इत् । गाथिनः । बृहत् । इन्द्रम् । अर्केभिः । अर्किणः । इन्द्रम् । वाणीः । अनूषत ॥

इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः ॥५॥
इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ । वचःऽयुजा । इन्द्रः । वज्री । हिरण्ययः ॥

इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद् दिवि । वि गोभिरद्रिमैरयत् ॥६॥
इन्द्रः । दीर्घाय । चक्षसे । आ । सूर्यम् । रोहयत् । दिवि । वि । गोभिः । अद्रिम् । ऐरयत् ॥

आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम ॥७॥
आ । याहि । सुसुम । हि । ते । इन्द्र । सोमम् । पिब । इमम् । आ । इदम् । बर्हिः । सदः । मम ॥

आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि नः शृणु ॥८॥
आ । त्वा । ब्रह्मऽयुजा । हरी इति । वहताम् । इन्द्र । केशिना । उप । ब्रह्माणि । नः । शृणु ॥

ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः । सुतावन्तो हवामहे ॥ ९ ॥
ब्रह्माणः । त्वा । वयम् । युजा । सोमऽपाम् । इन्द्र । सोमिनः । सुतऽवन्तः । हवामहे ॥

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ १० ॥
युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि । तस्थुषः । रोचन्ते । रोचना । दिवि ॥१०॥

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥ ११ ॥
युञ्जन्ति । अस्य । काम्या । हरी इति । विऽपक्षसा । रथे । शोणा । धृष्णू इति । नृऽवाहसा ॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ १२ ॥
केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे । सम् । उषत्ऽभिः । अजायथाः ॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ १३ ॥
उत् । ऊं इति । त्यम् । जातऽवेदसम् । देवम् । वहन्ति । केतवः । दृशे । विश्वाय । सूर्यम् ॥

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥ १४ ॥
अप । त्ये । तायवः । यथा । नक्षत्रा । यन्ति । अक्तुऽभिः । सूराय । विश्वऽचक्षसे ॥१४॥

अदृश्रन्नस्य[1] केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥१५॥

अदृश्रन् । अस्य । केतवः । वि । रश्मयः । जनान् । अनु । भ्राजन्तः । अग्नयः । यथा ॥

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचन[2] ॥ १६ ॥

तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य । विश्वम् । आ । भासि । रोचन ॥ १६ ॥

प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषीः[3] । प्रत्यङ् विश्वं स्वर्दृशे ॥१७॥

प्रत्यङ् । देवानाम् । विशः । प्रत्यङ् । उत् । एषि । मानुषीः । प्रत्यङ् । विश्वम् । स्वः । दृशे ॥

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ॥ १८ ॥

येन । पावक । चक्षसा । भुरण्यन्तम् । जनान् । अनु । त्वम् । वरुण । पश्यसि ॥ १८ ॥

वि द्यामेषि रजस्पृथ्वहर्मिमानो[4] अक्तुभिः । पश्यं जन्मानि सूर्य ॥ १९ ॥

वि । द्याम् । एषि । रजः । पृथु । अहः । मिमानः । अक्तुऽभिः । पश्यन् । जन्मानि । सूर्य ॥

सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षणम्[5] ॥ २० ॥

सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सूर्य । शोचिःऽकेशम् । विऽचक्षणम् ॥२०॥

अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः । ताभिर्याति स्वयुक्तिभिः ॥२१॥

अयुक्त । सप्त । शुन्ध्युवः । सूरः । रथस्य । नप्त्यः । ताभिः । याति । स्वयुक्तिऽभिः ॥

इति पञ्चमेऽनुवाके दशमं सूक्तम् ।

विषुवति सौर्यपृष्ठे 'अभि त्वा वर्चसा गिरः' इति चतुर्थः स्तोत्रियः ।

अभि त्वा वर्चसा गिरः सिञ्चन्त्या चरण्युवः[6] । अभि वत्सं न धेनवः ॥ १ ॥

[7][अभि । त्वा । वर्चसा । गिरः । सिञ्चन्ति । आ । चरण्युवः । अभि । वत्सम् । न । धेनवः ॥][7]

---

१. अदृश्रमस्य RW. ऋ १,५०,३. २. रोचनम् RW. ऋ १,५०,४. ३. मानुषान् RW. ऋ १,५०,५. ४. °पृथ्वहा मि° RW. ऋ १,५०,७. ५. विचक्षण RW. ऋ १,५०,८. ६. तु. RW.; वैतु शौपा. सात. सिञ्चन्तीराचरण्यवः; सिंचंतिराचरण्यवः K^m, J. ७. पपा. अभावः P, P^s, J, Cp.

ता अर्षन्ति[1] शुभ्रियः पृञ्चतीर्वर्चसा[2] पयः[3] । जातं जनिर्यथा[4] हृदा[5] ॥ २ ॥

*[ताः । अर्षन्ति । शुभ्रियः । पृञ्चतीः । वर्चसा । पयः । जातम् । जनिः । यथा । हृदा ॥][6]

[7]वज्रापवसाध्यः कीर्तिर्म्रियमाणमावहन्[7] । मह्यमायुर्घृतं पयः ॥ ३ ॥

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ ४ ॥

आ । अयम् । गौः । पृश्निः । अक्रमीत् । असदत् । मातरम् । पुरः । पितरम् । च । प्रऽयन् । स्वः ॥ ४ ॥

अन्तश्चरति रोचना अस्य प्राणादपानतः[8] । व्यख्यन्महिषः स्वः[9] ॥ ५ ॥

अन्तः । चरति । रोचना । अस्य । प्राणात् । अपानतः । वि । अख्यन् । महिषः । स्वः ॥

त्रिंशद् धामा वि राजति वाक् पतङ्गो अशिश्रियत् । प्रति वस्तोरहर्द्युभिः ॥ ६ ॥[10]

त्रिंशत् । धाम । वि । राजति । वाक् । पतङ्गः । अशिश्रियत् । प्रति । वस्तोः । अहः । द्युऽभिः ॥

इति पञ्चमेऽनुवाके एकादशं सूक्तम् ।

विषुवति सौर्यपृष्ठे 'यच्छक्रा वाचमारुहन्' इति षष्ठः स्तोत्रियः ।

यच्छक्रा [11]वाचमारुहन्नन्तरिक्षं[11] सिषासथः[12] । [13]सं देवा अमदन् वृषा[13] ॥ १ ॥[14]

शक्रो वाचमधृष्टायोरुवाचो[15] अधृष्णुहि[16] । मंहिष्ठ[17] आ मदर्दिवि[18] ॥ २ ॥[19]

---

१. अर्षन्तु पै १८,२२,११. २. तु· RW.; वैतु. शंपा. सात. पृञ्चन्ती°; पृञ्चंती° Bh, Km,Sm; पृञ्चतीर्मधुना ऋ १,२३,१६. ३. तु. RW. ऋ.; वैतु. शंपा. सात. प्रियः. ४. जात्रीर्यथा शंपा. ५. प्रिया Km. ६. पपा. अभावः P,P², J,Cp. ७. वज्रापवसाध्यः° C,Sm,Cs; वज्रापयुसाध्यः° D; वज्रापवसाध्मः° J,R; वज्रायवसाध्य° K,V; °कीर्तिम्रिय° C; °कीर्तिम्रिय° D,Sm,Cs,K,V; °वहान् E,J,P,P²; °वहान् R.; स्वराभावः P; उग्राय यशसो धियः कीर्त्तिसिन्द्रियमा वहान् RW.; वज्रएवसाध्वीयः ? कीर्ति श्रयमाणम् ? आ वहान् पै १८,२३,१. ८. °पानती ऋ १०,१८९,२. ९. दिवम् ऋ. १०. पाभे. पृ ६८६ टि १-५ द्र. ११. वाचमरुह° D,V; वाचमारुह° Km; वा···न्नंतरिक्षं E; °रिक्ष B,Bh; वाचमारुहन्तंतरिक्षं P²,P (स्वराभावः); वाचमा (मा>म) रुह° Sm. १२. सिषासति E; °सथ D,V,J,Km,P,P²,Sm; सिषासतः R; सिषासन्तः पै १९,४५,१४. १३. °अमदुन्° C;° असदुन् Km; तद् देवा अप लुम्पत पै. १४. स्वराभावः P; यच्छक्रं वाच आरुहन्नन्तरिक्षं सिषासतीः । सं देवो अमदद् वृषा ॥ RW. १५. वाचमधृष्टायो° C; वाचमदृष्टायो° R,Cs; °मदृष्टायो° D; °मधृष्ठा° E; वाचमदृष्टायो° J. १६. अधृष्टहि C; अधृष्णुहि Sm. १७. मंहिष्ट C; मंहिष्ठ E; महिष्ट P (स्वराभावः), P². १८. °दिवि P. १९. स्वराभावः P; शक्रं वाचाभि ष्टुहि घोरं वाचाभि ष्टुहि । मंहिष्ठ आ मसद् दिवि ॥ RW.

शक्रो वाचमधृष्णुहि[1] [2]धामधर्मन् वि[2] राजति । विमदन्[3] बर्हिरासरन्[4] ॥ ३ ॥[5]

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ ४ ॥

तम् । वः । दस्मम् । ऋतिऽसहम् । वसोः । मन्दानम् । अन्धसः ।
अभि । वत्सम् । न । स्वसरेषु । धेनवः । इन्द्रम् । गीःऽभिः । नवामहे ॥ ४ ॥

द्युक्षं सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमन्तं वाजं शतिनं सहस्रिणं मक्षू गोमन्तमीमहे ॥ ५ ॥

द्युक्षम् । सुऽदानुम् । तविषीभिः । आऽवृतम् । गिरिम् । न । पुरुऽभोजसम् ।
क्षुऽमन्तम् । वाजम् । शतिनम् । सहस्रिणम् । मक्षु । गोऽमन्तम् । ईमहे ॥ ५ ॥

तत् त्वा यामि सुवीर्यं तद् ब्रह्म पूर्वचित्तये ।
येना यतिभ्यो भृगवे धने हिते येन प्रस्कण्वमाविथ ॥ ६ ॥

तत् । त्वा । यामि । सुऽवीर्यम् । तत् । ब्रह्म । पूर्वऽचित्तये ।
येन । यतिऽभ्यः । भृगवे । धने । हिते । येन । प्रस्कण्वम् । आविथ ॥ ६ ॥

येना समुद्रमसृजो महीरपस्तदिन्द्र वृष्णि ते शवः ।
सद्यः सो अस्य महिमा न संनशे यं क्षोणीरनुचक्रदे ॥ ७ ॥

येन । समुद्रम् । असृजः । महीः । अपः । तत् । इन्द्र । वृष्णि । ते । शवः ।
सद्यः । सः । अस्य । महिमा । न । सम्ऽनशे । यम् । क्षोणीः । अनुऽचक्रदे ॥ ७ ॥

**इति पञ्चमेऽनुवाके द्वादशं सूक्तम् ।**

**वाजपेये क्रतौ** 'कन्नव्य अतसीनाम्' **इति सामप्रगाथो भवति । तद् उक्तं वैताने**— '' 'कन्नव्यो अतसीनाम्' इति सामप्रगाथः'' ( वैताश्रौ २७,१३ ) **इति ।**

---

१. वाचमधृष्टहि C; वाचं अधृष्णुहि J; °मधृष्टुहि Km; वाचमधृष्णुहि R,Cs; °मधृष्ट (ष्टु B ) हि B,Bh. २. °धर्मन्नवि Bh. ३. विमदं R,Cs,J. ४. बहिरासदन् D,V; बहिरासरन् P; °सदन् Sm,K, पै १९,४५,१५; °रासरन् J. ५. स्वराभावः P; शक्रं वाचाभि ष्टुहि धामन्धामन् वि राजति । विमदन् बर्हिरा सदत ॥ RW.

**तथा गवामयनादौ संवत्सरे माध्यंदिने सवने** 'कन्नव्यो अतसीनाम्' **इति कद्वान् सामप्रगाथो भवति। तद् उक्तं वैताने**—"माध्यंदिने 'कन्नव्यो अतसीनाम्' इति कद्वान् सामप्रगाथः" ( वैताश्रौ ३५,१२ ) **इति।**

**कन्नव्यो॑ अत॒सीनां॑ तु॒रो गृ॑णीत॒ मर्त्यः॑ ।**
**न॒ही न्व॑स्य महि॒मान॑मिन्द्रि॒यं स्व॑र्गृ॒णन्त॑ आन॒शुः ॥ १ ॥**

कत् । नव्यः॑ । अ॒त॒सीना॑म् । तु॒रः । गृ॒णी॒त । मर्त्यः॑ ।
न॒हि । नु । अ॒स्य॒ । म॒हि॒मान॑म् । इ॒न्द्रि॒यम् । स्वः॑ । गृ॒णन्तः॑ । आ॒न॒शुः ॥ १ ॥

**कदु॑ स्तु॒वन्त॑[1] ऋतयन्त दे॒वत॒ ऋषिः॒ को विप्रं॑ ओहते ।**
**क॒दा हवं॑ मघवन्निन्द्र सु॒न्व॒तः कदु॑ स्तु॒व॒त आ ग॑मः ॥ २ ॥**

कत् । ऊं॒ इति॑ । स्तु॒वन्तः॑ । ऋ॒त॒ऽय॒न्त॒ । दे॒वता॑ । ऋषि॑ः । कः । विप्रः॑ । ओ॒ह॒ते॒ ।
क॒दा । हव॑म् । म॒घ॒ऽव॒न् । इ॒न्द्र॒ । सु॒न्व॒तः । कत् । ऊं॒ इति॑ । स्तु॒व॒तः । आ । ग॒मः ॥

**इति पञ्चमेऽनुवाके त्रयोदशं सूक्तम्।**

**चतुर्विंशे माध्यंदिने सवने** 'अभि प्र वः सुराधसम्' ( अ २०,५१ ), 'प्र सु श्रुतं सुराधसम्' ( अ २०,५१,३ ) **इति पृष्ठस्तोत्रियानुरूपौ बार्हतौ प्रगाथौ भवतः। तद् उक्तं वैताने**—" 'अभि प्र वः सुराधसम्', 'प्र सु श्रुतं सुराधसम्' इति पृष्ठस्तोत्रियानुरूपौ बार्हतौ प्रगाथौ" ( वैताश्रौ ३१,१८ ) **इति।**

**तथा अभिप्लवे युग्मेष्वहःसु द्वितीयचतुर्थषष्ठेषु** 'अभि प्र वः सुराधसम्', 'प्र सु श्रुतं सुराधसम्' **इति बार्हतौ प्रगाथौ पृष्ठस्तोत्रियानुरूपौ भवतः। तद् उक्तं वैताने**— " 'अभि प्र वः सुराधसम्' इति युग्मेषु" ( वैताश्रौ ३१,२४ ) **इति।**

**तथा विषुवति अनुरूपादनन्तरम्** 'तं वो दस्ममृतीषहम्' ( अ २०,४९,४ ), 'अभि प्र वः सुराधसम्' ( अ २०,५१ ) **इति नौधसश्यैतयोनी इच्छया शंसति। तद् उक्तं वैताने**—"अनुरूपात् 'तं वो दस्ममृतीषहम्', 'अभि प्र वः सुराधसम्' इति नौधसश्यैत-योनी कामम्" ( वैताश्रौ ३३,७;८ ) **इति।**

**तथा त्र्यहाणां तृतीयेष्वहःसु यथासंभवम्** 'महाँ इन्द्रो य ओजसा' ( अ २०,१३८ ), 'अभि प्र वः सुराधसम्' ( अ २०,५१ ), 'एवा ह्यसि वीरयुः' ( अ २०,६० ) **इति आज्य-**

---

१. ष्टुवन्त K,K^m^.

**पृष्ठोक्थस्तोत्रिया भवन्ति। तद् उक्तं वैताने**—"तृतीयेषु 'महाँ इन्द्रो य ओजसा', 'अभि प्र वः सुराधसम्', 'एवा ह्यसि वीरयुः' इति" ( वैताश्रौ ४१,८ ) **इति।**

**अ॒भि प्र वः॑ सु॒राध॑स॒मिन्द्र॑मर्च॒ यथा॑ वि॒दे ।**
**यो ज॑रि॒तृभ्यो॑ म॒घवा॑ पु॑रू॒वसुः॑ स॒हस्रे॑णेव॒ शिक्ष॑ति ॥ १ ॥**

अ॒भि । प्र । व॒ः । सु॒ऽराध॑सम् । इन्द्र॑म् । अ॒र्च॒ । यथा॑ । वि॒दे ।
यः॑ । ज॒रि॒तृऽभ्यः॑ । म॒घऽवा॑ । पु॒रु॒ऽवसुः॑ । स॒हस्रे॑णऽइव । शिक्ष॑ति ॥ १ ॥

**श॒तानी॑केव॒ प्र जि॑गाति धृष्णु॒या हन्ति॑ वृ॒त्राणि॑ दा॒शुषे॑ ।**
**गि॒रेरि॑व॒ प्र रसा॑ अस्य पिन्विरे॒ दत्रा॑णि पुरु॒भोज॑सः ॥ २ ॥**

श॒तानी॑काऽइव । प्र । जि॒गा॒ति॒ । धृ॒ष्णु॒ऽया । हन्ति॑ । वृ॒त्राणि॑ । दा॒शुषे॑ ।
गि॒रेःऽइ॑व । प्र । रसाः॑ । अ॒स्य॒ । पि॒न्वि॒रे॒ । दत्रा॑णि । पु॒रु॒ऽभोज॑सः ॥ २ ॥

**प्र सु श्रु॒तं सु॒राध॑सम॒र्चा॑ श॒क्रम॒भिष्ट॑ये ।**
**यः सु॒न्व॒ते स्तु॒व॒ते काम्यं॒ वसु॑ स॒हस्रे॑णेव॒ मंह॑ते ॥ ३ ॥**

प्र । सु । श्रु॒तम् । सु॒ऽराध॑सम् । अर्च॑ । श॒क्रम् । अ॒भिष्ट॑ये ।
यः॑ । सु॒न्व॒ते । स्तु॒व॒ते । काम्य॑म् । वसु॑ । स॒हस्रे॑णऽइव । मंह॑ते ॥ ३ ॥

**श॒तानी॑का हे॒तयो॑ अस्य दु॒ष्टरा॒ इन्द्र॑स्य स॒मिषो॑ म॒हीः ।**
**गि॒रिर्न भु॒ज्मा म॒घव॑त्सु पिन्वते॒ यदीं॑ सु॒ता अम॑न्दिषुः ॥ ४ ॥**

श॒तऽअ॑नीकाः । हे॒तयः॑ । अ॒स्य॒ । दु॒स्तराः॑ । इन्द्र॑स्य । स॒म्ऽइषः॑ । म॒हीः ।
गि॒रिः । न । भु॒ज्मा । म॒घव॑त्ऽसु । पि॒न्व॒ते॒ । यत् । ई॒म् । सु॒ताः । अम॑न्दिषुः ॥ ४ ॥

**इति पञ्चमेऽनुवाके चतुर्दशं सूक्तम् ।**

'वयं घ त्वा सुतावन्तः' **इत्यस्य विनियोगः** 'इन्द्रेण सं हि दृक्षसे' ( अ २०,४० ) **इत्यत्रोक्तः।**

**तथा पृष्ठ्यस्य तृतीयचतुर्थपञ्चमषष्ठानां चतुर्णामह्नाम्** 'वयं घ त्वा सुतावन्तः' **इत्यादीनामष्टानां तृचानां द्वौ द्वौ यथाक्रमं स्तोत्रियानुरूपौ भवतः। तत्र** 'वयं घ त्वा' ( अ २०,५२ ), 'क ईं वेद' ( अ २०,५३ ) **इति तृतीयेऽह्नि स्तोत्रियानुरूपौ भवतः।** 'विश्वाः पृतनाः' ( अ २०,५४ ), 'तमिन्द्रम्' ( अ २०,५५ ) **इति चतुर्थे।** 'इन्द्रो मदाय' ( अ २०,५६ ), 'मदेमदे हि' ( अ २०,५६,४ ) **इति पञ्चमे।** 'सुरूपकृत्नुम्'

( अ २०,५७ ), 'शुष्मिन्तमं नः' ( अ २०,५७,४ ) **इति षष्ठे । तद् उक्तं वैताने**— "तृतीयादीनाम् 'वयं घ त्वा सुतावन्तः' इति पृष्ठस्तोत्रियानुरूपाः" ( वैताश्रौ ३२,६ ) **इति।**

**तथा छन्दोमाख्येषु त्रिष्वहःसु** 'वयं घ त्वा सुतावन्तः', 'क ईं वेद सुते सचा' **इति प्रथमेऽहनि माध्यंदिने स्तोत्रियानुरूपौ भवतः ।** 'क ईं वेद सुते सचा', 'वयं घ त्वा सुतावन्तः' **इति द्वितीये ।** 'आयन्त इव सूर्यम्' ( अ २०,५८ ), 'बण्महाँ असि सूर्य' ( अ २०,५८,३ ) **इति तृतीये। तद् उक्तं वैताने**— " 'वयं घ त्वा सुतावन्तः' इत्यादि 'बण्महाँ असि सूर्य' इत्यन्ताः पृष्ठस्तोत्रियानुरूपाः[1]" ( वैताश्रौ ३३,१६ ) **इति ।**

**वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।**
**पवित्रस्य प्रस्रवणेषु वृत्रहन् परि स्तोतार आसते ॥ १ ॥**

वयम् । घ । त्वा । सुतऽवन्तः । आपः । न । वृक्तऽबर्हिषः ।
पवित्रस्य । प्रऽस्रवणेषु । वृत्रऽहन् । परि । स्तोतारः । आसते ॥ १ ॥

**स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः ।**
**कदा सुतं तृषाण ओक आ गम इन्द्र स्वब्दीव वंसगः ॥ २ ॥**

स्वरन्ति । त्वा । सुते । नरः । वसो इति । निरेके । उक्थिनः ।
कदा । सुतम् । तृषाणः । ओकः । आ । गमः । इन्द्र । स्वब्दीऽइव । वंसगः ॥ २ ॥

**कण्वेभिर्धृष्णवा[2] धृषद् वाजं दर्षि सहस्रिणम् ।**
**पिशङ्गरूपं मघवन् विचर्षणे मक्षू गोमन्तमीमहे ॥ ३ ॥**

कण्वेभिः । धृष्णो इति । आ । धृषत् । वाजम् । दर्षि । सहस्रिणम् ।
पिशङ्गऽरूपम् । मघऽवन् । विऽचर्षणे । मक्षु । गोऽमन्तम् । ईमहे ॥ ३ ॥

**इति पञ्चमेऽनुवाके पञ्चदशं सूक्तम् ।**

**त्रिककुद्दशाहस्याहीनस्य नवस्वहःसु** 'शग्ध्यू षु शचीपते' ( अ २०,११८ ), 'अभि प्र गोपतिं गिरा' ( अ २०,९२ ), 'तं वो दस्ममृतीषहम्' ( अ २०,४९,४ ), 'वयमेनमिदा ह्यः' ( अ २०,९७ ), 'इन्द्रमिद् गाथिनो बृहत्' ( अ २०,३८,४ ), 'आयन्त इव सूर्यम्' ( अ २०,५८ ), 'क ईं वेद सुते सचा' ( अ २०,५३ ), 'विश्वाः पृतना अभिभूतरं नरम्' ( अ २०,५४ ), 'यदिन्द्र प्रागपागुदक्' ( अ २०,१२० ) **इत्येते नव**

---

१. °रूपौ RG.　　२. °ष्णुवा B.

पृष्ठस्तोत्रिया यथाक्रमं भवन्ति । तद् उक्तं वैताने—"त्रिककुद्दशाहस्य नवसु 'शग्ध्यू षु शचीपते', 'अभि प्र गोपतिं गिरा', 'तं वो दस्ममृतीषहम्', 'वयमेनमिदा ह्यः', 'इन्द्रमिद्गाथिनो बृहत्', 'श्रायन्त इव सूर्यम्', 'क ईं वेद सुते सचा', 'विश्वाः पृतना अभिभूतरं नरम्', 'यदिन्द्र प्रागपागुदक्' इति" ( वैताश्रौ ४२,५ ) इति ।

क ईं वेद सुते सचा पिबन्तं कद् वयो दधे ।
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः ॥ १ ॥

कः । ईम् । वेद । सुते । सचा । पिबन्तम् । कत् । वयः । दधे ।
अयम् । यः । पुरः । विऽभिनत्ति । ओजसा । मन्दानः । शिप्री । अन्धसः ॥ १ ॥

दाना मृगो न वारणः पुरुत्रा चरथं दधे ।
नकिष्ट्वा नि यमदा सुते गमो महांश्चरस्योजसा ॥ २ ॥

दाना । मृगः । न । वारणः । पुरुऽत्रा । चरथम् । दधे ।
नकिः । त्वा । नि । यमत् । आ । सुते । गमः । महान् । चरसि । ओजसा ॥ २ ॥

य उग्रः सन्ननिष्टृत स्थिरो रणाय संस्कृतः ।
यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥ ३ ॥

यः । उग्रः । सन् । अनिःऽस्तृतः[1] । स्थिरः । रणाय । संस्कृतः ।
यदि । स्तोतुः । मघऽवा । शृणवत् । हवम् । न । इन्द्रः । योषति । आ । गमत्[2] ॥ ३ ॥

इति पञ्चमेऽनुवाके षोडशं सूक्तम् ।

पृष्ठ्यषडहस्य एकविंशस्तोमके चतुर्थेऽहनि एकाहैकीभूते 'इन्द्रो दधीचो अस्थभिः' ( अ २०,४१ ), 'विश्वाः पृतना अभिभूतरं नरम्' ( अ २०,५४ ), 'एवा ह्यसि वीरयुः' ( अ २०,६० ) इति आज्यपृष्ठोक्थस्तोत्रिया भवन्ति । तद् उक्तं वैताने— "पृष्ठस्यैकविंशे 'इन्द्रो दधीचो अस्थभिः', 'विश्वाः पृतना अभिभूतरं नरम्', 'एवा ह्यसि वीरयुः' इति" ( वैताश्रौ ४०,१४ ) इति ।

तथा व्युष्ट्याङ्गिरसकापिवनचैत्ररथत्र्यहानां द्वितीयेष्वहःसु 'विश्वाः पृतना अभिभूतरं नरम्' इति स्तोत्रियो भवति । तद् उक्तं वैताने । "द्वितीयेषु 'विश्वाः पृतना अभिभूतरं नरम्' इति" ( वैताश्रौ ४१,१ ) इति ।

---

१. अनिःऽस्तृतः ऋ॰ पपा ८,३३,९ २. गमत् P.

तथा त्रिककुद्दशाहस्याहीनस्य अष्टमेऽहनि एष पृष्ठस्तोत्रियो भवति । सूत्रं पूर्वसूक्ते उक्तम् ।

विश्वाः पृतना अभिभूतरं नरं सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे ।
क्रत्वा वरिष्ठं वर आमुरिमुतोग्रमोजिष्ठं तवसं तरस्विनम् ॥ १ ॥

विश्वाः । पृतनाः । अभिऽभूतरम् । नरम् । सऽजूः । ततक्षुः । इन्द्रम् । जजनुः । च । राजसे ।
क्रत्वा । वरिष्ठम् । वरे । आऽमुरिम् । उत । उग्रम् । ओजिष्ठम् । तवसम् । तरस्विनम् ॥१॥

समीं रेभासो अस्वरन्निन्द्रं सोमस्य पीतये ।
स्वर्पतिं यदीं वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ २ ॥

सम् । ईम् । रेभासः । अस्वरन् । इन्द्रम् । सोमस्य । पीतये ।
स्वःऽपतिम् । यत् । ईम् । वृधे । धृतऽव्रतः । हि । ओजसा । सम् । ऊतिऽभिः ॥ २ ॥

नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा ।
सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥ ३ ॥

नेमिम्[1] । नमन्ति । चक्षसा । मेषम् । विप्राः । अभिऽस्वरा ।
सुऽदीतयः । वः । अद्रुहः । अपि । कर्णे । तरस्विनः । सम् । ऋक्वऽभिः ॥ ३ ॥

इति पञ्चमेऽनुवाके सप्तदशं सूक्तम् ।

'तमिन्द्रं जोहवीमि' इत्यस्य विनियोगः 'वयं घ त्वा सुतावन्तः' (अ २०,५२) इति सूक्ते उक्तः ।

तमिन्द्रं जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं शवांसि ।
मंहिष्ठो गीर्भिरा च यज्ञियो ववर्तद् राये नो विश्वा सुपथा कृणोतु वज्री ॥१॥

तम् । इन्द्रम् । जोहवीमि । मघऽवानम् । उग्रम् । सत्रा । दधानम् । अप्रतिऽस्कुतम् । शवांसि । मंहिष्ठः । गीःऽभिः । आ । च । यज्ञियः । ववर्तत् । राये । नः । विश्वा । सुऽपथा । कृणोतु । वज्री ॥ १ ॥

या इन्द्र भुज आभरः स्वर्वाँ असुरेभ्यः ।
स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥ २ ॥

---

याः । इन्द्र । भुजः । आ । अभरः । स्वःऽवान् । असुरेभ्यः ।
स्तोतारम् । इत् । मघऽवन् । अस्य । वर्धय । ये । च । त्वे इति । वृक्तऽबर्हिषः ॥ २ ॥

यमिन्द्र दधिषे त्वमश्वं गां भागमव्ययम् ।
यजमाने सुन्वति दक्षिणावति तस्मिन् तं धेहि मा पणौ ॥ ३ ॥

यम् । इन्द्र । दधिषे । त्वम् । अश्वम् । गाम् । भागम् । अव्ययम् ।
यजमाने । सुन्वति । दक्षिणाऽवति । तस्मिन् । तम् । धेहि । मा । पणौ ॥ ३ ॥

**इति पञ्चमेऽनुवाके अष्टादशं सूक्तम् ।**

**पृष्ठ्यपञ्चाहस्य पञ्चमेऽहनि** 'उत्तिष्ठन्नोजसा सह' ( अ २०,४२,३ ), 'इन्द्रो मदाय वावृधे' ( अ २०,५६ ), 'इन्द्राय साम गायत' ( अ २०,६२,५-७ ) **इत्येते आज्यपृष्ठोक्थस्तोत्रिया भवन्ति । तद् उक्तं वैताने**—"पञ्चमे 'उत्तिष्ठन्नोजसा सह', 'इन्द्रो मदाय वावृधे', 'इन्द्राय साम गायत' इति" ( वैताश्रौ ४१,१७ ) **इति ।**

इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषूतेमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ १ ॥

इन्द्रः । मदाय । ववृधे । शवसे । वृत्रऽहा । नृऽभिः ।
तम् । इत् । महत्ऽसु । आजिषु । उत । ईम् । अर्भे । हवामहे । सः । वाजेषु । प्र । नः । अविषत् ॥

असि हि वीर सेन्योऽसि भूरि पराददिः ।
असि दभ्रस्य चिद् वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥ २ ॥

असि । हि । वीर । सेन्यः । असि । भूरि । पराऽददिः ।
असि । दभ्रस्य । चित् । वृधः । यजमानाय । शिक्षसि । सुन्वते । भूरि । ते । वसु ॥ २ ॥

यदुदीरत आजयो धृष्णवे धीयते धना ।
युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥ ३ ॥

यत् । उत्ऽईरते । आजयः । धृष्णवे । धीयते । धना । युक्ष्व । मदऽच्युता । हरी इति ।
कम् । हनः । कम् । वसौ । दधः । अस्मान् । इन्द्र । वसौ । दधः ॥ ३ ॥

मदेमदे हि नो ददिर्यूथा गवामृजुक्रतुः ।
सं गृभाय पुरु शतोभयाहस्त्या वसु शिशीहि राय आ भर ॥ ४ ॥

मदेऽमदे । हि । नः । ददिः । यूथा । गवाम् । ऋजुऽक्रतुः ।
सम् । गृभाय । पुरु । शता । उभयाहस्त्या । वसु । शिशीहि । रायः । आ । भर ॥ ४ ॥

**मादयस्व सुते सचा शवसे शूर राधसे ।**
**विद्मा हि त्वा पुरूवसुमुप कामान्त्ससृज्महेऽथा नोऽविता भव ॥ ५ ॥**

मादयस्व । सुते । सचा । शवसे । शूर । राधसे ।
विद्म । हि । त्वा । पुरुऽवसुम । उप । कामान् । ससृज्महे । अथ । नः । अविता । भव ॥ ५ ॥

**एते त इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम् ।**
**अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर ॥ ६ ॥**

एते । ते । इन्द्र । जन्तवः । विश्वम् । पुष्यन्ति । वार्यम् ।
अन्तः । हि । ख्यः । जनानाम् । अर्यः । वेदः । अदाशुषाम् । तेषाम् । नः । वेदः । आ । भर ॥ ६ ॥

**इति पञ्चमेऽनुवाके एकोनविंशं सूक्तम् ।**

**अप्तोर्यामिण क्रतौ तृतीयसवने** 'सुरूपकृत्नुमूतये' ( अ २०,५७ ), 'शुष्मिन्तमं न ऊतये' ( अ २०,५७,४ ) **इति स्तोत्रियानुरूपौ भवतः । तत्र** 'सुरूपकृत्नुमूतये' **इति स्तोत्रियमभितः प्राकृतः स्तोत्रियो भवति ।** 'शुष्मिन्तमं न ऊतये' **इत्यनुरूपमभितः प्राकृतोऽनुरूपो भवति । तद् उक्तं वैताने**—"तृतीयसवने 'सुरूपकृत्नुमूतये', 'शुष्मिन्तमं न ऊतये' इति स्तोत्रियानुरूपावभितः स्तोत्रियानुरूपौ" ( वैताश्रौ २७,२५ ) **इति ।**

**तथा महाव्रते प्रातःसवने** 'सुरूपकृत्नुमूतये' **इत्याज्यस्तोत्रियो भवति । तद् उक्तं वैताने**—"महाव्रते 'सुरूपकृत्नुमूतये' इत्याज्यस्तोत्रियः" ( वैताश्रौ ३४,६ ) **इति ।**

**तथा श्येनसंदंशाजिरवज्रेषु एकाहेषु** 'सुरूपकृत्नुमूतये', 'उत्त्वा मन्दन्तु स्तोमाः' ( अ २०,९३ ) **एतौ आज्यस्तोत्रियौ विकल्पितौ भवतः ।** 'त्वामिद्धि हवामहे' ( अ २०, ९८ ) **इति पृष्ठस्तोत्रियो भवति । तद् उक्तं वैताने**—"श्येनसंदंशाजिरवज्रेषु 'सुरूपकृत्नुमूतये', 'उत्त्वा मन्दन्तु स्तोमाः', 'त्वामिद्धि हवामहे' इति" ( वैताश्रौ ३९,५ ) **इति ।**

**सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥ १ ॥**

सुरूपऽकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे । जुहूमसि । द्यविऽद्यवि ॥ १ ॥

**उप नः सवना गहि सोमस्य सोमपाः पिब । गोदा इद् रेवतो मदः ॥ २ ॥**

उप । नः । सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब । गोऽदाः । इत् । रेवतः । मदः ॥

अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अति ख्य आ गहि ।३।
अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् । मा । नः । अति । ख्यः । आ । गहि ॥ ३ ॥

शुष्मिन्तमं न ऊतये द्युम्निनं पाहि जागृविम् । इन्द्र सोमं शतक्रतो ॥४॥
शुष्मिन्ऽतमम् । नः । ऊतये । द्युम्निनम् । पाहि । जागृविम् । इन्द्र । सोमम् । शतक्रतो इति शतऽक्रतो ॥ ४ ॥

इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आ वृणे ॥५॥
इन्द्रियाणि । शतक्रतो इति शतऽक्रतो । या । ते । जनेषु । पञ्चऽसु । इन्द्र । तानि । ते । आ । वृणे ॥

अगन्निन्द्र श्रवो बृहद् द्युम्नं दधिष्व दुष्टरम् । उत् ते शुष्मं तिरामसि ॥६॥
अगन् । इन्द्र । श्रवः । बृहत् । द्युम्नम् । दधिष्व । दुस्तरम् । उत् । ते । शुष्मम् । तिरामसि ॥ ६ ॥

अर्वावतो न आ गह्यथो शक्र परावतः ।
उ लोको यस्ते अद्रिव इन्द्रेह तत आ गहि ॥ ७ ॥

अर्वाऽवतः । नः । आ । गहि । अथो इति । शक्र । पराऽवतः ।
ऊं इति । लोकः । यः । ते । अद्रिऽवः । इन्द्र । इह । ततः । आ । गहि ॥ ७ ॥

इन्द्रो अङ्ग महद् भयमभी षदप चुच्यवत् । स हि स्थिरो विचर्षणिः ॥८॥
इन्द्रः । अङ्ग । महत् । भयम् । अभि । सत् । अप । चुच्युवत् । सः । हि । स्थिरः । विऽचर्षणिः ॥

इन्द्रश्च मृलयाति[1] नो न नः पश्चादघं नशत् । भद्रं भवाति नः पुरः ॥ ९ ॥
इन्द्रः । च । मृल्याति । नः । न । नः । पश्चात् । अघम् । नशत् । भद्रम् । भवाति । नः । पुरः ॥९॥

इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून् विचर्षणिः ॥१०॥
इन्द्रः । आशाभ्यः । परि । सर्वाभ्यः । अभयम् । करत् । जेता । शत्रून् । विऽचर्षणिः ॥ १० ॥

क ईं वेद सुते सचा पिबन्तं कद् वयो दधे ।
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः ॥ ११ ॥

---

१. मृळयाति ऋ २,४१,११.

अनु । ते । शुष्मम् । तुरयन्तम् । ईयतुः । क्षोणी इति । शिशुम् । न । मातरा ।
विश्वाः । ते । स्पृधः । श्नथयन्त । मन्यवे । वृत्रम् । यत् । इन्द्र । तूर्वसि ॥ २ ॥

**इत ऊती वो अजरं प्रहेतारमप्रहितम् ।**
**आशुं जेतारं हेतारं रथीतममतूर्तं तुग्र्यावृधम् ॥ ३ ॥**

इतः । ऊती । वः । अजरम्[1] । प्रऽहेतारम् । अप्रऽहितम् ।
आशुम् । जेतारम् । हेतारम् । रथिऽतमम् । अतूर्तम् । तुग्र्यऽवृधम्[2] ॥ ३ ॥

**यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।**
**विश्वासां तरुता पृतनानां ज्येष्ठो यो वृत्रहा गृणे ॥ ४ ॥**

यः । राजा । चर्षणीनाम् । याता । रथेभिः । अध्रिऽगुः ।
विश्वासाम् । तरुता । पृतनानाम् । ज्येष्ठः । यः । वृत्रऽहा । गृणे ॥ ४ ॥

**इन्द्रं तं शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि ।**
**हस्ताय वज्रः प्रति धायि दर्शतो महो दिवे न सूर्यः ॥ ५ ॥**

इन्द्रम् । तम् । शुम्भ । पुरुऽहन्मन् । अवसे । यस्य । द्विता । विऽधर्तरि ।
हस्ताय । वज्रः । प्रति । धायि । दर्शतः । महः । दिवे । न । सूर्यः ॥ ५ ॥

**इति नवमेऽनुवाके नवमं सूक्तम् ।**

**इन्द्रस्तोमाख्ये एकाहे** 'तव त्यदिन्द्रियं बृहत्' **इत्यस्य** 'इन्द्र क्रतुं न आ भर' **( अ २०,७९ ) इत्यनेन सह उक्तो विनियोगः ।**

**तव त्यदिन्द्रियं बृहत् तव शुष्ममुत क्रतुम् ।**
**वज्रं शिशाति धिषणा वरेण्यम् ॥ १ ॥**

तव । त्यत् । इन्द्रियम् । बृहत् । तव । शुष्मम् । उत । क्रतुम् । वज्रम् । शिशाति ।
धिषणा । वरेण्यम् ॥ १ ॥

**तव द्यौरिन्द्र पौंस्यं पृथिवी वर्धति श्रवः । त्वामापः पर्वतासश्च हिन्विरे ॥ २ ॥**

तव । द्यौः । इन्द्र । पौंस्यम् । पृथिवी । वर्धति । श्रवः । त्वाम् । आपः । पर्वतासः ।
च । हिन्विरे ॥ २ ॥

---

१. अजरां P.  २. तुग्मऽवृधम् P.

त्वां विष्णुर्बृहन् क्षयो मित्रो गृणाति वरुणः । त्वां शर्धो मदत्यनु मारुतम् ॥३॥

त्वाम् । विष्णुः । बृहन् । क्षयः । मित्रः । गृणाति । वरुणः । त्वाम् । शर्धः । मदति । अनु । मारुतम् ॥ ३ ॥

इति नवमेऽनुवाके दशमं सूक्तम् ।

विघने एकाहे 'समस्य मन्यवे विशः' ( अ २०,१०७ ), 'तदिदास भुवनेषु ज्येष्ठम् ( अ २०,१०७,४) इत्येतौ आज्यपृष्ठस्तोत्रियौ भवतः । तद् उक्तं वैताने — "विघने 'समस्य मन्यवे विशः', 'तदिदास भुवनेषु ज्येष्ठम्' इति" ( वैताश्रौ ३९,१५ ) इति ।

समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः । समुद्रायेव सिन्धवः ॥ १ ॥

सम् । अस्य । मन्यवे । विशः । विश्वाः । नमन्त । कृष्टयः । समुद्रायऽइव । सिन्धवः ॥ १ ॥

ओजस्तदस्य तित्विष उभे यत् समवर्तयत् । इन्द्रश्चर्मेव रोदसी ॥ २ ॥

ओजः । तत् । अस्य । तित्विषे । उभे इति । यत् । सम्ऽअवर्तयत् । इन्द्रः । चर्मऽइव । रोदसी इति ॥

वि चिद् वृत्रस्य दोधतो वज्रेण शतपर्वणा । शिरो बिभेद वृष्णिना ॥ ३ ॥

वि । चित् । वृत्रस्य । दोधतः । वज्रेण । शतऽपर्वणा । शिरः । बिभेद । वृष्णिना ॥ ३ ॥

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु 'यदेनं मदन्ति विश्व ऊमाः'[1] ॥ ४ ॥

तत् । इत् । आस । भुवनेषु । ज्येष्ठम् । यतः । जज्ञे । उग्रः । त्वेषऽनृम्णः । सद्यः । जज्ञानः । रिणाति । शत्रून् । अनु । यत् । एनम् । मदन्ति । विश्वे । ऊमाः ॥ ४ ॥

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥ ५ ॥

ववृधानः । शवसा । भूरिऽओजाः । शत्रुः । दासाय । भियसम् । दधाति । अविऽअनत् । च । विऽअनत् । च । सस्नि । सम् । ते । नवन्त । प्रऽभृता । मदेषु ॥ ५ ॥

त्वे क्रतुमपि 'पृञ्चन्ति भूरि'[2] द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाऽभि योधीः ॥६॥

---

१. यं विश्वे मदन्त्यूमाः RW. ऋ १०,१२०,१ पै ६,१,१. २. वृञ्जन्ति विश्वे RW. ऋ १०,१२०,३ पै ६,१,३.

त्वे इति । क्रतुम् । अपि । पृञ्चन्ति । भूरि । द्विः । यत् । एते । त्रिः । भवन्ति । ऊमाः ।
स्वादोः । स्वादीयः । स्वादुना । सृज । सम् । अदः । सु । मधु । मधुना । अभि । योधीः ॥ ६ ॥

[1]यदि चिन्नु[1] त्वा धना जयन्तं रणेरणे[2] अनुमदन्ति विप्राः ।
ओजीयः शुष्मिन्त्स्थिरमा[3] तनुष्व मा त्वा दभन् [4]दुरेवासः कशोकाः[4] ॥७॥

यदि । चित् । नु । त्वा । धना । जयन्तम् । रणेऽरणे । अनुऽमदन्ति । विप्राः ।
ओजीयः । शुष्मिन् । स्थिरम् । आ । तनुष्व । मा । त्वा । दभन् । दुःऽएवासः । कशोकाः ॥ ७ ॥

त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ॥ ८ ॥

त्वया । वयम् । शाशद्महे । रणेषु । प्रऽपश्यन्तः । युधेन्यानि । भूरि ।
चोदयामि । ते । आयुधा । वचःऽभिः । सम् । ते । शिशामि । ब्रह्मणा । वयांसि ॥ ८ ॥

नि तद् [5]दधिषेऽवरे परे[5] च यस्मिन्नाविथावसा दुरोणे ।
[6]आ स्थापयत मातरं जिगत्नुमत इन्वत कर्वराणि भूरि[6] ॥ ९ ॥

नि । तत् । दधिषे । अवरे । परे । च । यस्मिन् । आविथ । अवसा । दुरोणे ।
आ । स्थापयत । मातरम् । जिगत्नुम् । अतः । इन्वत । कर्वराणि । भूरि ॥ ९ ॥

[7]स्तुष्व वर्ष्मन् पुरुवर्त्मानं समृभ्वाणमिनतममाप्तमाप्त्यानाम् ।
आ दर्शति शवसा भूर्योजाः प्र सक्षति प्रतिमानं पृथिव्याः ॥ १० ॥[7]

स्तुष्व । वर्ष्मन् । पुरुऽवर्त्मानम् । सम् । ऋभ्वाणम् । इनऽतमम् । आप्तम् । आप्त्यानाम् ।
आ । दर्शति । शवसा । भूरिऽओजाः । प्र । सक्षति । प्रतिऽमानम् । पृथिव्याः ॥ १० ॥

इमा ब्रह्म [8]बृहद्दिवः कृणवदिन्द्राय[8] शूषमग्रियः[9] स्वर्षाः ।
महो गोत्रस्य क्षयति [10]स्वराजा तुरश्चिद् विश्वमर्णवत् तपस्वान्[10] ॥११॥

---

१. इति चिद्धि RW. ऋ १०,१२०,४ पै ६,१,४.  २. रणंरणम् पै.; मदेमदे RW. ऋ.  ३. धृष्णो स्थि° RW. ऋ. पै.  ४. दुरेवा यातुधानाः पै.; यातुधाना दुरेवाः RW. ऋ.  ५. °ऽवरं परं RW. ऋ १०,१२०,७ पै ६,१,७.  ६. आ मातरा स्थापयसे जिगत्नू अत इनोषि कर्वरा पुरूणि RW. ऋ. पै.  ७. स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् । आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि RW. ऋ १०,१२०,६ पै ६,१,६.  ८. °वो विवक्तीन्द्राय RW. ऋ १०,१२०,८ पै ६,१,८.  ९. अग्र्यस् पै.  १०. स्वराजो दुरश्च विश्वा अवृणोदप स्वाः RW. ऋ. पै.

इमा । ब्रह्म । बृहत्ऽदिवः । कृणवत् । इन्द्राय । शूषम् । अग्रियः । स्वःऽसाः ।
महः । गोत्रस्य । क्षयति । स्वऽराजा । तुरः । चित् । विश्वम् । अर्णवत् । तपस्वान् ॥११॥

**एवा महान् बृहद्दिवो अथर्वावोचत् स्वां तन्व१मिन्द्रमेव ।**
**'स्वसारौ मातरिभ्वरी अरिप्रे हिन्वन्ति चैने' शवसा वर्धयन्ति च ॥ १२॥**

एव । महान् । बृहत्ऽदिवः । अथर्वा । अवोचत् । स्वाम् । तन्वम् । इन्द्रम् । एव ।
स्वसारौ । मातरिभ्वरी इति । अरिप्रे इति । हिन्वन्ति । च । एने इति । शवसा ।
वर्धयन्ति । च ॥ १२ ॥

**चित्रं देवानां केतुरनीकं ज्योतिष्मान् प्रदिशः सूर्य उद्यन् ।**
**दिवाकरोऽति द्युम्नैस्तमांसि विश्वातारीद् दुरितानि शुक्रः ॥ १३ ॥**

चित्रम् । देवानाम् । केतुः । अनीकम् । ज्योतिष्मान् । प्रऽदिशः । सूर्यः । उत्ऽयन् ।
दिवाऽकरः । अति । द्युम्नैः । तमांसि । विश्वा । अतारीत् । दुःऽइतानि । शुक्रः ॥ १३॥

**चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।**
**आप्राद्' द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ १४ ॥**

चित्रम् । देवानाम् । उत् । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः ।
आ । अप्रात् । द्यावापृथिवी इति । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च ।

**सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् ।**
**यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥ १५ ॥**

सूर्यः । देवीम् । उषसम् । रोचमानाम् । मर्यः । न । योषाम् । अभि । एति । पश्चात् ।
यत्र । नरः । देवऽयन्तः । युगानि । विऽतन्वते । प्रति । भद्राय । भद्रम् ॥ १५ ॥

**इति नवमेऽनुवाके एकादशं सूक्तम् ।**

**वज्रपुनःस्तोमाख्ययोरेकाहयोः** 'त्वं न इन्द्रा भर' **इत्येष उक्थस्तोत्रियो भवति । तद् उक्तं वैताने**—"वज्रे पुनःस्तोमे 'त्वं न इन्द्रा भर' इति" **( वैताश्री ३९,१७) इति ।**

**तथा पवित्रादिषु राजसूयैकाहेषु एतस्य विनियोगः** 'अधा हीन्द्र गिर्वणः' **( अ २०,१०० ) इत्यनेन सह उक्तः ।**

---

१. स्वसारो मातरिभ्वं (भ्वं अ. पै.) रीररिप्रा हिन्वन्ति च RW. ऋ १०,१२०,९ पै ६,१,९.
२. आप्रा RW. ऋ १,११५,१.

**तथा वैदस्वरसाम्नोऽत्यहयोः प्रथमयोरह्नोः एष उक्थस्तोत्रियो भवति। तद् उक्तं वैताने** — "वैदस्वरसाम्नोः 'त्वं न इन्द्रा भर' इति" ( वैताश्रौ ४१,४ ) **इति।**

**तथा चतुरहाणां तृतीयेष्वहःसु अस्य विनियोगः** 'श्रायन्त इव सूर्यम्' ( अ २०,५८ ) **इत्यनेन सह उक्तः।**

**तथा अभ्यासङ्ग्यपञ्चशारदीययोः पञ्चाहयोर्द्वितीयेऽहनि एव उक्थस्तोत्रियो भवति। तद् उक्तं वैताने** — "अभ्यासङ्ग्यपञ्चशारदीययोर्द्वितीये 'त्वं न इन्द्रा भर' इति" ( वैताश्रौ ४१,१५ ) **इति।**

**तथा अभिप्लवस्यायुराख्येऽहनि एष उक्थस्तोत्रियो भवति। तद् उक्तं वैताने** — "आयुषि 'त्वं न इन्द्रा भर' इति" (वैताश्रौ ४१,२०) **इति।**

**तथा पृष्ठ्यषडहस्य तृतीयेऽहनि अस्य विनियोगः** 'इन्द्रेण सं हि दृक्षसे' ( अ २०,४० ) **इत्यनेन सह उक्तः।**

**तथा द्वादशाहस्य च्छन्दोमत्र्यहस्य प्रथमान्त्ययोरह्नोः** 'त्वं न इन्द्रा भर' ( अ २०, १०८ ), 'य एक इद् विदयते' ( २०,६३,४ ) **एतौ उक्थस्तोत्रियौ यथाक्रमं भवतः। तद् उक्तं वैताने** — "द्वादशाहस्य च्छन्दोमप्रथमान्त्ययोः 'त्वं न इन्द्रा भर', 'य एक इद् विदयते' इति" (वैताश्रौ ४२,७) **इति।**

**त्वं न॑ इन्द्रा भ॑र॒[1] ओजो॒ नृ॒म्णं श॑तक्रतो विचर्षणे। आ वी॒रं पृ॑तना॒षह॑म् ॥१॥**

त्वम्। नः। इन्द्र। आ। भर। ओजः। नृम्णम्। शतक्रतो इति शतऽक्रतो। विऽचर्षणे। आ। वीरम्। पृतनाऽसहम् ॥ १ ॥

**त्वं हि नः॑ पि॒ता व॑सो॒ त्वं मा॒ता श॑तक्रतो ब॒भूवि॑थ। अधा॑ ते सु॒म्नमी॑महे ॥२॥**

त्वम्। हि। नः। पिता। वसो इति। त्वम्। माता। शतक्रतो इति शतऽक्रतो। बभूविथ। अध। ते। सुम्नम्। ईमहे ॥ २ ॥

**त्वां शु॑ष्मिन् पुरुहूत वाज॒यन्त॒मुप॑ ब्रुवे शतक्रतो। स नो॑ रास्व सु॒वीर्य॑म् ॥३॥**

त्वाम्। शुष्मिन्। पुरुऽहूत। वाजऽयन्तम्। उप। ब्रुवे। शतक्रतो इति शतऽक्रतो। सः। नः। रास्व। सुऽवीर्यम् ॥ ३ ॥

**इति नवमेऽनुवाके द्वादशं सूक्तम्।**

---

१. भरॉं B,D.

साहस्राख्याश्चत्वार एकाहा ब्राह्मणपठिताः । तेषां प्रथमद्वितीययोः 'स्वादोरित्था विषूवतः' इति पृष्ठस्तोत्रियो भवति । तद् उक्तं वैताने — "साहस्राद्ययोः 'स्वादोरित्था विषूवतः' इति" ( वैताश्रौ ३९,१९ ) इति ।

तथा अश्वमेधत्र्यहस्य द्वितीयेऽहनि अस्य विनियोगः 'वाचमष्टापदीमहम्' ( अ २०, ४२ ) इत्यनेन सह उक्तः ।

**स्वादोरित्था विषूवतो[1] मध्वः पिबन्ति गौर्यः ।**
**या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ॥ १ ॥**

स्वादोः । इत्था । विषुऽवतः । मध्वः । पिबन्ति । गौर्यः ।
याः । इन्द्रेण । सऽयावरीः । वृष्णा । मदन्ति । शोभसे । वस्वीः । अनु । स्वऽराज्यम् ॥१॥

**ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः ।**
**प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥ २ ॥**

ताः । अस्य । पृशनऽयुवः । सोमम् । श्रीणन्ति । पृश्नयः ।
प्रियाः । इन्द्रस्य । धेनवः । वज्रम् । हिन्वन्ति । सायकम् । वस्वीः । अनु । स्वऽराज्यम् ॥२॥

**ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः ।**
**व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ ३ ॥**

ताः । अस्य । नमसा । सहः । सपर्यन्ति । प्रऽचेतसः ।
व्रतानि । अस्य । सश्चिरे । पुरूणि । पूर्वऽचित्तये । वस्वीः । अनु । स्वऽराज्यम् ॥ ३ ॥

**इति नवमेऽनुवाके त्रयोदशं सूक्तम् ।**

विराडादिषु सप्तस्वेकाहेषु 'इन्द्राय मद्वने सुतम्' ( अ २०,११० ), 'यत् सोममिन्द्र विष्णवि' ( अ २०,१११ ) एतौ आज्योक्थस्तोत्रियौ भवतः । तद् उक्तं वैताने — "विराजि भूमिस्तोमे वनस्पतिसवे त्विष्यपचित्योरिन्द्राग्न्योःस्तोम इन्द्राग्न्योःकुलाये 'इन्द्राय मद्वने सुतम्', 'यत् सोममिन्द्र विष्णवि' इति" ( वैताश्रौ ४०,१ ) इति ।

**इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः । अर्कमर्चन्तु कारवः ॥ १ ॥**

इन्द्राय । मद्वने । सुतम् । परि । स्तोभन्तु । नः । गिरः । अर्कम् । अर्चन्तु । कारवः ॥१॥

---

1. °वतो B.

यस्मिन् विश्वा अधि श्रियो रणन्ति सप्त संसदः। इन्द्रं सुते हवामहे ॥२॥

यस्मिन्। विश्वाः। अधि। श्रियः। रणन्ति। सप्त। सम्ऽसदः। इन्द्रम्। सुते। हवामहे ॥२॥

त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत। तमिद् वर्धन्तु नो गिरः ॥ ३ ॥

त्रिऽकद्रुकेषु। चेतनम्। देवासः। यज्ञम्। अत्नत। तम्। इत्। वर्धन्तु। नः। गिरः ॥

इति नवमेऽनुवाके चतुर्दशं सूक्तम्।

'यत् सोममिन्द्र विष्णवि' इत्यस्य विनियोगः पूर्वसूक्तेन सह उक्तः।

तथा पवित्रादिषु राजसूयैकाहेषु चतुरहादिषु च अस्य विनियोगः 'अधा हीन्द्र गिर्वणः' ( अ २०,१०० ) इत्यनेन सह उक्तः।

तथा अभिप्लवस्य षष्ठमहः उक्थ्यसंस्थं चेद् भवति तदा 'य एक इद् विदयते' ( अ २०,६३,४ ), 'यत् सोममिन्द्र विष्णवि' ( अ २०,१११ ) एतौ उक्थस्तोत्रियौ विकल्पितौ भवतः। तद् उक्तं वैताने—"षष्ठमुक्थ्यं चेद् 'य एक इद् विदयते', 'यत् सोममिन्द्र विष्णवि' इति" ( वैताश्रौ ४१,२२ ) इति।

यत् सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये।
यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥ १ ॥

यत्। सोमम्। इन्द्र। विष्णवि। यत्। वा। घ। त्रिते। आप्त्ये।
यत्। वा। मरुत्ऽसु। मन्दसे। सम्। इन्दुऽभिः ॥ १ ॥

यद्वा शक्र परावति समुद्रे अधि मन्दसे। अस्माकमित् सुते रणा समिन्दुभिः ॥२॥

यत्। वा। शक्र। पराऽवति। समुद्रे। अधि। मन्दसे। अस्माकम्। इत्। सुते। रण। सम्। इन्दुऽभिः ॥

यद्वासि सुन्वतो वृधो यजमानस्य सत्पते।
उक्थे वा यस्य रण्यसि समिन्दुभिः ॥ ३ ॥

यत्। वा। असि। सुन्वतः। वृधः। यजमानस्य। सत्ऽपते।
उक्थे। वा। यस्य। रण्यसि। सम्। इन्दुऽभिः ॥ ३ ॥

इति नवमेऽनुवाके पञ्चदशं सूक्तम्।

विजुत्त्यभिभूत्यादिषु[1] अष्टसु द्वन्द्वैकाहेषु 'यदद्य कच्च वृत्रहन्' ( अ २०,११२ ), 'उभयं शृणवच्च नः' ( अ २०,११३ ) एतौ आज्यपृष्ठस्तोत्रियौ भवतः। तद् उक्तं

१. विजुत्य' शंपा.

**वैताने** — "विनुत्त्यभिभूत्यो[1] राशिमरायथोः[2] शदोपशदयोः सम्राट्स्वराजोः 'यदद्य कच्च वृत्रहन्', 'उभयं शृणवच्च नः' इति" ( वैताश्रौ ४०,३ ) इति ।

**यद॒द्य कच्च॑ वृत्रहन्नु॒दगा॑ अ॒भि सू॑र्य । सर्वं॒ तदि॑न्द्र ते॒ वशे॑ ॥ १ ॥**

यत् । अ॒द्य । कत् । च॒ । वृ॒त्र॒ऽह॒न् । उ॒त्ऽअगाः॑ । अ॒भि । सू॒र्य॒ । सर्व॑म् । तत् । इ॒न्द्र॒ । ते॒ । वशे॑ ॥ १ ॥

**यद्वा॑ प्रवृद्ध सत्पते॒ न म॑रा इति॒ मन्य॑से । उ॒तो तत् स॒त्यमित् तव॑ ॥ २ ॥**

यत् । वा॒ । प्र॒ऽवृ॒द्ध॒ । स॒त्ऽप॒ते॒ । न । मै॒र॒ । इति॑ । मन्य॑से । उ॒तो इति॑ । तत् । स॒त्यम् । इत् । तव॑ ॥ २ ॥

**ये सोमा॑सः परा॒वति॒ ये अ॒र्वाव॑ति सुन्वि॒रे । सर्वां॒स्ताँ इ॑न्द्र गच्छसि ॥ ३ ॥**

ये । सोमा॑सः । प॒रा॒ऽवति॑ । ये । अ॒र्वा॒ऽवति॑ । सु॒न्वि॒रे । सर्वा॑न् । तान् । इ॒न्द्र॒ । ग॒च्छ॒सि॒ ॥ ३ ॥

**इति नवमेऽनुवाके षोडशं सूक्तम् ।**

**विनुत्त्यभिभूत्यादिषु[1] 'उभयं शृणवच्च नः' इत्यस्य विनियोगः पूर्वसूक्तेन सह उक्तः ।**

**तथा त्रिवृदादिषु अस्य विनियोगः 'वयमेनमिदा ह्यः' ( अ २०,९७ ) इत्यनेन सह उक्तः ।**

**उ॒भयं॑ शृणव॑च्च न॒ इन्द्रो॑ अ॒र्वागि॒दं वचः॑ ।**
**स॒त्राच्या॑ म॒घवा॒ सोम॑पीतये धि॒या शवि॑ष्ठ॒ आ ग॑मत् ॥ १ ॥**

उ॒भय॑म् । शृ॒णव॑त् । च॒ । न॒ः । इन्द्रः॑ । अ॒र्वाक् । इ॒दम् । वचः॑ ।
स॒त्राच्या॑ । म॒घऽवा॑ । सोम॑ऽपीतये । धि॒या । शवि॑ष्ठः । आ । ग॒म॒त् ॥ १ ॥

**तं हि स्व॒राजं॑ वृष॒भं तमोज॑से 'धि॒षणे॑ निष्टत॒क्षतुः॑[3]' ।**
**उ॒तोप॒मानां॑ प्रथ॒मो नि षी॑दसि॒ सोम॑काम॒ं हि ते॒ मनः॑ ॥ २ ॥**

तम्[4] । हि । स्व॒ऽरा॒ज॑म् । वृ॒ष॒भम् । तम् । ओज॑से । धि॒षणे॒ इति॑ । निः॒ऽत॒त॒क्षतुः॑ ।
उ॒त । उ॒प॒ऽमाना॑म् । प्र॒थ॒मः । नि । सी॒द॒सि॒ । सोम॑ऽकामम् । हि । ते॒ । मनः॑ ॥ २ ॥

**इति नवमेऽनुवाके सप्तदशं सूक्तम् ।**

---

१. विनुत्त्य° शंपा. २. °राशयोः शंपा. ३. धि॒षणे॒ निष्ट॒त॒° RW. ४. तत् P.

**पवित्रादिषु राजसूयैकाहेषु** 'अभ्रातृव्यो अना त्वम्' **इत्यस्य विनियोगः** 'अधा हीन्द्र गिर्वणः' ( अ २०,१०० ) **इत्यनेन सह उक्तः।**

**तथा अभिप्लवषडहस्य गवाख्येऽहनि** 'अभ्रातृव्यो अना त्वम्' **इत्येष उक्थस्तोत्रियो भवति। तद् उक्तं वैताने**—"षडहस्य गवि 'अभ्रातृव्यो अना त्वम्' इति" ( वैताश्रौ ४१, २० ) **इति।**

**अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि। युधेदापित्वमिच्छसे ॥१॥**

अभ्रातृव्यः। अना। त्वम्। अनापिः। इन्द्र। जनुषा। सनात्। असि। युधा। इत्। आपिऽत्वम्। इच्छसे ॥ १ ॥

**नकी रेवन्तं सख्याय विन्दसे पीयन्ति[1] ते सुराश्वः।**
**यदा कृणोषि नदनुं समूहस्यादित् पितेव हूयसे ॥ २ ॥**

नकिः। रेवन्तम्। सख्याय। विन्दसे। पीयन्ति। ते। सुराश्वः।
यदा। कृणोषि। नदनुम्। सम्। ऊहसि। आत्। इत्। पिताऽइव। हूयसे ॥ २ ॥

**इति नवमेऽनुवाके अष्टादशं सूक्तम्।**

**साद्यःक्राभिधानेषु एकाहेषु श्येनयागवर्जितेषु** 'अहमिद्धि पितुष्परि' **इत्याज्यस्तोत्रियो भवति। तद् उक्तं वैताने**—"साद्यःक्रेषु श्येनवर्जम् 'अहमिद्धि पितुष्परि' इति च" ( वैताश्रौ ४०,६ ) **इति।**

**अहमिद्धि पितुष्परि मेधामृतस्य जग्रभ। अहं सूर्य इवाजनि ॥ १ ॥**

अहम्। इत्। हि। पितुः। परि। मेधाम्। ऋतस्य। जग्रभ। अहम्। सूर्यःऽइव। अजनि ॥ १ ॥

**अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववत्। येनेन्द्रः शुष्ममिद् दधे ॥२॥**

अहम्। प्रत्नेन। मन्मना। गिरः। शुम्भामि। कण्वऽवत्। येन। इन्द्रः। शुष्मम्। इत्। दधे ॥ २ ॥

**ये त्वामिन्द्र न तुष्टुवुर्ऋषयो[2] ये च तुष्टुवुः। ममेद् वर्धस्व सुष्टुतः ॥३॥**

ये। त्वाम्। इन्द्र। न। तुस्तुवुः। ऋषयः। ये। च। तुस्तुवुः। मम। इत्। वर्धस्व। सुऽस्तुतः ॥ ३ ॥

**इति नवमेऽनुवाके एकोनविंशं सूक्तम् ॥**

---

१. पीयन्त RW. २. °न्द्र न तुष्टु° RW.

**अतिरात्राणां सर्वस्तोमाख्ययोः** 'मा भूम निष्टया इव' ( अ २०,११६ ), 'वि दद्राणं सलिलस्य पृष्ठे' ( अ ९,१५,९ ) **एतौ पृष्ठस्तोत्रियौ यथाक्रमं भवतः । तद् उ वैताने**—"अतिरात्राणां सर्वस्तोमयोः 'मा भूम निष्टया इव', 'विधुं दद्राणं सलिलस्य पृष्ठे' इति ( वैताश्रौ ४०,७ ) **इति ।**

**तथा चतुरहाणां सर्वेष्वहःसु एतौ पृष्ठस्तोत्रियौ विकल्पितौ भवतः । त उक्तं वैताने**—"सर्वेषु 'मा भूम निष्टया इव', 'विधुं दद्राणं सलिलस्य पृष्ठे' इति" ( वैताश्र ४१,१२ ) **इति ।**

**मा भूम निष्टया इवेन्द्र त्वदरणा इव ।**
**वनानि न प्रजहितान्यद्रिवो दुरोषासो अमन्महि ॥ १ ॥**

मा । भूम । निष्टयाःऽइव । इन्द्र । त्वत् । अरणाःऽइव ।
वनानि । न । प्रऽजहितानि । अद्रिऽवः । दुरोषासः । अमन्महि ॥ १ ॥

**अमन्महीदनाशवोऽनुग्रासश्च वृत्रहन् ।**
**सकृत् सु ते महता शूर राधसाऽनु स्तोमं मुदीमहि ॥ २ ॥**

अमन्महि । इत् । अनाशवः । अनुग्रासः । च । वृत्रऽहन् ।
सकृत् । सु । ते । महता । शूर । राधसा । अनु । स्तोमम् । मुदीमहि ॥ २ ॥

**इति नवमेऽनुवाके विंशं सूक्तम् ।**

**त्रिवृदादिषु** 'पिबा सोममिन्द्र मन्दतु त्वा' **इत्यस्य विनियोगः** 'वयमेनमिदा ह्यः' ( अ २०,९७ ) **इत्यनेन सह उक्तः ।**

**तथा तनूपृष्ठे षडहे अस्य विनियोगः** 'यद् द्याव इन्द्र ते शतम्' ( अ २०, ८१ ) **इत्यनेन सह उक्तः ।**

**पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।**
**सोतुर्बाहुभ्यां सुयतो नार्वा ॥ १ ॥**

पिब । सोमम् । इन्द्र । मन्दतु । त्वा । यम् । ते । सुसाव । हरिऽअश्व । अद्रिः ।
सोतुः । बाहुऽभ्याम् । सुऽयतः । न । अर्वा ॥ १ ॥

**यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि ।**
**स त्वामिन्द्र प्रभूवसो ममत्तु ॥ २ ॥**

यः । ते । मदः । युज्यः । चारुः । अस्ति । येन । वृत्राणि । हरिऽअश्व । हंसि ।
सः । त्वाम् । इन्द्र । प्रभुवसो इति प्रभुऽवसो । ममत्तु ॥ २ ॥

**बोधा सु मे मघवन् वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् ।**
**इमा ब्रह्म सधमादे जुषस्व ॥ ३ ॥**

बोध । सु । मे । मघऽवन् । वाचम् । आ । इमाम् । याम् । ते । वसिष्ठः । अर्चति ।
प्रऽशस्तिम् । इमा । ब्रह्म । सधऽमादे । जुषस्व ॥ ३ ॥

**इति नवमेऽनुवाके एकविंशं सूक्तम् ।**

**चातुर्मास्यवैश्वदेवादीनां सप्तानां त्र्यहाणां प्रथमेष्वहःसु** 'शग्ध्यू षु शचीपते' **इत्येष पृष्ठस्तोत्रियो भवति । तद् उक्तं वैताने**—"चातुर्मास्यवैश्वदेवगर्गवैदच्छन्दोमवत्पराकान्तर्वेस्वश्वमेधत्र्यहाणां 'शग्ध्यू षु शचीपते' इति" ( वैताश्रौ ४१,२ ) **इति ।**

**तथा त्रिककुद्दशाहाहीने अस्य विनियोगः** 'क ईं वेद सुते सचा' ( अ २०,५३ ) **इत्यनेन सह उक्तः ।**

**साकमेधत्र्यहस्य प्रथमेऽहनि** 'इन्द्रमिद् देवतातये' ( अ २०,११८,३ ) **इत्येष पृष्ठस्तोत्रियो भवति । तद् उक्तं वैताने**—"साकमेधस्य 'इन्द्रमिद् देवतातये' इति" ( वैताश्रौ ४१,३ ) **इति ।**

**शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः ।**
**भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ १ ॥**

शग्धि । ऊं इति । सु । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
भगम् । न । हि । त्वा । यशसम् । वसुऽविदम् । अनु । शूर । चरामसि ॥ १ ॥

**पौरो अश्वस्य पुरुकृद् गवामस्युत्सो देव हिरण्ययः ।**
**नकिर्हि दानं परिमर्धिषत् त्वे यद्यद्यामि तदा भर ॥ २ ॥**

पौरः । अश्वस्य । पुरुऽकृत् । गवाम् । असि । उत्सः । देव । हिरण्ययः ।
नकिः । हि । दानम् । परिऽमर्धिषत् । त्वे इति । यत्ऽयत् । यामि । तत् । आ । भर ॥

**इन्द्रमिद् देवतातय इन्द्रं प्रयत्यध्वरे ।**
**इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ ३ ॥**

इन्द्रम् । इत् । देवऽतातये । इन्द्रम् । प्रऽयति । अध्वरे ।
इन्द्रम् । समऽईके । वनिनः । हवामहे । इन्द्रम् । धनस्य । सातये ॥ ३ ॥

इन्द्रो॑ म॒ह्ना रोद॑सी पप्रथ॒च्छव॒ इन्द्रः॒ सूर्य॑मरोचयत् ।
इन्द्रे॑ ह॒ विश्वा॒ भुव॑नानि येमिर॒ इन्द्रे॑ सुवा॒नास॒ इन्द॑वः ॥ ४ ॥

इन्द्रः॑ । म॒ह्ना । रोद॑सी॒ इति॑ । प॒प्र॒थ॒त् । शवः॑ । इन्द्रः॑ । सूर्य॑म् । अ॒रो॒च॒य॒त् ।
इन्द्रे॑ । ह॒ । विश्वा॑ । भुव॑नानि । ये॒मि॒रे । इन्द्रे॑ । सु॒वा॒नासः॑ । इन्द॑वः ॥ ४ ॥

**इति नवमेऽनुवाके द्वाविंशं सूक्तम् ।**

**वैश्वदेवादित्र्यहेषु** 'अस्तावि मन्म पूर्व्यम्' **इत्यस्य विनियोगः** 'तमिन्द्रं वाजयामसि' ( अ २०,४७ ) **इत्यनेन सह उक्तः ।**

अस्ता॑वि॒ मन्म॑ पू॒र्व्यं ब्रह्मेन्द्रा॑य वोचत ।
पू॒र्वीर्ऋ॒तस्य॑ बृह॒तीर॑नूषत स्तो॒तुर्मे॒धा अ॑सृक्षत ॥ १ ॥

अस्ता॑वि । मन्म॑ । पू॒र्व्यम् । ब्रह्म॑ । इन्द्रा॑य । वो॒च॒त॒ ।
पू॒र्वीः । ऋ॒तस्य॑ । बृ॒ह॒तीः । अ॒नू॒ष॒त॒ । स्तो॒तुः । मे॒धाः । अ॒सृ॒क्ष॒त॒ ॥ १ ॥

तु॒र॒ण्यवो॒ मधु॑मन्तं घृत॒श्चुतं॒ विप्रा॑सो अ॒र्कमा॑नृचुः ।
अ॒स्मे र॒यिः प॑प्रथे॒ वृष्ण्यं॒ शवो॒ऽस्मे सु॑वा॒नास॒ इन्द॑वः ॥ २ ॥

तु॒र॒ण्यवः॑ । मधु॑ऽमन्तम् । घृ॒त॒ऽश्चुत॑म् । विप्रा॑सः । अ॒र्कम् । आ॒नृ॒चुः ।
अ॒स्मे इति॑ । र॒यिः । प॒प्र॒थे॒ । वृष्ण्य॑म् । शवः॑ । अ॒स्मे इति॑ । सु॒वा॒नासः॑ । इन्द॑वः ॥ २ ॥

**इति नवमेऽनुवाके त्रयोविंशं सूक्तम् ।**

**दशाहस्य गवामयनिकस्य अष्टमेऽहनि** 'यदिन्द्र प्रागपागुदक्' **इत्येष उक्थस्तोत्रियो भवति । उक्तं वैताने**—"दशाहस्याष्टमे 'यदिन्द्र प्रागपागुदक्' इति" ( वैताश्रौ ४२,३ ) **इति ।**

**तथा त्रिककुद्दशाहाहीने अस्य विनियोगः** 'क ईं वेद सुते सचा' ( अ २०,५३ ) **इत्यनेन सह उक्तः ।**

यदि॑न्द्र॒ प्राग॒पागुद॒ङ्न्य॑ग्वा हू॒यसे॒ नृभिः॑ ।
सिमा॑ पु॒रू नृषू॑तो अ॒स्यान॒वेऽसि॑ प्रशर्ध तु॒र्वशे॑ ॥ १ ॥

यत् । इ॒न्द्र॒ । प्राक् । अपा॑क् । उद॑क् । न्य॑क् । वा॒ । हू॒यसे॑ । नृऽभिः॑ ।
सिम॑ । पु॒रु । नृऽसू॑तः । अ॒सि॒ । आन॑वे । असि॑ । प्र॒ऽश॒र्ध॒ । तु॒र्वशे॑ ॥ १ ॥

यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा ।
कण्वासस्त्वा ब्रह्मभि[1] स्तोमवाहस इन्द्रा यच्छन्त्या गहि ॥ २ ॥

यत् । वा । रुमे । रुशमे । श्यावके । कृपे । इन्द्र । मादयसे । सचा ।
कण्वासः । त्वा । ब्रह्मऽभिः । स्तोमऽवाहसः । इन्द्र । आ । यच्छन्ति । आ । गहि ॥ २ ॥

**इति नवमेऽनुवाके चतुर्विंशं सूक्तम् ।**

**तनूपृष्ठे षडहे** 'अभि त्वा शूर नोनुमः' **इत्यस्य विनियोगः** 'यद् द्याव इन्द्र ते शतम्' ( अ २०,८१ ) **इत्यनेन सह उक्तः ।**

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ १ ॥

अभि । त्वा । शूर । नोनुमः । अदुग्धाःऽइव । धेनवः ।
ईशानम् । अस्य । जगतः । स्वःऽदृशम् । ईशानम् । इन्द्र । तस्थुषः ॥ १ ॥

न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ २ ॥

न । त्वाऽवान् । अन्यः । दिव्यः । न । पार्थिवः । न । जातः । न । जनिष्यते ।
अश्वऽयन्तः । मघऽवन् । इन्द्र । वाजिनः । गव्यन्तः । त्वा । हवामहे ॥ २ ॥

**इति नवमेऽनुवाके पञ्चविंशं सूक्तम् ।**

**तनूपृष्ठे षडहे** 'रेवतीर्नः सधमादे' **इत्यस्य विनियोगः** 'यद् द्याव इन्द्र ते शतम्' ( अ २०,८१ ) **इत्यनेन सह उक्तः ।**

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥ १ ॥

रेवतीः । नः । सधऽमादे । इन्द्रे । सन्तु । तुविऽवाजाः । क्षुऽमन्तः । याभिः । मदेम ॥१॥

आ घ त्वावान् त्मनाप्त[2] स्तोतृभ्यो धृष्णवियानः । ऋणोरक्षं न चक्र्योः ॥२॥

आ । घ । त्वाऽवान् । त्मना । आप्तः । स्तोतृऽभ्यः । धृष्णो इति । इयानः । ऋणोः । अक्षम् । न । चक्र्योः ॥ २ ॥

---

१. ब्रह्मभिः ऋ ८,४,२.　　२. त्मनाप्तः ऋ १,३०,१४.

आ यद् दुवः शतक्रतवा कामं जरितृणाम्[1]। ऋणोरक्षं न शचीभिः ॥३॥

आ। यत्। दुवः। शतक्रतो इति शतऽक्रतो। आ। कामम्। जरितृणाम्। ऋणोः। अक्षम्। न। शचीभिः ॥ ३ ॥

इति नवमेऽनुवाके षड्विंशं सूक्तम्।

विषुवति सौर्यपृष्ठे माध्यंदिने 'चित्रं देवानामुदगादनीकम्' (अ २०,१०७,१४), 'तत् सूर्यस्य देवत्वं तन्महित्वम्' (अ २०,१२३) इति पृष्ठस्तोत्रियानुरूपौ भवतः। तद् उक्तं वैताने—"'चित्रं देवानामुदगादनीकम्', 'तत् सूर्यस्य देवत्वं तन्महित्वम्' इति पृष्ठस्तोत्रियानुरूपौ" (वैताश्रौ ३३,६) इति।

तत् सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ १ ॥

तत्। सूर्यस्य। देवऽत्वम्। तत्। महिऽत्वम्। मध्या। कर्तोः। विऽततम्। सम्। जभार। यदा। इत्। अयुक्त। हरितः। सधऽस्थात्। आत्। रात्री। वासः। तनुते। सिमस्मै ॥१॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे।
अनन्तमन्यद् रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति ॥ २ ॥

तत्। मित्रस्य। वरुणस्य। अभिऽचक्षे। सूर्यः। रूपम्। कृणुते। द्योः[2]। उपऽस्थे। अनन्तम्। अन्यत्। रुशत्। अस्य। पाजः। कृष्णम्। अन्यत्। हरितः। सम्। भरन्ति ॥

इति नवमेऽनुवाके सप्तविंशं सूक्तम्।

तनूपृष्ठे षडहे 'कया नश्चित्र आ भुवत्' इत्यस्य विनियोगः 'यद् द्याव इन्द्र ते शतम्' (अ २०,८१) इत्यनेन सह उक्तः।

कया नश्चित्र आ भुवदूती सदावृधः सखा। कया शचिष्ठया वृता ॥१॥

कया। नः। चित्रः। आ। भुवत्। ऊती। सदाऽवृधः। सखा। कया। शचिष्ठया। वृता ॥

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृल्हा[3] चिदारुजे वसु ॥ २ ॥

कः। त्वा। सत्यः। मदानाम्। मंहिष्ठः। मत्सत्। अन्धसः। दृल्हा। चित्। आऽरुजे। वसु ॥

---

१. जरीतृणाम् B,Cs. २. द्यौः J. ३. दृढा B^b,C,K,K^m,R,Dc; दृळ्हा ऋ ४,३१,२.

अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ ३ ॥

अभि । सु । नः । सखीनाम् । अविता । जरितॄणाम् । शतम् । भवासि । ऊतिऽभिः ॥३॥[1]

इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः ।
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह चीक्लृपाति ॥ ४ ॥

इमा । नु । कम् । भुवना । सीसधाम । इन्द्रः । च । विश्वे । च । देवाः ।
यज्ञम् । च । नः । तन्वम् । च । प्रऽजाम् । च । आदित्यैः । इन्द्रः । सह । चीक्लृपाति ॥

आदित्यैरिन्द्रः सगणो मरुद्भिरस्माकं भूत्वविता तनूनाम् ।
हत्वाय देवा असुरान् यदायन् देवा देवत्वमभिरक्षमाणाः ॥ ५ ॥

आदित्यैः । इन्द्रः । सऽगणः । मरुत्ऽभिः । अस्माकम् । भूतु । अविता । तनूनाम् ।
हत्वाय । देवाः । असुरान् । यत् । आयन् । देवाः । देवऽत्वम् । अभिऽरक्षमाणाः ॥५॥

प्रत्यञ्चमर्कमनयं छचीभिरादित् स्वधामिषिरां पर्यपश्यन् ।
अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ ६ ॥

प्रत्यञ्चम् । अर्कम् । अनयन् । शचीभिः । आत् । इत् । स्वधाम् । इषिराम् । परि ।
अपश्यन् । अया । वाजम् । देवऽहितम् । सनेम । मदेम । शतऽहिमाः । सुऽवीराः ॥ ६ ॥

**इति नवमेऽनुवाके अष्टाविंशं सूक्तम् ।**

**पृष्ठ्यस्य षष्ठेऽहनि** 'अपेन्द्र प्राचो मघवन्नमित्रान्' **इति सुकीर्त्याख्यस्य सकलसूक्तस्य पच्छः शंसने प्राप्ते चतुर्थीम् अर्धर्चशः शंसति । तद् उक्तं वैताने**—"'अपेन्द्र प्राचो मघवन्नमित्रान्' इति सुकीर्तिम् । चतुर्थीमर्धर्चशः" (वैताश्रौ ३२,१३) **इति ।**

**सौत्रामण्यां गृहीतेष्वाज्येषु** 'कुविदङ्ग यवमन्तः' ( अ २०,१२५,२ ) **इति ऋचा पयोग्रहान् गृह्णन्तमध्वर्युम् अभिमन्त्रयते । तद् उक्तं वैताने**—"गृहीतेष्वाज्येषु 'कुविदङ्ग यवमन्तः' इति पयोग्रहान् गृह्णन्तम्" (वैताश्रौ ३०,१०) **इति ।**

**तत्रैव वपामार्जनादनन्तरम्** 'युवं सुराममश्विना' ( अ २०,१२५,४-७ ) **इति चतसृभिर्ऋग्भिः पयःसुराग्रहाणां होमान् अनुमन्त्रयते । तद् उक्तं वैताने**—"वपामार्जनाद् 'युवं सुराममश्विना' इति चतसृभिः पयःसुराग्रहाणाम्" (वैताश्रौ ३०,११) **इति ।**

---

१. इतः परं मन्त्रत्रयं पूर्वम् ( अ २०,६३ ) आगतम् इति कृत्वा तत्स्थाने **असुरान्यदायन्निति द्विपदासूक्तौ । स्तोत्रियानुरूपौ** B,Bh,K,Km; **इमा नु कं भुवना सीषधाम हत्वाय देवा असुरान् यदायन्निति द्विपदासूक्तौ स्तोत्रियानुरूपौ** C प्रभृ.

अपेन्द्र 'प्राचो मघवन्नमित्रानपापाचो' अभिभूते नुदस्व ।
अपोदीचो अप शूराधराच उरौ यथा तव शर्मन् मदेम ॥ १ ॥

अप । इन्द्र । प्राचः । मघऽवन् । अमित्रान् । अप । अपाचः । अभिऽभूते । नुदस्व ।
अप । उदीचः । अप । शूर । अधराचः । उरौ । यथा । तव । शर्मन् । मदेम ॥ १ ॥

कुविदङ्ग यवमन्तो यवं चिद् यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥ २ ॥

कुवित् । अङ्ग । यवऽमन्तः । यवम् । चित् । यथा । दान्ति । अनुऽपूर्वम् । विऽयूय ।
इहऽइह । एषाम् । कृणुहि । भोजनानि । ये । बर्हिषः । नमःऽवृक्तिम् । न । जग्मुः ॥२॥

नहि स्थूर्यृतुथा यातमस्ति नोत श्रवो विविदे संगमेषु ।
गव्यन्त इन्द्रं सख्याय विप्रा अश्वायन्तो वृषणं वाजयन्तः ॥ ३ ॥

नहि । स्थूरि । ऋतुऽथा । यातम् । अस्ति । न । उत । श्रवः । विविदे । सम्ऽगमेषु ।
गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः । वृषणम् । वाजयन्तः ॥ ३ ॥

युवं सुराममश्विना नमुचावासुरे सचा ।
विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥ ४ ॥

युवम् । सुरामम्[2] । अश्विना । नमुचौ । आसुरे । सचा ।
विऽपिपाना । शुभः । पती इति । इन्द्रम् । कर्मऽसु । आवतम् ॥ ४ ॥

पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः ।
यत् सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ५ ॥

पुत्रम्ऽइव । पितरौ । अश्विना । उभा । इन्द्र । आवथुः । काव्यैः । दंसनाभिः ।
यत् । सुरामम्[3] । वि । अपिबः । शचीभिः । सरस्वती । त्वा । मघऽवन् । अभिष्णक् ॥

इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृडीको[4] भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं नः कृणोतु सुवीर्यस्य पतयः स्याम ॥ ६ ॥

---

१. प्राचं इन्द्र विश्वाँ अमित्रा° ऋ १,१३१,४. २. सुरामम् P²; सुऽरामम् Cp.
३. सुऽरामम् P,Cp. ४. सुमृळीको RW.; सुमृळीको ऋ १०,१३१,६.

इन्द्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृडीकः । भवतु । विश्वऽवेदाः ।
बाधताम् । द्वेषः । अभयम् । नः । कृणोतु । सुऽवीर्यस्य । पतयः । स्याम ॥ ६ ॥

**स सुत्रामा स्ववाँ इन्द्रो [1]अस्मदाराच्चिद् द्वेषः सनुतर्युयोतु ।**
**तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ ७ ॥[2]**

सः । सुऽत्रामा । स्वऽवान् । इन्द्रः । अस्मत् । आरात् । चित् । द्वेषः । सनुतः । युयोतु ।
तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥ ७ ॥

**इति नवमेऽनुवाके एकोनत्रिंशं सूक्तम् ।**

**पृष्ठ्यस्य षष्ठेऽहनि** 'वि हि सोतोरसृक्षत' **इति वृषाकप्याख्यं सूक्तं सूत्रोक्तधर्मकं शंसति । तद् उक्तं वैताने** — "'वि हि सोतोरसृक्षत' इति वृषाकपिम्" ( वैताश्रौ ३२, १४ ) **इत्यादि ।**

**वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।**
**यत्रामदद् वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥ १ ॥**

वि । हि । सोतोः । असृक्षत । न । इन्द्रम् । अमंसत ।
यत्र । अमदत् । वृषाकपिः । अर्यः । पुष्टेषु । मत्ऽसखा । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥

**परा हीन्द्र धावसि वृषाकपेरति व्यथिः ।**
**नो अह प्र विन्दस्यन्यत्र सोमपीतये विश्वस्मादिन्द्र उत्तरः ॥ २ ॥**

परा । हि । इन्द्र । धावसि । वृषाकपेः । अति । व्यथिः ।
नो इति । अह । प्र । विन्दसि । अन्यत्र । सोमऽपीतये । विश्वस्मात् ।० ॥ २ ॥

**किमयं त्वां वृषाकपिश्चकार हरितो मृगः ।**
**यस्मा इरस्यसीदु न्व१र्यो वा पुष्टिमद् वसु विश्वस्मादिन्द्र उत्तरः ॥३॥**

किम् । अयम् । त्वाम् । वृषाकपिः । चकार । हरितः । मृगः ।
यस्मै । इरस्यसि । इत् । ऊं इति । नु । अर्यः । वा । पुष्टिऽमत् । वसु । विश्वस्मात् ।० ॥

**यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि ।**
**श्वा न्वस्य जम्भिषदपि कर्णे वराहयुर्विश्वस्मादिन्द्र उत्तरः ॥ ४ ॥**

---

१. अस्मे आरा° RW. ऋ १०,१३१,७. २. पूर्वोत्तरार्धविपर्यासेन पठतः RW. ऋ.

यम् । इमम् । त्वम् । वृषाकपिम् । प्रियम् । इन्द्र । अभिऽरक्षसि ।
श्वा । नु । अस्य । जम्भिषत् । अपि । कर्णे । वराहऽयुः । विश्वस्मात् ।० ॥ ४ ॥

प्रिया तष्टानि मे कपिर्व्यक्ता व्यदूदुषत् ।
शिरो न्वस्य राविषं न सुगं दुष्कृते भुवं विश्वस्मादिन्द्र उत्तरः ॥ ५ ॥

प्रिया । तष्टानि । मे । कपिः । विऽअक्ता । वि । अदूदुषत् ।
शिरः । नु । अस्य । राविषम् । न । सुऽगम् । दुःऽकृते । भुवम् । विश्वस्मात् ।० ॥ ५ ॥

न मत् स्त्री सुभसत्तरा न सुयाशुतरा भुवत् ।
न मत् प्रतिच्यवीयसी न सक्थ्युद्यमीयसी विश्वस्मादिन्द्र उत्तरः ॥ ६ ॥

न । मत् । स्त्री । सुभसत्ऽतरा । न । सुयाशुऽतरा । भुवत् ।
न । मत् । प्रतिऽच्यवीयसी । न । सक्थि । उत्ऽयमीयसी । विश्वस्मात् ।० ॥ ६ ॥

उवे अम्ब सुलाभिके यथेवाङ्ग भविष्यति ।
भसन्मे अम्ब सक्थि मे शिरो मे वीव[1] हृष्यति विश्वस्मादिन्द्र उत्तरः ॥ ७ ॥

उवे । अम्ब । सुलाभिके । यथाऽइव । अङ्ग । भविष्यति ।
भसत् । मे । अम्ब । सक्थि । मे । शिरः । मे । विऽईव । हृष्यति । विश्वस्मात् ।० ॥ ७ ॥

किं सुबाहो स्वङ्गुरे पृथुष्टो पृथुजाघने ।
किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं विश्वस्मादिन्द्र उत्तरः ॥ ८ ॥

किम् । सुबाहो इति सुऽबाहो । सुऽअङ्गुरे । पृथुस्तो इति पृथुऽस्तो । पृथुऽजघने[2] ।
किम् । शूरऽपत्नि । नः । त्वम् । अभि । अमीषि । वृषाकपिम् । विश्वस्मात् ।० ॥ ८ ॥

अवीरामिव मामयं शरारुरभि मन्यते ।
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥ ९ ॥

अवीराम्ऽइव । माम् । अयम् । शरारुः । अभि । मन्यते ।
उत । अहम् । अस्मि । वीरिणी । इन्द्रऽपत्नी । मरुत्ऽसखा । विश्वस्मात् ।० ॥ ९ ॥

संहोत्रं स्म पुरा नारी समनं वाव गच्छति ।
वेधा ऋतस्य वीरिणीन्द्रपत्नी महीयते विश्वस्मादिन्द्र उत्तरः ॥ १० ॥

१. वीव B. २. °जघेन P.

सम्ऽहोत्रम् । स्म । पुरा । नारी । सर्मनम् । वा । अव॑ । गच्छति ।
वेधाः । ऋतस्य॑ । वीरिणी॑ । इन्द्र॑ऽपत्नी । महीयते । विश्व॑स्मात् ।० ॥ १० ॥

**इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।**
**नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ ११ ॥**

इन्द्राणीम् । आसु । नारिषु । सुऽभगाम् । अहम् । अश्रवम् ।
नहि । अस्याः । अपरम् । चन । जरसा । मरते । पतिः । विश्व॑स्मात् ।० ॥ ११ ॥

**नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।**
**यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥ १२ ॥**

न । अहम् । इन्द्राणि । ररण । सख्युः । वृषाकपेः । ऋते ।
यस्य॑ । इदम् । अप्य॑म् । हविः । प्रियम् । देवेषु । गच्छति । विश्व॑स्मात् ।० ॥ १२ ॥

**वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे ।**
**घसत् त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ॥१३॥**

वृषाकपायि । रेवति । सुऽपुत्रे । आत् । ऊं इति । सुऽस्नुषे ।
घसत् । ते । इन्द्रः । उक्षणः । प्रियम् । काचित्ऽकरम् । हविः । विश्व॑स्मात् । ० ॥१३॥

**उक्ष्णो हि मे पञ्चदश साकं पचन्ति विंशतिम् ।**
**उताहमद्मि 'पीव इदुभा' कुक्षी पृणन्ति[2] मे विश्वस्मादिन्द्र उत्तरः ॥१४॥**

उक्षणः । हि । मे । पञ्चदश । साकम् । पचन्ति । विंशतिम् ।
उत । अहम् । अद्मि । पीवः । इत् । उभा । कुक्षी इति । पृणन्ति । मे । विश्व॑स्मात् ।० ॥१४॥

**वृषभो न तिग्मशृङ्गोऽन्तर्यूथेषु रोरुवत् ।**
**मन्थस्त इन्द्र शं हृदे यं ते सुनोति भावयुर्विश्वस्मादिन्द्र उत्तरः ॥१५॥**

वृषभः । न । तिग्मऽशृङ्गः । अन्तः । यूथेषु । रोरुवत् ।
मन्थः । ते । इन्द्र । शम् । हृदे । यम् । ते[3] । सुनोति । भावयुः । विश्व॑स्मात् ।० ॥१५॥

---

१. पीवयदु° K. २. प्रीणंति K. ३. ते P².

न सेशे यस्य रम्बतेऽन्तरा [1]सक्थ्या३ कपृत्[1] ।
सेदीशे यस्य रोमशं निषेदुषो विजृम्भते विश्वस्मादिन्द्र उत्तरः ॥ १६ ॥

न । सः । ईशे । यस्य । रम्बते । अन्तरा । सक्थ्या । कपृत् ।
सः । इत् । ईशे । यस्य । रोमशम् । निऽसेदुषः । विऽजृम्भते । विश्वस्मात् ।० ॥ १६ ॥

न सेशे यस्य रोमशं निषेदुषो विजृम्भते ।
सेदीशे यस्य रम्बतेऽन्तरा सक्थ्या३ कपृद् विश्वस्मादिन्द्र उत्तरः ॥१७॥

न । सः । ईशे । यस्य । रोमशम् । निऽसेदुषः । विऽजृम्भते ।
सः । इत् । ईशे । यस्य । रम्बते । अन्तरा । सक्थ्या । कपृत् । विश्वस्मात् ।० ॥ १७ ॥

अयमिन्द्र वृषाकपिः परस्वन्तं हतं विदत् ।
असिं सूनां नवं चरुमादेधस्यान आचितं विश्वस्मादिन्द्र उत्तरः ॥ १८ ॥

अयम् । इन्द्र । वृषाकपिः । परस्वन्तम् । हतम् । विदत् ।
असिम् । सूनाम् । नवम् । चरुम् । आत् । एधस्य । अनः । आऽचितम् । विश्वस्मात् ।० ॥१८॥

अयमेमि विचाकशद् विचिन्वन् दासमार्यम् ।
पिबामि पाकसुत्वनोऽभि धीरमचाकशं विश्वस्मादिन्द्र उत्तरः ॥१९॥

अयम् । एमि । विऽचाकशत् । विऽचिन्वन् । दासम् । आर्यम् ।
पिबामि । पाकऽसुत्वनः । अभि । धीरम् । अचाकशम् । विश्वस्मात् ।० ॥ १९ ॥

धन्व च यत् कृन्तत्रं च कति स्वित् ता वि योजना ।
नेदीयसो वृषाकपेऽस्तमेहि गृहाँ उप विश्वस्मादिन्द्र उत्तरः ॥२०॥

धन्व । च । यत् । कृन्तत्रम् । च । कति । स्वित् । ता । वि । योजना ।
नेदीयसः । वृषाकपे । अस्तम् । आ । इहि । गृहान् । उप । विश्वस्मात् ।० ॥ २० ॥

पुनरेहि वृषाकपे सुविता कल्पयावहै ।
य एष[2] स्वप्ननंशनोऽस्तमेषि[2] पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥२१॥

---

१. सक्थ्या३क° Bᵇ,K,Kᵐ,V. २. पुषः ऋ १०,८६,२१. ३. स्वप्न नशनो° K; °नाशनो RW.

पुनः । आ । इहि । वृषाकपे । सुविता । कल्पयावहै ।
यः । एषः । स्वप्नऽनंशनः । अस्तम् । एषि । पथा । पुनः । विश्वस्मात् ।० ॥ २१ ॥

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।
क्व१ स्य पुल्वघो मृगः कमगं जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥२२॥

यत् । उदञ्चः । वृषाकपे । गृहम् । इन्द्र । अजगन्तन ।
क्व । स्यः । पुल्वघः । मृगः । कम् । अगन् । जनऽयोपनः । विश्वस्मात् ।० ॥ २२ ॥

पर्शुर्ह नाम मानवी साकं ससूव विंशतिम् ।
भद्रं भल त्यस्या अभूद् यस्या उदरमामयद् विश्वस्मादिन्द्र उत्तरः ॥२३॥

पर्शुः । ह । नाम । मानवी । साकम् । ससूव । विंशतिम् । भद्रम् । भल ।
त्यस्यै । अभूत् । यस्याः । उदरम् । आमयत् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ २३ ॥

---

## ॥ अथ कुन्तापसूक्तानि ॥[2]

**पृष्ठ्यस्य षष्ठेऽहनि** 'इदं जना उप श्रुत' **इति कुन्तापम् अर्धर्चशः शंसति । तत्र प्रथमाश्चतुर्दश ऋचः पदावग्राहं शंसति । तद् उक्तं वैताने**— " 'इदं जना उप श्रुत' इति कुन्तापम् अर्धर्चशः । शतुर्दश पदावग्राहम्" ( वैताश्रौ **३२,१९** ) **इति ।**

**इदं जना[3] उप श्रुत[4] नराशंस स्तविष्यते[5] ।**
**षष्टिं सहस्रा नवतिं च कौरम[6] आ रुशमेषु दद्महे[7] ॥ १ ॥**

**उष्ट्रा[8] यस्य प्रवाहणो[9] वधूमन्तो[10] द्विर्दश[11] ।**
**वर्ष्मा[12] रथस्य[13] नि[14] जिहीडते[15] दिव[16] ईषमाणा[17] उपस्पृशः ॥ २ ॥**

---

१. क्व३ R. २. कुन्तापसूक्तेषु स्वराङ्काभावः J,Cp. ३. जना RW. खि ५,८,१. ४. श्रुत P,RW.; °श्रुतं खि. ५. नाराशंस स्तवि° RW.; °शंस स्तवि° खि. ६. कौरम E,Sm,Dc,Cp; कौरम RW.; कौरव खि. ७. दध्महे E. ८. उष्ट्रा P²; उष्ट्रा R,Dc,Cs. ९. प्रवाहणो B,Bh; प्रवाहणो C,Cs; प्रवाहणो D,E,R,Sm,Dc,P²; प्रवाहिणो RW.; प्रवाहिणो खि ५,८,२ शांश्रौ १२,१४,२. १०. वधूमन्तो B,Bh,C,D,E,R,Sm,Dc, Cs; वधूमतो P²; वधूमन्तोर् Cp; °न्तो RW. खि. ११. द्विर्दश RW. खि. १२. वरिष्मा E; वरिष्मा Cs. १३. रथस्य Sm. १४. न J. १५. जहीडते E; जिहीषते RW.; जिहीलते शांश्रौ.; जिहीळते खि. १६. दिव खि. १७. ईषमाणा P, खि.; ईषमाण RW.

एष इषाय[१] मामहे[२] शतं निष्कान्[३] दश[४] स्रजः[५] ।
त्रीणि शतान्यर्वतां सहस्रा[६] दश गोनाम् ॥ ३ ॥
[७]वच्यस्व रेभ वच्यस्व[७] [८]वृक्षे न पक्वे[८] शकुनः[९] ।
नष्टे[१०] जिह्वा चर्चरीति[११] क्षुरो न[१२] भुरिजोरिव[१३] ॥ ४ ॥[१४]
प्र[१५] रेभासो मनीषा वृषा[१६] [१७]गाव इवेरते[१७] ।
अमोतपुत्रका[१८] [१९]एषाममोत गा इवासते[१९] ॥ ५ ॥[२०]
[२१]प्र रेभ धीं भरस्व[२१] गोविदं वसुविदम् ।
देवत्रेमां [२२]वाचं श्रीणीहीषुर्नावीरस्तारम्[२२] ॥ ६ ॥
राज्ञो विश्वजनीनस्य[२३] यो देवोमर्त्याँ[२४] अति ।
[२५]वैश्वानरस्य सुष्टुतिमा सुनोता[२५] परिक्षितः ॥ ७ ॥
[२६]परिच्छिन्नः क्षेममकरोत् तम[२६] आसनमाचरन्[२७] ।
कुलायन्[२८] कृण्वन्[२९] कौरव्यः पतिर्वदति[३०] जायया ॥ ८

---

१. ईषायं Cs; ऋषये RW. २. मामहे D. ३. निष्कान् खि ५,८,३. ४. दंश C,D,E,R,S^m,Dc,Cs,P^२; दंश खि. ५. स्रजः खि. ६. सहस्रा D,E,S^m,Dc,Cs,P^२. ७. वच्यः स्व रेभ वच्युस्व Cs; °रेभ° S^m; °वच्यस्व S^m,P. ८. वृक्षेणं प° S^m,Cp; वृक्षेनं प° C,D,E,R,Dc,Cs,P,J; °पक्केन C; °पक्के C,E,R,Sm,Dc,Cs,P^२. ९. शकुनः RW. १०. वृष्टे J. ११. चर्चरीति Dc. १२. न C. १३. भुरिजो° C,D,R.Dc,P^२; भूरिंजो° Cs. १४. वच्यस्वे रेभ वच्यस्वे वृक्षे न पक्के शकुनः । ओष्ठे (निष्टे खि. शाश्रौ. ) जिह्वा चर्चरीति क्षुरो न भुरिजोरिव ॥ RW. खि ५,९,१ शाश्रौ १२,१५,१. १५. °प्र D,R, Dc,P^२. १६. वृषा D; वृषा S^m; वृषा Dc; वृथा शाश्रौ १२,१४,४. १७. गाव इवेरते C,D,E,R,S^m,Dc,Cs,P^२. १८. अमोत° C,Cs; अमोत° Dc; अमोत° P; °पुत्रका E. १९. °ममोतकागा इवासते S^m; °ममोतजा इवासते P. † का E,CP. २०. प्र रेभासो मनीषा (मनीषया खि.) वृथा गावं इवेरते । अमोत पुत्रका एषाममोत गा उपासते ( अमोतपुत्रका एषामु मोदका उपासते खि.) ॥ RW. खि ५,९,२. २१. प्ररेभ धीं भ° D; प्ररेभ धीयं भ° E; प्र रेभ धीयं भ° S^m,Cp; प्ररेभधीऽभि° Dc; प्र रेभ धी भं° Cs; प्र रेभ धीयं भ° P^२; प्र रेभ धियं भ° RW. खि ५,९,३ शाश्रौ १२,१४,५. २२. वाचं कृधीषु न वीरो अस्ता RW.; इतः प्रभृति स्वराघात्कयति P; °श्रणीहीषुर्नो वीरास्तारम् खि ५,९,३; °श्रणीही° C,D,S^m, Dc,J. २३. विश्वजनीनस्य RW. खि ५,१०,१. २४. °मर्त्यं D,E,R,Cs. २५. °रस्य सुष्टुतिमा श्रणोता ( सुनोता खि. ) RW. खि. शाश्रौ १२,१७,१. २६. परिछि° C,Dc; परिछिन्न क्षे° D; परिछिन्नीं क्षमं° Cs; परिं छिन्नः° P^२; परिक्षिन्नः क्षेमंमकरत्तम (°करुत्तमं खि.) RW. खि ५,१०,२ शाश्रौ १२,१७,२. २७. आसनंमा सरम् खि. २८. कुलायं RW.; अराय्यं खि. २९. कुर्वन् खि. ३०. पतिर्वदति RW. खि.; °वंदति P.

कुतरत्[1] तु आ हराणि[2] [3]दधि मन्थां परि श्रुतम्[3] ।
जायाः[4] पतिं वि पृच्छति राष्ट्रे राज्ञः परिक्षितः ॥ ९ ॥
अभीवस्वः[5] प्र जिहीते यवः पक्वः पथो[6] बिलम् ।
जनः स भद्रमेधति[7] राष्ट्रे राज्ञः परिक्षितः ॥ १० ॥
इन्द्रः [8]कारुमबूबुधदुत्तिष्ठ[8] वि चरा जनम्[9] ।
ममेदुग्रस्य[10] चर्कृधि[11] सर्व इत् ते पृणादरिः ॥ ११ ॥
[12]इह गावः[12] [13]प्र जायध्वमिहाश्वा इह पूरुषाः[13] ।
इहो [14]सहस्रदक्षिणोपि पूषा[14] नि षीदति[15] ॥ १२ ॥
नेमा[16] इन्द्र गावो [17]रिषन् मो आसां गोप रीरिषत्[17] ।
मासाममित्रयुर्जन[18] इन्द्र मा [19]स्तेन ईशत[19] ॥ १३
[20]उप नो न रमसि[20] सूक्तेन[21] वचसा वयं भद्रेण वचसा वयम् ।
[22]वनादधिध्वनो गिरो[22] न रिष्येम कदा चन ॥ १४ ॥

[23]तं प्रतिगिरेति प्रति कुरुत । (? तं प्रतिगिरति प्रकृतिवद्) ओथामोदैवेति । पञ्चपदा चतुर्दशी । एकेन द्वाभ्यां वा प्रणौति । ( तु. आश्रौ ८,३,११;१२ )

इति नवमेऽनुवाके एकत्रिंशं सूक्तम् ।

---

१. कतरत् C,D,E. २. हेराणि R,$S^m$. ३. दुधि मंथां° R; दधिं मुन्थं परि श्रुतम् RW.; °स्रुतं E,$S^m$,Cp; °मन्थां३ परिस्रुतम् खि ५,१०,३ शांश्रौ १२,१७,३. ४. जाया RW. खि. शांश्रौ. ५. अभीव स्व C; अभीव स्व१ः RW.; अभीव स्वः खि ५,१०,४ शांश्रौ १२,१७,४. ६. पथो D,E,$P^2$, खि.; पुरो RW. ७. °मेथति C; °मेधते RW. खि. ८. °मबूबुध° E,R,$S^m$,Dc,Cs,$P^2$; °दुदतिष्ठ C. ९. जरन् RW. शांश्रौ १२,१५,२; चरन् खि ५,११,१. १०. °दुर्गस्य R,$S^m$,Cs,$P^2$,J,CP; °दुग्रस्य RW. खि. ११. चर्कृतिः D,Dc; चर्कृधिः $S^m$,P; चर्कृधि RW.; चर्कृतिः खि. १२. इहा गा° $S^m$; इह गा° RW. खि ५,११,२. १३. °श्वा इह पूरुषाः C; °श्वा इह पुरुषः D; °श्वा इह पूरुषाः E,R,$S^m$; °श्वा इह पूरुषः Cs,P,J; °श्वा इह पूरुषः $P^2$; °श्वा इह पूरुषाः RW. खि. १४. सहस्र° C,E,$S^m$; सहस्र° D,Cs,$P^2$; °दक्षिणोपि पूषा $S^m$; °यूषा C; °णो वीरस्त्राता खि. १५. °दतु खि. १६. नेमा C,D,E,R,$S^m$,Dc,Cs; मेमा RW. शांश्रौ १२,१५,३. १७. °आसां गोपती रिषत् RW. शांश्रौ.; रिषन् मो आसां गोपती रिषत् खि ५,११,३. १८. मासाममि° RW. खि. १९. स्तेन ईशत् Dc; °ईशत RW. खि. २०. उप नरं नोनुमसि RW.; उप वो नरं एमसि खि ५,११,४; उप वो नर एनमसि आश्रौ. भाष्ये ८,३,१२; °रमसि C. २१. सूक्तेन RW. खि. २२. वनादुधि° C,R,$S^m$,Dc,Cs; वनो दधिष्व नो गिरो RW. खि. २३. यद्यपि 'तं प्रति°' इत्यारभ्य 'षोडशर्चः' इत्यन्तो भागो न संहिताङ्गम्, तथापि E,$S^m$ भिन्नेषु मूको. द्वित्रस्थलेषु स्वरचिह्नानि सन्ति.

'यः सभेयो विदथ्यः' इति षोडशर्चः ।[1]

'यः सभेयो विदथ्यः' एतस्य शंसनप्रकारः पूर्वसूक्ते उक्तः ।

यः सभेयो[2] विदथ्यः[3] सुत्वा[4] यज्वाथ[5] पूरुषः ।
[6]सूर्यं चामू रिशादसस्तद्[6] देवाः प्रागकल्पयन्[7] ॥ १ ॥
यो [8]जाम्या अप्रथयस्तद् यत्[8] सखायं दुधूर्षति[9] ।
[10]ज्येष्ठो यदप्रचेतास्तदाहुरधरागिति[10] ॥ २ ॥
यद् भद्रस्य पुरुषस्य[11] पुत्रो [12]भवति दाधृषिः[12] ।
[13]तद् विप्रो अब्रवीदु तद् गन्धर्वः[13] काम्यं वचः ॥ ३ ॥
यश्च पणि[14] रघुजिष्ठ्यो[15] यश्च देवाँ[16] अदाशुरिः ।
धीराणां [17]शश्वतामहं तदपागिति शुश्रुम[17] ॥ ४ ॥
ये च देवा[18] अयजन्ताथो ये च पराददिः[19] ।
सूर्यो दिवमिव गत्वाय [20]मघवा नो[20] वि रप्शते[21] ॥ ५ ॥
[22]योऽनाक्ताक्षो अनभ्यक्तो अमणिवो अहिरण्यवः[22] ।
अब्रह्मा[23] ब्रह्मणः पुत्रस्तोता[24] कल्पेषु[25] संमिता[26] ॥ ६ ॥[27]

---

१. पूर्वपृष्ठे टि. २३ द्र. २. संभेयो खि ५,१२,१. ३. विदथ्यः C,E; विदुथ्य D; °थ्य१ः RW.; °थ्य३ः खि.; विदथ्र्यः शांश्रौ १२,२०,१. ४. सुत्व Sm; सुत्वा RW. खि.; स्तुत्वा P,P². ५. यज्वा च RW. खि. ६. सूर्यं चामू रिशादश° C; सूर्यं चामू रिशादंश° Dc; सूर्यं चामू रिशादंश° P²; सूर्यं वामू° Cp; सूर्यं चामुं (°र्यं चामू खि.) रिशादसं तद् RW. खि. ७. प्रागर्क° Cs. ८. °अप्रथय° E; °अप्रथय° C,D,R,Sm,P²; °अमेथयुयत् RW.; °म्या३ः प्रत्यमदधः खि ५,१२,२; °अप्रथयत्तद्यत् शांश्रौ १२,२०,३. ९. दुर्धूरिषति C,E,P,P²; निनित्सति खि. १०. ज्येष्ठाय यदप्रचेतास्तदाहुरधरागिति RW.; °यदप्रचेतास्तदाहुरधरागिति खि. ११. पूरुषस्य P. १२. भवति दाधृषिः RW.; भवति दाधृषिः खि ५,१२,३. १३. तद्विप्रो अब्रवीदुदग्ग° RW.; °प्रो अब्रवीदुदग्गन्धर्वः खि.; तद्विप्रो अब्रवीदुगद्गं° P. १४. पणो E,J; पर्णी Dc. १५. °रघुजिष्ठो RW.; रघुजिष्ठ्यो३ खि ५,१२,४ शांश्रौ १२,२०,४; °जिष्ठ्यो C,D,P,J,Cp; °जिष्ठ्यो Dc,Cs. १६. देवाँ RW. खि. शांश्रौ. १७. शश्वतामहु तदपा° RW. शांश्रौ.; °महं तदपागिति शुश्रुव खि. १८. देवाँ RW. १९. परादुदुः RW. खि ५,१२,५ शांश्रौ. २०. मघवानो खि. शांश्रौ १२,२०,५. २१. रप्शन्ते RW. २२. °क्ताक्ष्यो अनभ्यक्तो३ मणिवो° खि ५,१२,१; °वोहिरण्ययः J; °अहिरण्ययः D. २३. अब्रह्म Cs. २४. पुत्रः (°त्रं Cs.) स्तोता C,Cs,R,Sm,P,P²,J. २५. कल्पेषु E; कल्पेषु P². २६. संमिता C; संमिता P². २७. योऽनाक्ताक्षो अनभ्यक्तो अमणिरहिरण्यवान् । अब्रह्मा ब्रह्मणः पुत्रस्तो ता कल्पेषु संमिता RW.; °अब्रह्माब्रह्मणः पुत्रस्तो ता कल्पेषु संमिता खि. शांश्रौ १२,२१,१.

य आक्ताक्षः सुभ्यक्तः सुमणिः[1] सुहिरण्यवः[2] ।
सुब्रह्मा ब्रह्मणः पुत्रस्तोता कल्पेषु[3] संमिता[4] ॥ ७ ॥[5]

अप्रपाणा[6] च वेशन्ता[7] रेवाँ अप्रतिदिश्ययः[8] ।
[9]अयभ्या कन्या कल्याणी तोता कल्पेषु संमिता[9] ॥ ८ ॥

सुप्रपाणा[10] च वेशन्ता रेवान्त्सुप्रतिदिश्ययः[11] ।
[12]सुयभ्या कन्या[12] कल्याणी [13]तोता कल्पेषु संमिता[13] ॥ ९ ॥

परिवृक्ता च [14]महिषी स्वस्त्या च युधिंगमः[14] ।
[15]अनाशुरश्चायामी तोता[15] [16]कल्पेषु संमिता[16] ॥ १० ॥[17]

वावाता[18] च महिषी स्वस्त्या च युधिंगमः[19] ।
[20]श्वाशुरश्चायामी तोता[20] [21]कल्पेषु संमिता[21] ॥ ११ ॥[21]

१. समंणिः C. २. सुहिरण्यवः C; सुहिरण्ययः D,J. ३. कल्पेषु P[2]; कल्पेषु E. ४. संमिता C; संमिता P[1]. ५. य आक्ताक्षः स्वभ्यक्तः सुमणिः (°क्ताक्ष्यः स्वभ्यक्तः सुमणिः खि.) सुहिरण्यवान् (सुहिरण्यवः खि. शांश्रौ.) । सुब्रह्मा ब्रह्मणः पुत्रस्तो ता कल्पेषु संमिता RW. खि ५,१३,२ शांश्रौ १२,२१,२. ६. अप्रपाणा RW. खि ५,१३,३. ७. वेश्यन्ता Cs. ८. अप्रतदिष्ठयः D; अप्रतदिश्ययः E,Sm,Dc; अप्रतिदिश्ययः P[1]; अप्रदद्दिश्च यः RW. शांश्रौ १२,२१,३; अप्रचतिश्रयः खि. ९. अयभ्या कन्या° Sm,Dc,Cs, खि.; °कन्याकल्याणी तो (त्वौं खि.) ता कल्पेषु संमिता RW. खि. शांश्रौ.; °षु संमिता P. १०. सुप्रपाणा RW. खि ५,१३,४. ११. °सुप्रतदिष्टयः D; °सुप्रतदिश्ययः E; °सुप्रतदिश्ययः Sm; °सुप्रतदिश्ययः Dc; सुप्रतिदिश्ययः P[2]; °सुप्रददिश्च यः RW. शांश्रौ १२,२१,४; रेवाँ सुप्रचतिश्रयः खि. १२. सुयभ्या कन्या° Sm,Dc,Cs, खि. १३. तो (त्वौं खि.) ता कल्पेषु संमिता RW. खि. शांश्रौ.; °कल्पेषु° E; °षु संमिता P[2]. १४. °युधिंगमः R.; महिष्यनस्त्या चायुधिंगमः शांश्रौ १२,२१,५. १५. अनाशुर° C; अनाशुर° D; अनाशुर° Dc; अनाशुरश्चा° Sm; °रश्चायामी तो ता शांश्रौ. १६. कल्पेषु संमिता P[2]. १७. परिवृक्ता च महिषी स्वस्त्या चायुधिंगमः (च युधिंगमः खि ५,१३,५) । अनाशुरश्वोऽयामी तो (श्वाशुरश्च आयामी त्वौं खि.) ता कल्पेषु संमिता ॥ RW. खि. १८. वावाता C,E,R,Sm,Dc,Cs,P[2]. १९. युधिंगमः R. २०. श्वाशुर° C; श्वाशुर° D,R; श्वाशुरश्चा° Sm; श्वाशुर° Cs; श्वासुर° E,P,P[1]; °रश्वा यामी तो ता शांश्रौ १२,२१,५. २१. वावाता च महिषी स्वस्त्या च युधिंगमः । स्वाशुरश्वः सुयामी तो ता कल्पेषु संमिता RW.; वावाता च महिष्वणिस्या च युधिंगमः । अनाशुरश्च आयामी त्वौं ता कल्पेषु संमिता खि ५,१३,६.

यदिन्द्रादो[1] [2]दाशराज्ञे मानुषं वि गाहथाः[2] ।
[3]विरूपः† सर्वस्मा आसीत् सह यक्षाय‡ कल्पते[3] ॥ १२ ॥

[4]त्वं वृषाक्षुं मघवन्नम्रं मर्याकरो रविः[4] ।
त्वं रौहिणं[5] व्यास्यो[6] [7]वि वृत्रस्याभिनच्छिरः[7] ॥ १३ ॥

यः पर्वतान् व्यदधाद्[8] यो [9]अपो व्यगाहथाः[9] ।
[10]इन्द्रो यो वृत्रहान्महं तस्मादिन्द्र[10] नमोऽस्तु ते ॥ १४ ॥

[11]पृष्ठं धावन्तं हर्योरौच्चैःश्रवसमब्रुवन्[11] ।
स्वस्त्यश्व[12] जैत्रायेन्द्रमा [13]वह सुस्रजम्[13] ॥ १५ ॥

ये [14]त्वा श्वेता[14] अजैश्रवसो हार्यो युञ्जन्ति[15] दक्षिणम्[16] ।
पूर्वा नमस्य [17]देवानां बिभ्रदिन्द्र महीयते ॥ १६ ॥[18]

इति नवमेऽनुवाके द्वात्रिंशं सूक्तम् ।

---

१. यादीयंदो Sm; यदिंद्रादो P². २. °ज्ञेऽमानुषं विगाहथाः RW. खि ५,१४,१ शांश्रौ १२,१५,५; °मानुषं° Dc; °गाहथः P. ३. वरुधं सर्वस्मा आसीत् स ह यक्ष्माय कल्पते RW.; °आसीत्सहगंक्षाय वक्ष्यते खि.; °स ह यक्ष्माय पत्यते शांश्रौ. † विरूपः D,E. ‡ यक्षाय Cs,P,J. ४. त्वं वृथाषाणमघवन्नम्रं मर्याकरो रुजिम् RW.; त्वं विषाक्षं मघवन्नम्रं पर्याकरोरभि खि ५,१४,२; °वृक्षाक्षुं मघ° C; वृषाक्षुं मघ° D,E; वृषाक्षं मघ° Dc; वृषाक्षुं मघ° R,Sm,Cs,J,Cp; °मर्याकरो° R,Dc,Cs; °करोरपि शांश्रौ १२,१६,१; °मर्याकरो° P; °नर्या° C. ५. रौहिणं C,E,R,P²; रौहिणं Sm; रौहिणं° D. ६. व्याऽस्यो Cs; वास्यो P; वाऽस्यो P²; व्यास्यंस् खि. ७. विवृत्र° C; वि वृत्रस्याभिनच्छिरः RW.; त्वं वृत्रस्याभिनच्छिरः खि. ८. न्यदधाद् D; न्यदधाद् R,Cs,J; व्यादधाद् Dc; न्यदधाद् Cp.; व्यदधा RW. ९. अपो हर्या गाहथाः Cs; °व्यगाहथाः Sm,RW. खि ५,१४,३. १०. इन्द्रावो° D; °वृत्रहा महान्त° RW.; यो वृत्र वृत्रहब्रहन् तस्मा इन्द्र खि. ११. पृष्ठं° C,E; पृष्टं° D,R,Cp; पृष्टं° Dc; पृष्ठ धावन्त ह° Cs; प्रष्टि धावन्तं हर्योरौ° RW. खि ५,१४,४ शांश्रौ १२,१६,२; °धावन्त° Sm; °रुच्चैश्र° C,D,E,R,Cs,P,P²,J; °च्चैश्रवसमब्रुवन् Sm; °मब्रवन् R; °मब्रवम् खि. १२. स्वस्त्यश्व C,Dc,Cs,P,P²; स्वस्त्यश्वा Sm; स्वस्त्यश्व RW. १३. वहतो रथम् खि. १४. त्वा श्वेता C,D,E,R,Sm,Dc,Cs. १५. युजति R,Cs; युंजंति Dc. १६. दाक्षिणां D. १७. देवानां D,E,Sm,P². १८. युक्त्वा श्वेता औच्चैःश्रवसं हर्योर्युञ्जन्ति दक्षिणम् । पूर्वतमं स देवानां बिभ्रदिन्द्रं महीयते RW.; यत्वा श्वेता उच्चैःश्रवसं हर्योर्युञ्जन्ति दक्षिणम् । मूर्धानमंश्वं देवानां बिभ्रदिन्द्रं महीयते खि ५,१४,५.

"[1]एता अश्वा[1] आ प्लवन्ते' इति षट्सप्तत्यष्टादशपदान्त्यः[2] [3]प्रणवत्यष्ट प्रति त्वा[3]।

'एता अश्वा आ प्लवन्ते' (अ २०,१२९) इत्यादि 'नीलशिखण्डवाहनः' (अ २०,१३२) इत्यन्तम् ऐतशप्रलापाख्यं षट्सप्ततिपादसमुदायं पदावग्राहं सूत्रोक्तप्रकारेण शंसति। तद् उक्तं वैताने—"'एता अश्वा आ प्लवन्ते' इत्यैतशप्रलापं पदावग्राहम्। तासामुत्तमेन पदेन प्रणौति" (वैताश्रौ ३२,२०) इति।

[4]एता अश्वा[4] आ प्लवन्ते ॥ १ ॥ प्रतीपं[5] [6]प्राति सुत्वनम्[6] ॥ २ ॥

तासामेका हरिक्निका[7] ॥ ३ ॥ [8]हरिक्निके किमिच्छसि[8] ॥ ४ ॥

साधुं[9] पुत्रं हिरण्ययम्[10] ॥ ५ ॥ क्वाहतं[11] परास्यः ॥ ६ ॥

यत्रामूस्तिस्रः[12] शिंशपाः[13] ॥ ७ ॥ [14]परि त्रयः[14] ॥ ८ ॥

पृदाकवः ॥ ९ ॥ [15]शृङ्गं धमन्त आसते[15] ॥ १० ॥

[16]अयन्महा ते[16] अर्वाहः[17] ॥ ११ ॥ [18]स इच्छकं सघाघते[18] ॥ १२ ॥

सघाघते[19] गोमीद्या गोगतीरिति[20]। १३[21]। [22]पुमां कुस्ते निमिच्छसि[22] ॥ १४ ॥

---

१. एताश्वा D. २. षट्सप्तयष्टा° D; षट्सप्ताष्टा° E,P²; षट्सप्ता अष्टादशपदां Sm; °दशः पदान्त्यः J; °पदात्यः R; प्रतिपादं संख्यामनङ्कयित्वा प्रतिमन्त्रार्धं संख्यामङ्कयन्ति D,E,Cp. ३. प्रणवतावः। ष्ट प्रति त्वा Sm. ४. एताश्वा D; °अश्वा C. ५. प्रतीपं C,D,E,P²; प्रतीपं R,Sm. ६. प्रातिसुत्वनम् RW.; प्रातिसत्वनम् खि ५,१५,१; प्रातिसुत्वनम् शांश्रौ १२,१८,२. ७. हरिक्लिका C,P; हरिकिका Cs; हरिक्णिका RW.; हरिक्लिका खि. शांश्रौ १२,१८,३. ८. हरिक्नि° D; हरिक्लिके किमि° C; हरिक्रिके° Dc; हरिक्णिके° RW.; हरिक्लिके° खि. शांश्रौ १२,१८,४. ९. साधुं C,E,R,Sm,Dc,Cs; सुधुं D; साधु° P,P²,J,Cp. १०. हिरण्मयं C,P, हिरण्ययम् खि ५,१५,२. ११. क्वाहतं D,E,R,Sm,Cs,P²; क्राहु तं RW.; क्राह तं खि. शांश्रौ १२,१८,६. १२. °स्तिस्रः P²,RW. खि. १३. शिंशपाः C,D,E,R, Sm,Dc; शिंशपाः P²; शिंशपाः RW. खि. १४. परि त्रयः RW. खि. १५. शृङ्गं धमन्त आसते RW. खि ५,१५,३. १६. अयन्म° Sm,Dc; °न्महते C; °न्महते P,J; अयमिहागतो RW.; अयं वहाते खि. १७. अर्वा RW.; अवहि खि. १८. स हि छकं° C,Cp; स इत्सकं° E,Cs; स इत्सकं° R; स हि छकं° Sm; स इं छकं° Dc; स छकं सघागते P²; स इत्सकं सघागते J; स इच्छका शायते RW.; सं इत्थ कं सं एव कम् खि. १९. सघाघते C; सघाघमे D,P; सघागते J; सं घा घ ते संघा घ मे खि. २०. गोमती° Sm; गोपती° Dc; गोगति° J; गोमी घ गोमिनीरभि खि ५,१५,४. २१. गोमयाद्गोगतिरिव RW. २२. पुमांकुस्ते° C,E,Sm,Cp; पुमांकुस्ते° D; पुंसां कुले किमिछसि RW.; पुमां भूस्रे निनित्ससि खि.

[2]पल्प बद्ध वयो[1] इतिं ॥ १५ ॥[2] बद्धं[3] वो अघा इतिं[4] ॥ १६ ॥[5]

[6]अजागार केविका[6] ॥ १७ ॥ [7]अश्वस्य वारो[7] गोशपद्यके[8] ॥ १८ ॥

श्येनीपती[9] सा ॥ १९ ॥[10] अनामयोपजिह्विका[11] ॥ २० ॥

इति नवमेऽनुवाके त्रयस्त्रिंशं सूक्तम् ।

को अयं बहुलिमा[12] इषूनि[13] ॥ १ ॥[14] को असिद्याः[15] पर्यः[16] ॥ २ ॥

को अर्जुन्याः[17] पर्यः ॥ ३ ॥ कः कार्ष्ण्याः[18] पर्यः ॥ ४ ॥

[19]एतं पृच्छ[19] [20]कुहं पृच्छ[20] ॥ ५ ॥ कुहाकं[21] पक्वकं पृच्छ ॥ ६ ॥[22]

[23]यवानो यतिस्वभिः कुभिः[23] ॥ ७ ॥ [24]अकुप्यन्तः कुपायकुः[24] ॥ ८ ॥

आमणको[25] मणत्सकः[26] ॥ ९ ॥ [27]देव त्वप्रतिसूर्य[27] ॥ १० ॥

एनश्चिपङ्क्तिका[28] हविः ॥ ११ ॥[29] प्रदुद्रुदो[30] मघाप्रति[31] ॥ १२ ॥

१. ययो Dc; वायो P². २. पुक्नो व्रीहियुवा इतिं RW.; बल्बयथो इति खि ५,१५,४. ३. बद्ध Sm,P². ४. °यतिं R,J; य इति P. ५. व्रीहियुवा अघा इतिं RW.; बल्बयो अंथो इति खि. ६. अजगर ईवाविका: RW.; अजकोऽरंकोऽविका खि ५,१५,५. ७. अश्वंरथवारो E; °स्य वासें Sm; अश्वस्य वारो खि. ८. गोशफद्यके Sm,Cp; गोशफद्यके Dc; गोशुपद्यके Cs; गोशफश्च ते RW.; गोः शफः खि. ९. श्येनपर्णी RW. १०. केशिनी श्येनी एनीव खि. ११. अनामयोप° C,R,Sm,P²; °योपुजिह्विका RW.; अनामयोपजिह्विका खि. १२. बहुलिमा Dc. १३. इषुनि D; इष्णुनि P. १४. को अपावहदिमा दुग्धानि RW.; कों अम्ब हुलमायुनि खि ५,१५,६. १५. असिद्याः R; असिद्याः Dc,Cs; असिक्न्याः RW. खि. १६. पर्यः E. १७. अर्जुन्याः C; अर्जुन्याः D,R; अर्जुन्याः E,Sm; अर्जुन्याः Dc,Cs. १८. कार्ष्ण्याः RW. १९. एतं पृछ C.D,E,R, Sm,Dc,Cs, खि. २०. कुहं पृछे RW. २१. कुहा कं खि ५,१५,७. २२. कुहाकं पक्वकं पृछ Sm; कुहाकुं पक्वकं पृछ Dc; कुहाकं पुक्वकं पृछ Cs; कुहाकं पक्वकं पृछ P²; कुहा कं पक्वकं पृछे RW. २३. यवा वो° C; यवा नो यति स्वभिः कुभिः Dc; यवा नो° Cs; यवा वोपं तिष्ठन्ति कुक्षिम् RW.; यं आयन्ति श्वभिष्कुभिः खि. २४. अकुप्यतः कुपायकु Cs; °कुपायकु J; °कुपायवः RW.; अंजन्तः कुमायव: खि. २५. आमणत्को D; अमणिका RW.; आमनको खि. २६. मणच्छकः C,P,P²; मणत्सकः D; मणत्सखः Sm; मणिच्छदः RW.; मनस्यकः खि. २७. देव त्वप्रति सूर्य Sm; देवत्वा प्रति सूर्यम् RW.; देवत्तः प्रतिजूर्यः खि ५, १५,८. २८. °पक्तिका E,J. २९. एनी हरिक्णिका हरिः RW.; पिनष्टि पर्तिका हविः खि. ३०. प्रदुद्रुदो C,D,E,R; प्रदुद्रुदो Sm,P²; प्रदुद्रुदो Dc; प्रदुद्रुदः RW.; प्र दुद्रुदो खि. ३१. मघा प्रति Dc; मघा प्रतिं RW.; मघायति खि.

